❀ आर्षं ❀

# पाणिनीयं व्याकरणम्



उणादि-पाणिनीयशिक्षा-गणपाठ-धातुपाठ-लिङ्गानुशासन-फिट्सूत्र-परिभाषापाठैः प्रपूरितं चतुर्विधलक्ष्यसूचिभिः सूत्रधातुसूचिभ्यां च समलङ्कृतम्

"पटनाकौलेज" नाम्नि महाविद्यालये व्याकरणशास्त्रप्रधानाध्यापकेन

**पण्डितश्रीहरिशङ्करशर्मपाण्डेयेन सङ्कलितम् ।**

— तथा —

**पण्डितश्रीचन्द्रकान्तशर्मपाण्डेयेन व्याकरणाचार्येण**

"यूनाइटेड प्रेस" नाम्नि मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।





मूल्यम् २॥)

# ĀRSHAṂ
# PAṆINĪYAM VYĀKARAṆAM



With Uṇadi, Paṇinīya Śikshā, Gaṇapāṭha,
Dhātupāṭha, Lingānuśāsana, Fitsūtra
and Paribhāshāpāṭha and indices
of examples of four kinds,
Sūtrās and Dhātus.

BY

**Pandit Harisankara Pandeya,**
*Professor of Sanskrit, Patna College*




PUBLISHED BY

**Pandit Chandrakanta Pandeya, Vyakaranacharya**



**Price Rs. 2/12/-**

various domains connected therewith. In most of the centres of Sanskrit learning in the north of India, on the other hand, I note with despair the gradual deterioration of the study of Sanskrit. It is time for those entrusted with the teaching of Sanskrit to take note of this disquieting depreciation, investigate the reasons and adopt remedial measures before it is too late.

According to some scholars, this defect is due to the substitution of Siddhāntakaumudī for Aṣṭādhyāyī in our curricula of Sanskrit studies. Professor Hari-Śaṅkara Pāṇḍeya of Patna College is an eminent teacher of Sanskrit grammar with extensive experience. He has edited the Aṣṭādhyāyī as a practical demonstration of his firm conviction that the deterioration in the knowledge of Sanskrit among the students of to-day and the waste involved can be traced to the neglect of the Aṣṭādhyāyī. It is now for scholars to judge. I highly appreciate the excellent editing, and I earnestly appeal for a dispassionate examination of the learned author's special pleading in favour of Pāṇini's original work.

**A. BANERJI-SASTRI,**
Vidyābhūṣaṇa, M.A. (Cal.),
D. Phil. (Oxon.)
*Head of the Department of Sanskrit,*
**Patna College.**

*Sanskrit Seminar,*
**Patna College,**
*August 4, 1938.*

# पुस्तकस्थविषयानुक्रमणी।




| | विषयः। | | पृष्ठात्पृष्ठं यावत्। |
|---|---|---|---|
| १. | पाणिनीयमाहात्म्यम् | .... | १—१० |
| २. | पाणिनीयं व्याकरणम् | .... | १—३४४ |
| ३. | उणादिप्रकरणम् | .... | १—३१ |
| ४. | पाणिनीयशिक्षा | .... | १—३ |
| ५. | गणपाठः | .... | ४—३७ |
| ६. | धातुपाठः | .... | १—२२ |
| ७. | लिङ्गानुशासनम् | .... | १—३ |
| ८. | फिट्सूत्राणि | .... | १—५ |
| ९. | परिभाषापाठः | .... | १—३ |
| १०. | लक्ष्यसूचिः | .... | १—१८२ |
| ११. | उणादिलक्ष्यसूचिः | .... | १—१३ |
| १२. | लिङ्गानुशासनलक्ष्यसूचिः | .... | १—८ |
| १३. | फिट्सूत्रलक्ष्यसूचिः | .... | १—३ |
| १४ | अष्टाध्यायीसूत्रसूचिः | .... | १—४६ |
| १५. | धातुसूचिः | .... | १—२० |

गुरुदेवपदाम्भोजं पूजयन् हृदि मन्दिरे ।
पाणिनीयस्य शास्त्रस्य माहात्म्यं वक्तुमुत्सहे ॥१॥
आर्षस्य पाणिनीयस्य गुणा व्याकरणस्य ये ।
तानाकर्णयितुं धीराः कर्णौ कुरुत सज्जितौ ॥२॥
मानुषं स्वल्पमायुष्यं पाठ्यशास्त्राण्यनेकशः ।
वीक्ष्य संक्षेपणे यत्नो लोकानुग्रहतो मुनेः ॥३॥
कण्ठस्थीकरणं श्रेयः सूत्राणामिति चिन्तयन् ।
अतिसंक्षिप्तरूपाणि पाणिनिस्तानि निर्ममौ ॥४॥
चतुर्दशानां सूत्राणामन्ते यदनुबन्धनम् ।
पाणिनेः प्रतिभोत्कर्षः कियानितिनिदर्शनम् ॥५॥
अनेन सदुपायेन द्वाचत्वारिंशतः पुनः ।
अलादिप्रत्याहाराणां कौतुकेन प्रदर्शनम् ॥६॥
अर्धमात्रापि सूत्राणां न निरर्थास्ति पाणिनेः ।
इत्युक्तवान् महाभाष्ये परमार्थं पतञ्जलिः ॥७॥
लघिष्ठमपि सम्पूर्णं वर्णैरर्थैर्यथाक्रमम् ।
पाणिनीयमिदं शास्त्रं कथं केनोपमीयताम् ॥८॥
गुरुतामेव हरता छात्राणां घोषणश्रमे ।
श्राम्यता च स्वयं तेन सूत्रेषु लघुतार्पिता ॥९॥
महर्षिवर्येण तपोबलेन कृतेषु सूत्रेषु कियन्महत्त्वम् ।
न वक्तुमीशोऽस्मि तथापि तस्य कृपालवानेव हृदावलम्बे ॥१०
महामहिम्नामपि ये वरेण्यास्तेषामभूत् पाणिनिरुग्रवीर्यः ।
कश्चिन्मुनिस्तेन महाश्रमेण तेनेऽद्भुतं व्याकरणं लघीयः ॥११॥

कस्यापि देवस्य दयाभिरेव समुज्ज्वलेच्चेत्प्रतिभातिदिव्या ।
तदैव लोकानुपकर्त्तुमीदृग्ग्रन्थात्मना वागवतारमेति ॥१२॥
तपोभिरुग्रैः परितोषितस्य कृपाकटाक्षेण महेश्वरस्य ।
सूत्राणि संक्षिप्ततमाक्षराणि महर्षिणा पाणिनिना कृतानि ॥१३॥
कान् गुणान् परमान् वीक्ष्य पाणिनेः सूत्रगामिणः ।
तत्सेवार्थमभून्मुग्धो भाष्यकारः पतञ्जलिः ॥१४॥
तानि सूत्राण्यधीयानाः पूर्णार्थानि यथाक्रमम् ।
रहस्यं सुरभाषायाः प्रपद्यन्तेऽचिरश्रमम् ॥१५॥
संक्षिप्तरमणीयानि सूत्ररत्नानि पाणिनेः ।
गलेऽन्तर्धारणीयानि गुम्फितानि यथाक्रमम् ॥१६॥
सूत्राणां क्रमभेदेन यास्त्यनर्थपरम्परा ।
तां न वक्तुं क्षमः क्षीणोऽनुभवामि पदे पदे ॥१७॥
वैज्ञानिकेन विधिना विविधैः प्रयत्नैः
पूर्णोपकारमनसा मुनिना कृतो यः ।
सूत्रक्रमः स कमनीयतमोऽपि लोके
हा साम्प्रतं पठनपाठनतो निरस्तः ॥१८॥
यच्छास्त्रं वटुभिर्दिनैः कतिपयैः क्रीडामनस्कैरपि
स्वाचार्याश्रमवासिभिः सरलया रीत्या पुराधीयते ।
गुर्वर्थं परिपूर्णमुत्तमतया संक्षिप्तकायं च यत्
तत्कीदृग् विपरीतरूपमधुना हा हन्त जोघुष्यते ॥१९॥
अतिसंक्षिप्तरूपं यत्कृतं शास्त्रं महर्षिणा ।
तदेव दैवयोगेन महाविस्तृतिमाप्तवत् ॥२०॥
सर्वेषामेव शास्त्राणां मुखं व्याकरणं स्मृतम् ।
तस्यावश्याधिगम्यत्वं क्वापि शास्त्रे प्रवेक्ष्यताम् ॥२१॥
तदिदानीं महाकायं भीमरूपं गृहीतवत् ।
यद् दृष्ट्वा प्रपलायन्ते बालाः कोमलबुद्धयः ॥२२॥
योऽप्याग्रहेण पठति पाणिनिक्रमवर्जितम् ।
तदवश्यं स सम्पूर्णं यापयत्यत्र जीवितम् ॥२३॥

तथापि न च लक्ष्याणां लक्षणानां परिग्रहः ।
अवश्याध्येयशास्त्राणां परित्यागस्तु निश्चितः ॥२४॥
सूत्रवार्त्तिकभाष्याणि लक्ष्यसाधनसिद्धये ।
प्रमाणानीति सर्वेषां मतिरेका विपश्चिताम् ॥२५॥
तानि मूलान्यनभ्यस्य टीकाध्ययनतत्पराः ।
शास्त्रान्तरस्पर्शशून्या जायन्ते पण्डितब्रुवाः ॥२६॥
आरभ्य लघुकौमुद्या महाभाष्यनवाह्निकम् ।
यावदेव पठन्तोऽद्य नयन्ति पुरुषायुषम् ॥२७॥
शब्दानामनुशासनस्य भगवान्यद्भाष्यकारोऽब्रवीत्
वेदानां परिपालनं फलमहो तत्क्वापि दूरे गतम् ।
ऊहः खल्वपि मन्त्रवाक्यविषयस्तस्याधुना का कथा
सर्वाण्येव फलानि गर्त्तपतितान्युक्तानि तेनाग्रतः ॥२८॥
अष्टकं पाणिनेस्त्यक्त्वा महाभाष्यं पतञ्जलेः ।
वैयाकरणतां लब्धुं मुधा मुग्धाभिलाषिना ॥२९॥
भो भो धीरा धियं स्वां श्रमयथ न मनागात्मजानां निजानां
छात्राणामित्थमायुः क्षपयथ वितथं व्युत्क्रमं पाठयन्तः ।
या रीतिः पाणिनीयातिविशदसरला लाघवप्राणमूला
सूत्राणां तां त्यजन्तः क्रमरहिततया वृत्तिमुद्घोषयन्तः ॥३०॥
त्र्यक्षरस्यापि सूत्रस्य पञ्चत्रिंशन्मिताक्षराम् ।
सूत्रवद् वृत्तिमुद्घुष्य व्यर्थं जीवनयापनम् ॥३१॥
अयि विद्वद्वरा धीरा निजशिष्यायुषः क्षयम् ।
रात्रिन्दिवं जायमानं मनागपि न पश्यथ ॥३२॥
तस्मात्क्रमेण सूत्राणि पठनीयानि यत्नतः ।
अनुवृत्त्यादिसौकर्यात्तदर्थोऽपि न दुर्ग्रहः ॥३३॥
स्थूलाक्षराणि सूत्राणि कण्ठे स्थाप्यानि सक्रमम् ।
सूक्ष्माक्षराणि लक्ष्याणि निरीक्ष्याण्यवधानतः ॥३४॥
यत्र यत्र समपेक्षितं क्वचिद् बोधनाय पठनार्थिनां कृते ।
तत्र तत्र विनिविष्टसंख्ययाधस्तनी विवृतिरत्र दर्शिता ॥३५॥

पाणिनीयकमनीययोजनाभङ्गदोषमपचर्य पण्डितैः ।
सूत्रपूर्वपरबुद्धिरोधिका नेत्रयोर्जवनिकेव पातिता ॥३६॥
सूत्राणां क्रमविन्यासो रुचिरं मुनिना कृतः ।
निरीक्ष्यतां सावधानं पूर्णं च परितुष्यताम् ॥३७॥
संज्ञानां परिभाषाणां पूर्वाध्याये प्रदर्शनम् ।
समासाश्च विभक्त्यर्था द्वितीयाध्यायगोचराः ॥३८॥
तृतीये धातुविहिताः प्रत्ययाः सुव्यवस्थिताः ।
तुर्यपञ्चमयोरुक्ता अवशिष्टाश्च ते क्रमात् ॥३६॥
षष्ठे प्रकृतिकार्याणि प्रायेणादर्शयन्मुनिः ।
सप्तमे प्रत्ययस्थानि द्विष्ठानि च यथाक्रमम् ॥४०॥
अष्टमे पूर्वचरणे पदकार्यं समासतः ।
यान्यसिद्धानि पूर्वत्र त्रिपाद्यां तान्यवेशयत् ॥४१॥
कृत्वा पूर्णमनोयोगं शिष्यप्रियचिकीर्षया ।
पाणिनीयमिदं पाठ्यं गुरुभिः करुणार्णवैः ॥४२॥
पाणिनीयपठनाय पाणिनेर्यः क्रमः स न कदापि हीयताम् ।
वृत्तिघोषणमहापरिश्रमान्मुक्तिरेव फलमस्य दृश्यताम् ॥४३॥
लघुना सदुपायेन शब्दौघप्रतिपत्तये ।
कृतं व्याकरणं न स्यात्क्रमत्यागे यथेप्सितम् ॥४४॥
तस्मात्क्रमोऽवश्यमेव नोज्झितव्यः कदाचन ।
लक्ष्यबोधानुरोधेन पण्डितैः सूक्ष्मवीक्षितैः ॥४५॥
लक्ष्यलक्षणविज्ञानं पूर्णं व्याकरणं स्मृतम् ।
तदेवेदं मयादर्शि नूत्नरूपं प्रयत्नतः ॥४६॥
अनेन पाणिनीयेन लघुनार्थगरीयसा ।
जायतेऽल्पेन कालेन लक्ष्यलक्षणविज्ञता ॥४७॥
यो ग्रन्थः शब्दशास्त्रस्य मूलभूतश्चिरन्तनः ।
तस्यैवाध्ययने ध्यानं नार्पयन्त्यद्य पण्डिताः ॥४८॥
सिद्धान्तकौमुदीस्नेहं हृदये यं बिभर्म्यहम् ।
न च तं वक्तुमीशोऽस्मि प्रमाणं स्वायुरर्पितम् ॥४६॥

विद्वद्वरेण्येन महाश्रमेण भट्टोजिना दीक्षितवंशजेन ।
लक्ष्यानुसारं विहितावतारा न कौमुदी कस्य कृतोपकारा ॥५०॥
इयं सुदेवीव तपोभिरुग्रैरुपासिता पूरयतेऽभिलाषम् ।
गुरोः कृपां वा परमेश्वरस्य विना खलः खेलति यावदायुः ॥५१॥
इयं सुरम्या विदुषां हृदन्तर्गता प्रचारं निखिलासु दिक्षु ।
न संशयोऽस्यां पुरुषायुषाणि परन्तु नश्यन्ति वृथार्पितानि ॥५२॥
दैक्षिती कृतिरियं प्रचारिता कालयापनपरा न संशयः ।
पाणिनेरतितरां तपस्यया साधितं फलमलोपयत्तमाम् ॥५३॥
महासमुद्रोपमभीषणानां शब्दागमानां प्रचलत्प्रवाहे ।
निमज्जतां व्याकुलबालकानां पोतोपमं पश्यत पाणिनीयम् ॥५४॥
निरीक्ष्यतां पाणिनिना प्रदर्शितक्रमान्वितं व्याकरणं कृपालवः ।
विधीयतां भाविकुलाङ्कुरायुषां सुरक्षणे चापि परः कृपालवः ॥५५॥
यावत्फलं दीक्षितनिर्मितेन ग्रन्थेन विस्तीर्णतमेन लभ्यम् ।
तावत्तदर्धार्धवपुर्धरेण विलोक्यतां विज्ञवरैरनेन ॥५६॥
दृश्यतां यदि परोपकारिता वर्त्ततेऽत्र भवतां सदीक्षणे ।
न्यस्यतां त्वरितमेव हस्तयोर्व्यस्यतां च विफलो दुराग्रहः ॥५७॥
भ्रातृवृन्द भवदीयभावुकप्रेमपात्रतनयायुषां मया ।
रक्षणाय विहितः परिश्रमः प्रेक्षणाय दृगिहार्प्यतां क्षणम् ॥५८॥
प्रहृष्यतां वा परिहस्यतां वा निरीक्ष्य मे ग्रन्थमिमं बुधेन्द्रैः ।
न तत्र मे हर्षविषादलेशः प्रतन्यते तत्तनयार्थमेषः ॥५९॥
विद्वद्वराणां सुविवेचकानां लब्ध्वा कराम्भोजनिवेशमेषा ।
कृतिर्मदीया सुकृतेन केनाप्यवश्यमाप्स्यत्यतिसत्कृतानि ॥६०॥
वागीश्वरीचरणरेणुकृपाभरेण लब्धोदयेन सुधिया हरिशङ्करेण ।
विद्यार्थिनामुदयहेतुदयापरेण ग्रन्थो न्यबन्धि परमेण परिश्रमेण ॥६१॥
वाञ्छा चेद्धृदयाम्बुजे प्रियतमायुष्याणि संरक्षितुं
श्रद्धा वाध्ययनाय धर्मविहिता शास्त्रान्तराणामपि ।
तर्ह्येतत् सुमनोरमं लघुतमं सम्पूर्णबोधप्रद-
मार्षं व्याकरणं पठन्तु सुधियः किं वाग्वृथाडम्बरैः ॥६२॥

अये बुधधुरन्धरा विहितचारुविद्याश्रमा
विवेचयत साम्प्रतं निजधियातिगम्भीरया ।
कियन्ति दिवसानि नः सुरगिरः समाराधने
वृथा समययापनं सहृदयैरुपेक्षिष्यते ॥६३॥
विदन्त्यतितरां विदो यदिह मानुषं जीवनं
कियल्लघु च चञ्चलं कियदिहास्ति कार्यं महत् ।
विवेच्य हृदये निजे निखिलशास्त्रविद्यार्थिनां
कराम्बुजसमर्पितं कुरुत पाणिनीयामृतम् ॥६४॥
यदि स्वजनजीवनक्षपणचिन्तना चेतसि
यदि प्रबललालसा सकलशास्त्रलाभोन्मुखी ।
तदेदमतिमञ्जुलं गुरुविचारसाराञ्चितं
गृहाण करकञ्जयोः सपदि पाणिनीयं नवम् ॥६५॥
इदमतिरमणीयं पाणिनीयं भवद्भिः
प्रियतमतनयानां हस्तयोरर्पणीयम् ।
फलवति परिणामे नान्यथा शङ्कनीयं
सपदि समयरक्षार्थं परं चेष्टनीयम् ॥६६॥
आपणेषु परितः प्रसारितं द्रव्यजातमतिसुन्दरायितम् ।
चिन्वतेऽपि तत एव किञ्चन काचकाञ्चनविवेचनेक्षणाः ॥६७॥
शब्दशास्त्राम्बुधेरुद्धृतं नूतनं पाणिनीयामृतं स्वादयध्वं बुधाः ।
जीवितं रक्षितं स्यादवश्यं भवद्बालकानामिदं निश्चिनुध्वं धिया ॥६८॥
न चेत्फलं पाठनयास्य धीरा धिया स्वया ध्यायत धर्मवीराः ।
न तर्हि मे प्रार्थनयानया वा कयापि शिष्यायुषि मा दयध्वम् ॥६९॥
एकस्यापि यदि क्षणस्य भविता शिष्यायुषामन्वहं
रक्षानेन मया कृतेन लघुना ग्रन्थेन सम्भाविता ।
तर्ह्येतस्य परिश्रमस्य निखिलस्यायोजनस्याप्यलं
लब्धाहे फलमुत्तमं नरजनुर्लाभस्य चेहात्मनः ॥७०॥
बाल्यादेव समर्पितं निजवयः शब्दागमाराधने
विद्वन्मौलिगुरोः पदाम्बुजरजोरागो हृदि स्थापितः ।

शिक्षापद्धतिरीक्षिता प्रचलिता देशेष्वलं मे पुनः
सिद्धान्तोऽयमजागरीदनुभवैः कल्याणकल्पद्रुमः ॥७१॥
भो भो भोश्चिरजीविनः प्रियतमाः शिष्याः स्वसूनूपमा
युष्माकं परमोपकारमनसा ग्रन्थोऽयमुद्भावितः ।
एतद् व्याकरणं मुनेर्हृदयतो यत्पाणिनेरुद्धृतं
स्वभ्यस्यन्तु भवन्तु भव्यसुधियः स्वल्पैर्दिनैर्भावुकाः ॥७२॥
भो भो विज्ञवरा भवन्तु भवतां शिष्येषु भव्या दृशो
येनैषां समयो निरर्थकतया यायान्न शब्दागमे ।
नास्मिन्नेव समस्तजीवनमिदं तैर्देयमन्येष्वितः
शास्त्रेषु प्रकटप्रयोजनशतेष्वध्यात्मयोगेष्वपि ॥७३॥
पाणिनीयस्य शास्त्रस्य पाणिनिक्रमभञ्जने ।
अपाणिनीयता स्पष्टा भाष्ये या दूषिताऽसकृत् ॥७४॥
नेयं मदीया सरणिर्नवीनातिप्राक्तनी वर्षशतत्रयात्तु ।
अद्यापि पूर्वत्वपरत्वबुद्धावुपासनीयैव महाप्रयासैः ॥७५॥
अस्याः पुनर्जागरणाज्जनानां जनिष्यते या प्रतिभा जयन्ती ।
न पश्यतां तां विदुषां समक्षं पराक्रमेताथ परा प्रणाली ॥७६॥
यद्गौरवस्यैव विनाशनाय तेपे तपः पाणिनिरुग्रतेजाः ।
शेषोऽधरद्वारमशेषमेष दोषः स एवाद्य विशेषवेषः ॥७७॥
तपस्यता पाणिनिना यदर्थं लघूनि सूत्राणि विनिर्मितानि ।
विद्वद्वराणां शुभकामनानां दृयादृशस्तत्र न किं पतन्ति ॥७८॥
तेनैव चेत्पुनरपि प्रथितक्रमेण
शिष्याः पठन्तु गुरवोऽप्यथ पाठयन्तु ।
स्वल्पैरहोभिरखिलस्य समीहितस्य
सिद्धिर्भविष्यति न संशयदोषलेशः ॥७९॥
निरीक्षिता चारुविचारपूर्वं समर्थिता पण्डितमण्डलीभिः ।
कृतिः पवित्रा निखिलासु दिक्षु प्रचारितावश्यमियं भवित्री ॥८०॥
नेयं मदीया कविता जनानां चेतश्चमत्कर्तुमगात् प्रकाशम् ।
यान्येव दुःखानि मयानुभूतान्येतानि पद्यत्वमितानि तानि ॥८१॥

न चाटुतां दर्शयितुं मदीया सरस्वती कामयते कदापि ।
तथ्यानि वक्तुं रसनाग्रसंस्था न लज्जतेऽसौ विदुषां समक्षम् ॥८२॥
न रोचतां चेद्विदुषां वरेभ्यः केभ्यश्चिदेतत्परमोपयुक्तम् ।
श्रयेयमन्यं कमुपायमेवं विना विनस्यातिनिवेदनेन ॥८३॥
पण्डितैरपि विवृद्धबुद्धिभी रक्षणीयमिदमस्ति पुस्तकम् ।
यर्हि यत्पदमवेक्ष्यमिष्यतां दृश्यतां तदिह निर्विलम्बनम् ॥८४॥
यान्येव लक्ष्याणि पुरा पुराणैराचार्यवर्यैः समुदाहृतानि ।
तान्यत्र वर्णक्रमयोजितानि निरीक्षणीयानि यदीप्सितानि ॥८५॥
विद्वेषभाजोऽपि विवेकशीलाः प्रशंसितुं नोत्सहमानमानाः ।
सुगुप्तमेतद् गुरुगौरवेण रक्षेयुराकाङ्क्षितपूरणाय ॥८६॥
मतानि मत्वा महतां गुरूणामिदं मयायोजि नवस्वरूपम् ।
यत्पुस्तकं भद्रतमं तदस्तु सर्वस्य लोकस्य भवोद्भवाय ॥८७॥
स्वल्पेन कालेन विबोधनाय विद्यार्थिनां जीवनरक्षणाय ।
ग्रन्थो मयायं विहितावतारो न ख्यातिलाभाय धनार्जनाय ॥८८॥
नैतादृशं व्याकरणं भवद्भिर्दृष्टं भवेत् क्वापि पुरा पुराणम् ।
भव्यक्रमं नव्यसमुद्भवञ्चच्छात्रोपकाराय धृतावतारम् ॥८९॥
लक्ष्याणि केन विधिना सुगमैरुपायैः
सिध्यन्ति लोकविदितान्यथ वैदिकानि ।
इत्यर्थचिन्तनपरैरखिलैः पठद्भि-
रभ्यास्यमेव भविता मम पाणिनीयम् ॥९०॥
शास्त्रान्तरे कृतपरिश्रमसज्जनैस्तु
संरक्ष्यमेव भवितेदमतिप्रसद्य ।
यस्मिन् क्षणे समुदियात्पदसंशयो य-
स्तस्मिन्ननेन निरियात्स निरीक्षितेन ॥९१॥
धीरवर्य करुणाकटाक्षणैरेकवारमपि पूयतामिदम् ।
पुस्तकं करसरोजभूषितं स्थानमाप्स्यति चिराय चेतसि ॥९२॥
उपेक्षणं नास्य नवोद्भवस्य कुरुध्वमाचार्यवरा इदानीम् ।
घृणां निजे व्याकरणे महत्त्वात्समुत्थितामाशु बुधा हरध्वम् ॥९३॥

ग्रहीष्यतेऽवश्यमिदं सुधीभिर्येर्ज्ञायते सत्समयोपयोगः ।
को नाम शिष्यस्य वयोविनाशं सहिष्यते स्वस्य सुतोपमस्य ॥६४॥
ग्रन्थरत्न यदि भासि भास्वरैः स्वैर्गुणैर्हृदयमोहनक्षमैः ।
कस्य नो सहृदयस्य मानसं सस्पृहं वशयितासि सत्वरम् ॥६५॥
गुणोऽत्र वा दोषसमूह एव निरीक्ष्यतां चारु विचार्यताञ्च ।
विद्वन्मनीषानिकषे निकष्य सुवर्णतां साधयितुं यतेऽस्य ॥६६॥
यावदात्मबलपौरुषं मया चेष्टितं परपरिष्कृतेः कृते ।
सम्भवन्ति महतामपि व्रते पातकानि भृशवर्जितान्यपि ॥६७॥
यद्यशुद्धिरिह मामके क्वचित्पुस्तके बुधवरेण लक्ष्यताम् ।
आशु तत्स्खलनसूचनाकृपा दर्श्यतामिति परं निवेदनम् ॥६८॥
अस्मिन्त्सन्ति कियन्त एव विषया ये नाद्य यावत्पुरा
चक्षुर्गोचरतां गता मतिमतां तोषाय ते दर्शिताः ।
केऽप्याकाङ्क्षितपूरणाय सुधियामध्यापनायामपि
तत्सर्वाङ्गमनोरमं नवमिदं ग्राह्यं गुणग्राहिभिः ॥६९॥
काठिन्यं विपुलश्रमोऽतिगुरुताभ्यासे तथायुःक्षयः
सूत्राणां बहुशो व्यतिक्रमवशाद्दोषा मृषारोपिताः ।
ते नास्मिन् हरिशङ्करेण महतायासेन सम्पादिते
ग्रन्थे पाणिनिना प्रदर्शितपथे विज्ञैस्तदालोच्यताम् ॥१००॥
यान्यस्य मुग्धहृदयेन मयोदितानि
ग्रन्थस्य पाठनफलानि समर्थितानि ।
विद्वद्वरा विहितचारुनिरीक्षणास्तु
तथ्यानि वातिवितथानि विवेचयन्तु ॥१०१॥
जागर्यतां युवगणा भवतां समक्षं
कीदृग्विचित्रसमयः समुपस्थितोऽस्ति ।
सर्वे व्रजन्ति सुसुखं परमोदयानां
पारं परन्तु भवतामधरे निपाताः ॥१०२॥
नेत्थं सुषुप्तिरधुना जडवज्जघन्या
भूभारवर्धनकरी क्रियतां कदापि ।

उत्थीयतां चरणयोर्निजयोर्बलैस्तु
संदर्श्यतामथ परा भुवने विभूतिः ॥१०३॥
शीघ्रं समाप्य पठनं सकलागमानां
बाल्ये विलासबहुलेऽपि सुसंयमेन ।
वीरव्रतोचितकृतिः करणीयतायां
युष्माकमस्ति निहितापि न लोपनीया ॥१०४॥
नो चिन्तयन्ति यदि चिन्तनपारयाता-
स्त्रातार एव गुरवो भवतां कृतेऽद्य ।
पूज्या भवन्तु हृदये क्रियतां किमेषां
स्वेषां दशा तु विषमातिविचिन्तनीया ॥१०५॥
भो बालकाः कृतधियः करुणाकरेण
साक्षाद्धृदि स्थितवता परमेश्वरेण ।
उत्थातुमिच्छततरां स्वहिताहितं च
बुद्ध्वा यतध्वमधुना स्वधियैव धीराः ॥१०६॥
नात्रास्ति किञ्चिदपि मामककल्पनायाः
कार्यं न वा किमपि जल्पितकल्पमल्पम् ।
यत्पाणिनीयमतिदिव्यतमं प्रपूर्णं
शास्त्रं तदेव रुचिराकृति सन्निबद्धम् ॥१०७॥
अयि बुधपरिषद्विवेकशीले यदि न दयां तनुषे स्वशिष्यवर्गे ।
कथमथ भविता तदीयभाग्यप्रबलरवेरुदयोऽतिवाञ्छनीयः ॥१०८॥
श्रीपाणिनीयपदपङ्कजकिङ्करेण
पद्यानि गुम्फितवता नतमस्तकेन ।
तत्पूजनाय विधिना हरिशङ्करेण
माल्यं समर्पितमिदं परमादरेण ॥१०९॥



श्रीगणेशाय नमः ।

# अथार्षं पाणिनीयं व्याकरणम् ।



वेदत्रयीप्रकाशं सकलजगन्मूलमवलम्बम् ।
हरिशङ्करयोरेकं रूपं हरिशङ्करः श्रयति ॥१॥

वागीश्वरीपदद्वन्द्वनखचन्द्रमरीचयः ।
तमोऽपहृत्य हृदये प्रकाशन्तां चिराय मे ॥२॥

पाणिनिं शास्त्रकर्त्तारं व्याख्यातारं पतञ्जलिम् ।
कात्यायनं वार्त्तिकानां प्रणेतारं स्तुवेतराम् ॥३॥

गुरुगङ्गाधरं ध्यात्वा पितरं रामजीवनम् ।
पाणिनीयमिदं शास्त्रं चारुरूपं प्रकाशये ॥४॥

तपस्यता पाणिनिना महात्मना
यथाक्रमं व्याकरणं प्रदर्शितम् ।
तथैव सोदाहरणं सवार्त्तिकं
वितन्यते सूचिनिवेशभूषितम् ॥५॥



१ अइउण् २ ऋऌक् ३ एओङ् ४ ऐऔच् ५ हयवरट् ६ लण् ७ ञमङणनम् ८ झभञ् ९ घढधष् १० जबगडदश् ११ खफछठथचटतव् १२ कपय् १३ शषसर् १४ हल् ।

इतीमानि शिवसूत्राणि ।

१. **वृद्धिरादैच्** । आश्वलायनः, ऐतिकायनः, औपगवः, औपमन्यवः, शालीयो मालीयः।

२. **अदेङ् गुणः** । तरिता, चेता, स्तोता, पचे ।

३. **इको गुणवृद्धी**[1] । तरति, नयति, भवति । अकार्षीत, अहार्षीत, अचैषीत्, अनैषीत् । अलावीत्, अस्तावीत् ।

४. **न धातुलोप[2] आर्धधातुके** । लोलुवः[3], पोपुवः, मरीमृजः ।

५. **क्ङिति च** । चितः, चितवान् । स्तुतः, स्तुतवान् , चिनुतः । गकारोऽप्यत्र चर्त्वेन निर्दिश्यते । जिष्णुः ।

६. **दीधीवेवीटाम्** । आदीध्यनम्, आदीध्यकः, आवेव्यनम् , आवेव्यकः । श्वः कणिता[4], श्वो रणिता, भविता ।

७. **हलोऽनन्तराः संयोगः** । अग्निरिति गनौ, अश्व इति शवौ, इन्द्रश्चन्द्रो मन्द्र इति नदराः । तिलान्स्त्र्यावपतीति नसतरयाः ।

८. **मुखनासिकावचनोऽनुनासिकः** । अभ्र आँ अपः । गभीर आँ उग्रपुत्रे, सँस्कर्त्ता ।

९. **तुल्यास्यप्रयत्नं[5] सवर्णम्** । दण्डाग्रम्, खट्वाग्रम् । * ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् * होतृ + ऌकारः = होतॄकारः ।

---

१. गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र इक इति पदमुपतिष्ठते । तेनेक एव गुणवृद्धी भवत इतीयं परिभाषा । २. धात्वंशलोपनिमित्त इत्यर्थः । ३. इह हि लोलूयेति यङन्तादच्प्रत्यये धात्वंशलोपः । एवमन्यत्र । ४. इह कणिदित्यस्य लघूपधत्वाद् गुणः प्राप्तो निषिध्यते । ५. आस्ये भवमास्यं ताल्वादिस्थानम् । यथा :—अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य । इह प्रयत्ना आभ्यन्तराः स्पृष्टेषत्स्पृष्टविवृतसंवृतनामानः । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतं स्वराणाम् । अकारस्य प्रयोगे संवृतम् । कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ≍क≍पाविति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ ।

१०. **नाज्झलौ**[1] । दण्ड-हस्तः, दधि-शीतम् ।

११. **ईदूदेद् द्विवचनं प्रगृह्यम्** । अग्नी इति, वायू इति, माले इति, पचेते इति । *मणीवादीनां प्रतिषेधो वक्तव्यः* । मणीव, रोदसीव । दम्पतीव, जम्पतीव[2] ।

१२. **अदसो मात्** । अमी अत्र, अमी ईशाः, अमू आसाते । नेह :—अमुकेऽत्र ।

१३. **शे** । अस्मे इन्द्राबृहस्पती, युष्मे इति ।

१४. **निपात एकाजनाङ्** । अ अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ । आ एवं नु मन्यसे, आ एवं किल तत् । नेह ईषदुष्णमोष्णम्[3] । ओदकान्तात् ।

१५. **ओत्** । अहो ईशाः ।

१६. **सम्बुद्धौ**[4] **शाकल्यस्येतावनार्षे** । विष्णो इति, विष्णविति ।

१७. **उञः** । उ इति, विति ।

१८. **ऊँ** । ऊँ इति ।

१९. **ईदूतौ च सप्तम्यर्थे** । मामकी[5] इति, तनू[6] इति, सोमो गौरी अधिश्रितः । अर्थग्रहणाद् वृत्तौ न । वाप्यश्वः ।

२०. **दाधा घ्वदाप्** । प्रणिदाता[7], प्रणिधाता ।

२१. **आद्यन्तवदेकस्मिन्** । आभ्याम्[8] ।

२२. **तरप्तमपौ घः** । कुमारितरा[9], कुमारितमा ।

२३. **बहुगणवतुडति संख्या** । बहुकृत्वः, बहुधा, बहुशः, बहुकः । गणकृत्वः, गणधा, गणशः, गणकः । तावत्कृत्वः । कतिधा ।

---

१. इह आकारोऽपि प्रश्लिष्यते तेन विश्वपाभिरित्यत्र हो ढो न । २. इवार्थो वशब्दो वाशब्दो वेति न प्रयोजनं वार्त्तिकस्येति केचित् । काशिकारीत्या तु प्रदर्शितम् । ३. ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ ४. ओदिति वर्त्तते । ५. मामक्यामित्यत्र सुपां सुलुगिति सप्तम्या लुकि सप्तम्यर्थता । यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायात् । ६. इहापि पूर्ववत् । ७. घुत्वान्नेर्गदेति णत्वम् । ८. तेनादन्ताङ्गत्वात्सुपि चेति दीर्घः । ९. घरूपेति ह्रस्वत्वम् ।

२४. ष्णान्ता षट् । षट् तिष्ठन्ति, षट् पश्य । पञ्च । नेह :—विप्रुषः, पामानः ।

२५. डति च । कति तिष्ठन्ति, कति पश्य ।

२६. क्तक्तवतू निष्ठा । कृतः, कृतवान् ।

२७. सर्वादीनि[1] सर्वनामानि । सर्वे, सर्वस्मै, सर्वस्मात्, सर्वेषाम्, सर्वस्मिन्, सर्वकः ।

२८. विभाषा दिक्समासे[2] बहुव्रीहौ । उत्तरपूर्वस्यै, उत्तरपूर्वायै । दक्षिणपूर्वस्यै, दक्षिणपूर्वायै ।

२९. न बहुव्रीहौ । प्रियविश्वाय, प्रियोभयाय, द्व्यन्याय, त्र्यन्याय ।

३०. तृतीयासमासे । मासपूर्वाय, संवत्सरपूर्वाय, मासेन पूर्वाय[3] ।

३१. द्वन्द्वे च । पूर्वापराणाम्, वर्णाश्रमेतराणाम् । कतरकतमानाम् ।

३२. विभाषा जसि । कतरकतमे, कतरकतमाः ।

३३. प्रथमचरमतय[4]ाल्पार्धकतिपयनेमाश्च । प्रथमे, प्रथमाः । चरमे, चरमाः । द्वितये, द्वितयाः । अल्पे, अल्पाः । अर्धे, अर्धाः । कतिपये, कतिपयाः । नेमे, नेमाः ।

३४. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थाया[5]मसंज्ञायाम् । पूर्वे, पूर्वाः । परे, पराः । अवरे, अवराः । दक्षिणे, दक्षिणाः । उत्तरे, उत्तराः । अपरे, अपराः । अधरे, अधराः ।

३५. स्वमज्ञातिधनाख्यायाम् । स्वे पुत्राः, स्वाः पुत्राः । स्वे गावः, स्वा गावः । आत्मीया इत्यर्थः । स्वे स्वा आत्मान इत्यर्थः । नेह :— स्वाः । ज्ञातयोऽर्था वा ।

---

१. सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम् । २. दिङ्नामान्यन्तराल इति विहित इत्यर्थः । ३. समासग्रहणेऽनुवर्तमाने पुनः समासग्रहणात्तृतीयासमासार्थवाक्येऽपि निषेधः । ४. तयः प्रत्ययस्तेन तदन्तग्रहणम् । ५. स्वाभिधेयापेक्षावधिनियमो व्यवस्था ।

३६. अन्तरं बहिर्योगोपसंव्यानयोः । अन्तरे, अन्तरा वा गृहाः[1] । अन्तरे, अन्तरा वा शाटकाः[2] । *अपुरीति वक्तव्यम्* अन्तरायां पुरि । *विभाषाप्रकरणे तीयस्य[3] ङित्सूपसंख्यानम्* द्वितीयस्मै, द्वितीयाय । तृतीयस्मै, तृतीयाय ।

३७. स्वरादिनिपातमव्ययम्[4] । स्वर्, अन्तर्, प्रातर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, आरात्, ऋते-इत्यादि । च, वा, ह, अह, एव, एवमित्यादि ।

३८. तद्धितश्चासर्वविभक्तिः[5] । ततः, यतः, तत्र, यत्र, तदा, यदा, सदा, सर्वदा ।

३९. कृन्मेजन्त । स्वादुङ्कारम् भुङ्क्ते, वक्षे[6] रायः, जीवसे, पिबध्यै ।

४०. क्त्वातोसुन्कसुनः । कृत्वा, गत्वा, उदेतोः, विसृपः ।

४१. अव्ययीभावश्च । उपाग्नि शलभाः पतन्ति । अधिहरि ।

४२. शि सर्वनामस्थानम्[7] । कुण्डानि तिष्ठन्ति, कुण्डानि पश्य । दधीनि, मधूनि, त्रपूणि, जतूनि ।

४३. सुडनपुंसकस्य । राजा, राजानौ, राजानः, राजानं राजानौ ।

४४. न वेति विभाषा[8] । शुशाव, शिश्वाय, शुशुवतुः, शिश्वियतुः ।

४५ इग्यणः[9] सम्प्रसारणम् । इष्टम्, उप्तम्, गृहीतम् ।

४६. आद्यन्तौ टकितौ[10] । लविता, मुण्डो भीषयते ।

४७. मिदचो[11]ऽन्त्यात्परः । विरुणद्धि, मुञ्चति, पयांसि । *मस्जेरन्त्यात्पूर्वं नुम्* मग्नः, मङ्क्त्वा, मङ्क्तुम् ।

४८. एच इग्घ्रस्वादेशे । अतिरि, अतिनु, उपगु ।

---

१. बाह्या इत्यर्थः । २. परिधानीया इत्यर्थः । ३. तीयः प्रत्ययः । तेन तदन्ता गृह्यन्ते । ४. स्वरादयो गणपाठे द्रष्टव्याः । निपाताश्च चादयोऽसत्त्व इति विहिताः । सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ ५. यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्त इत्यर्थः । ६. वक्तुमित्यर्थे वचधातोः से प्रत्ययः । ७. सर्वनामस्थाने चासम्बुद्धाविति दीर्घः फलम् । ८. विभाषा श्वेरिति संप्रसारणं वा । ९. यणः स्थाने भूतो भावी वा इगित्यर्थः । १०. टिदादिर्भवति, किदन्तो भवतीति यथासंख्यम् । ११. अच इति निर्धारणे षष्ठी अचामित्यर्थे । जातावेकवचनम् ।

४९. षष्ठी स्थानेयोगा । ( अस्तेर्भूः ) भविता, भविष्यति ।

५०. स्थानेऽन्तरतमः[१] । दण्डाग्रम्, यूपाग्रम् । पाकः, रागः । अमुष्मै, अमूभ्याम् ।

५१. उरण् रपरः । कर्त्ता, हर्त्ता, किरति, गिरति, द्वैमातुरः ।

५२. अलोऽन्त्यस्य । ( इद् गोण्याः ) पञ्चगोणिः, दशगोणिः ।

५३. ङिच्च । ( आनङ् ऋतो द्वन्द्वे ) होतापोतारौ, मातापितरौ ।

५४. आदेः परस्य । ( ईदासः ) आसीनो यजते । द्वीपम् ।

५५. अनेकाल् शित् सर्वस्य । ( अस्तेर्भूः ) भविता । (जश्शसोः शि) कुण्डानि ।

५६. स्थानिवदादेशोऽनल्विधौ । ( अस्तेर्भूः ) भविता ( ब्रुवो वचिः ) वक्ता । केन, काभ्याम्, कैः । रामाय । नेह :–द्यौः, पन्थाः, सः ।

५७. अचः परस्मिन् पूर्वविधौ । पटयति, अवधीत् ।

५८. न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु । कौ स्तः, कानि सन्ति, दद्ध्यत्र, मद्ध्वत्र, यायावरः[२], कण्डूतिः[३], चिकीर्षकः[४], शिण्ढि[५], शिषन्ति[५], प्रतिदीव्ना, सग्धिः[६], बब्धाम्, जक्षतुः[७] ।

---

१. सदृशतम इत्यर्थः । सादृश्यञ्च स्थानप्रयत्नाभ्याम् । तुल्यास्यसूत्रे स्थानानि आभ्यन्तरप्रयत्नाश्च दर्शितानि । बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खर्यां यमाः खयः ᳵकᳵपौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥ कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः । अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥ २. वरेऽजादेशो न स्थानिवदित्यस्येदमुदाहरणम् । यातेर्यङन्ताच्च यङ इति वरच् । ३. यलोपविधिम्प्रति अजादेशो न स्थानिवदित्यस्येदमुदाहरणम् । कण्डूयतेः क्तिचि रूपम् । ४. इह ण्वुलि कृतेऽतो लोपः । लिति प्रत्ययात्पूर्वमुदात्तमिति स्वरे कर्त्तव्ये न स्थानिवत् । ५. परसवर्णानुस्वारयोः श्नसोरल्लोपो न स्थानिवत् । ६. जश्विधौ घसिभसोर्हलि चेत्युपधालोपो न स्थानिवत् । अदेः क्तिनि ग्धः । समाना ग्धिः सग्धिरिति वैदिकं रूपम् । भसेर्लोटि प्रथमपुरुषद्विवचने बब्धामिति । ७. इह चर्विधौ गमहनेत्युपधालोपो न स्थानिवत् ।

५९. द्विर्वचनेऽचि[1] । पपतुः, जघ्नतुः. आटिटत्, चक्रतुः, निनय, निनाय, लुलव, लुलाव । नेह :—जग्ले, मम्ले ।

६०. अदर्शनं लोपः । गौधेरः, पचेरन् ।

६१. प्रत्ययस्य लुक्श्लुलुपः । अत्ति, जुहोति, वरणाः ।

६२. प्रत्ययलोपे प्रत्ययलक्षणम् । अग्निचित्, सोमसुत् ।

६३. न लुमताङ्गस्य । कति[2] ।

६४. अचोऽन्त्यादि टि । पचेते, पचेथे, शकन्धुः ।

६५. अलोऽन्त्यात्पूर्व उपधा । पपाच, पपाठ ।

६६. तस्मिन्निति निर्दिष्टे पूर्वस्य । सुध्युपास्यः ।

६७. तस्मादित्युत्तरस्य । उत्थानम् । ओदनं पचति । नेह :—पचत्योदनम् ।

६८. स्वं रूपं शब्दस्याशब्दसंज्ञा । ( अग्नेर्ढक् ) आग्नेयम् । नेह :— आद् गुणः ।

६९. अणुदित्सवर्णस्य चाप्रत्ययः[3] । सुध्युपास्यः, श्रोशः । स्नक्, स्रग् ।

७०. तपरस्तत्कालस्य । वृक्षैः, प्लक्षैः । नेह :—खट्वाभिः । अब्जाः, गोजाः ।

७१. आदिरन्त्येन सहेता । अण्, अक्, अच्, हल्—आदयः प्रत्याहाराः सिध्यन्ति ।

७२. येन विधिस्तदन्तस्य[4] । ( एरच् ) अयः, चयः, जयः । *समास-प्रत्ययविधौ प्रतिषेधः* कष्टं श्रितः कष्टश्रितः । नेह :—कष्टं परमश्रितः । नाडायनः । नेह :—सौत्रनाडिः । * उगिद्वर्णग्रहणवर्जम् * भवती, अतिभवती । दाक्षिः, प्लाक्षिः ।

---

१. द्विर्वचन इत्यस्यावृत्त्या द्वित्वनिमित्तेऽचीति द्वित्वे कर्त्तव्य इति चार्थः । अच आदेशः स्थानिवदिति रूपातिदेशः । अच आदेशो नेति वार्थः । २. इह जसि चेति न गुणः । ३. इहैवाण् परेण णकारेण ।

पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्ग्रहा मताः ।
ऋतेऽणुदित्सवर्णस्य चैतदेकं परेण तु ॥

४. यत्करणकं विधानमित्यर्थः । तच्च विशेषणमेवेति विशेषणं तदन्तस्य संज्ञेति सूत्रार्थः ।

७३. वृद्धिर्यस्याचामादिस्तद्वृद्धम् । शालीयः । मालीयः । *वा नामधेयस्य वृद्धसंज्ञा वक्तव्या * देवदत्तीयाः, दैवदत्ताः ।

७४. त्यदादीनि च । त्यदीयम्, तदीयम, मदीयम् ।

७५. एङ् प्राचां देशे । एणीपचनीयः, भोजकटीयः । ऐणीपचनः, भौजकटः । गोनर्दीयः, गौनर्दः ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
प्रथमाध्यायस्य प्रथमः पादः समाप्तः ।



# अथ प्रथमाध्यायस्य द्वितीयपादः ।



१. गाङ्कुटादिभ्योऽञ्णिन्ङित् । अध्यगीष्ट[१], अध्यगीषाताम् । कुटिता, कुटितव्यम् । उत्पुटिता , उत्पुटितव्यम् । *व्यचेः कुटादित्वमनसि[२] * विचिता, विचितुम्, विचितव्यम् । नेह :–उरुव्यचाः ।

२. विज इट् । उद्विजिता, उद्विजितुम्, उद्विजितव्यम् ।

३. विभाषोर्णोः । प्रोर्णुविता, प्रोर्णविता । ऊर्णुवितव्यम्, ऊर्णवितव्यम् ।

४. सार्वधातुकमपित् । कुरुतः, कुर्वन्ति । चिनुतः, चिन्वन्ति ।

५. असंयोगाल्लिट् कित् । बिभिदतुः, बिभिदुः । ईजतुः, ईजुः । नेह :–सस्रंसे । बिभेद ।

६. इन्धिभवतिभ्याञ्च । पुत्र ईधे अथर्वणः, बभूव, बभूविथ । * श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्[३] * श्रेथतुः, ग्रेथतुः, देभतुः, सस्वजे ।

७. मृडमृदगुधकुषक्लिशवदवसः क्त्वा । मृडित्वा[४], मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उदित्वा, उषित्वा ।

८. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च[५] । रुदित्वा, रुरुदिषति । विदित्वा, विविदिषति । मुषित्वा, मुमुषिषति । गृहीत्वा, जिघृक्षति । सुप्त्वा, सुषुप्सति । पृष्ट्वा, पिपृच्छिषति ।

९. इको झल्[६] । चिचीषति, तुष्टूषति, चिकीर्षति । नेह :–शिशयिषते ।

१०. हलन्ताच्च[७] । बिभित्सति, बुभुत्सते । धीप्सति[८], धिप्सति । नेह :–यियक्षति । विवर्धिषते ।

---

१. तेन घुमास्थेतीत्वम् । २. अनसीति पर्युदासात्कुन्मात्रमस्य विषयः । नेह :–अव्यचीत् , अव्याचीत् । ३. इह वेति वक्तव्यमिति केचित् । ४ न क्त्वा सेडिति प्राप्ते वचनम् । ५. चात् क्त्वापि । ६. झलादिः सन्नित्यर्थः । ७. पूर्वसूत्रमनुवर्त्तते । इक इति सामीप्यार्थे षष्ठी । तेनेक्समीपहलन्तात्परो झलादिः सन्नित्यर्थः । ८. हल्ग्रहणस्य जातिपरत्वात् ।

११. लिङ्सिचावात्मनेपदेषु[१]। भित्सीष्ट, भुत्सीष्ट, अभित्त, अबुद्ध नेह:—यक्षीष्ट। अयष्ट।

१२. उश्च। कृषीष्ट, हृषीष्ट, अकृत, अहृत। नेह:— वरिषीष्ट। अवरिष्ट।

१३. वा गमः। संगसीष्ट, संगंसीष्ट। समगत, समगंस्त।

१४. हनः सिच्[२]। आहत, आहसाताम्।

१५. यमो गन्धने[३]। उदायत, उदायसाताम्, उदायसत। नेह:—उदायंस्त[४] पादम्।

१६. विभाषोपयमने[५]। उपायत, उपायंस्त वा कन्याम्।

१७. स्थाघ्वोरिच्च। उपास्थित, उपास्थिषाताम्। अदित, अधित।

१८. न क्त्वा सेट्। देवित्वा, वर्तित्वा। शयित्वा।

१९. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः। शयितः, शयितवान्। प्रस्वेदितः, प्रस्वेदितवान्। प्रमेदितः, प्रक्ष्वेदितः, प्रधर्षितः।

२०. मृषस्तितिक्षायाम्[६]। मर्षितः, मर्षितवान्। नेह:—अपमृषितं[७] वाक्यम्।

२१. उदुपधाद्भावादिकर्मणोरन्यतरस्याम्। द्युतितम्, द्योतितम्। मुदितम्, मोदितम्, प्रमुदितः, प्रमोदितः।

२२. पूङः क्त्वा च[८]। पवितः, पवितवान्।

२३. नोपधात्थफान्ताद्वा। ग्रथित्वा, ग्रन्थित्वा। गुफित्वा, गुम्फित्वा।

२४. वञ्चिलुञ्च्यृतश्च। वचित्वा, वञ्चित्वा। लुचित्वा, लुञ्चित्वा। सेडित्येव। नेह:—वक्त्वा। ऋतित्वा, अर्तित्वा।

२५. तृषिमृषिकृशेः काश्यपस्य। तृषित्वा, तर्षित्वा। मृषित्वा, मर्षित्वा। कृशित्वा, कर्शित्वा।

२६. रलो व्युपधाद्धलादेः संश्च[९]। द्युतित्वा, द्योतित्वा, दिद्युतिषते, दिद्योतिषते। लिखित्वा, लेखित्वा, लिलिखिषति, लिलेखिषति।

---

१. पूर्वसूत्रमनुवर्तते। तेनेक्समीपाद्धलः परौ झलादौ लिङ्सिचावित्यर्थः। २. तेनानुनासिकलोपः। ३. गन्धनं सूचनम्। परदोषाविष्करणम्। धातूनामनेकार्थत्वाद्यमिस्तत्र वर्तते। ४. उत्क्षिप्तवानित्यर्थः। ५. उपयमनं विवाहः। ६. तितिक्षा क्षमा। ७. अविस्पष्टमित्यर्थः। ८. अन्यतरस्यामिति नेहानुवर्तते उत्तरत्र वाग्रहणात्। न क्त्वा सेडिति सिद्धे क्त्वाग्रहणमुत्तरार्थम्। ९. चात्क्त्वापि।

२७. ऊकालोऽज्झ्रस्वदीर्घप्लुतः[1]। दधि, मधु। कुमारी, गौरी, एहि। देवदत्ता३।

२८. अचश्च[1]। अतिरि, अतिनु, उपगु। चीयते, श्रूयते। देवदत्ता३।

२९. उच्चैरुदात्तः[2]। ये, ते, के।

३० नीचैरनुदात्तः। नमस्ते रुद्र नीलकण्ठ सहस्राक्ष।

३१. समाहारः स्वरितः[3]। शिक्यम्। कन्या, सामन्यः, क्व।

३२. तस्यादित उदात्तमर्धह्रस्वम्[4]। शिक्यम्, कन्या[5]।

३३. एकश्रुति दूरात्सम्बुद्धौ[6]। आगच्छ भो माणवक देवदत्ता३।

३४. यज्ञकर्मण्यजपन्यूङ्खसामसु[7]। अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म्—इति यज्ञक्रियायाम्। स्वाध्यायकाले तु त्रैस्वर्यम्।

३५. उच्चैस्तरां वा वषट्कारः[8]। सोमस्याग्ने वीही३ वौ३षट्। सोमस्याग्ने वीही३ वौ३षट्।

३६. विभाषा छन्दसि। इषे त्वोर्ज्जे त्वा २। अग्न आयाहि वीतये २। अग्निमीळे पुरोहितम् २। शन्नो देवीरभीष्टये २।

३७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः[9]। सुब्रह्मण्यो३म् *असाविन्त्यन्तः* गार्ग्यो यजते। *अमुष्येत्यन्तः*[10] दाक्षेः पिता यजते। *स्यान्तस्योपोत्तमं च* गार्ग्यस्य पिता यजते। *वा नामधेयस्य* देवदत्तस्य पिता यजते।

---

१. ह्रस्वदीर्घप्लुत इति वर्त्तते। एतेऽच एव स्थाने भवन्तीति नियमनात्परिभाषेयम्। २. ऊर्ध्वभाग उपलभ्यमान इत्यर्थः। ३. उदात्तानुदात्तयोरित्यर्थः। ४. इह ह्रस्वग्रहणमतन्त्रम्। ५. एवमादिष्वादित उदात्तार्धमात्रा। ६. दूराद्धान इत्यर्थः। न तु एकवचनं सम्बुद्धिरितिसंज्ञके इति। उदात्तादिस्वराणां तिरोधानमेकश्रुतिः। ७. जपो नाम उपांशुप्रयोगः। यथा जले निमग्नस्य। न्यूङ्खा नाम षोडश ओकाराः। गीतिषु सामाख्या। ८. वषडित्यनेन वौषट्शब्दो लक्ष्यते। पक्षे एकश्रुतित्वम्। ९. प्रथमान्तस्यान्त इत्यर्थः। १०. षष्ठ्यन्तस्येत्यर्थः।

३८. देवब्रह्मणोरनुदात्तः। देवा ब्रह्माण आगच्छत।

३९. स्वरितात्संहितायामनुदात्तानाम्[1]। इमं मे गङ्गे यमुने सरस्वति। माणवक जटिलकाध्यापक क्व गमिष्यसि?

४०. उदात्तस्वरितपरस्य सन्नतरः[2]। सरस्वति शुतुद्रि देवा मरुतः पृश्निमातरोपः।

४१. अपृक्त एकाल् प्रत्ययः। घृतस्पृक्, अर्धभाक्।

४२. तत्पुरुषः समानाधिकरणः कर्मधारयः। परमराज्यम्[3], उत्तमराज्यम्[3]। पाचकवृन्दारिका।

४३. प्रथमानिर्दिष्टं समास उपसर्जनम्। कष्टश्रितः[4], शङ्कुलाखण्डः, यूपदारु, वृकभयम्, राजपुरुषः, अक्षशौण्डः।

४४. एकविभक्ति[5] चापूर्वनिपाते। निष्कौशाम्बिः[6]!

४५. अर्थवदधातुरप्रत्ययः[7] प्रातिपदिकम्। डित्थः, कपित्थः, रामः[8], कुण्डम्, गङ्गा।

४६. कृत्तद्धित[9]समासाश्च। कारकः, कर्त्ता। औपगवः, कापटवः। राजपुरुषः। ब्राह्मणकम्बलः।

४७. ह्रस्वो नपुंसके प्रातिपदिकस्य। अतिरि कुलम्। अतिनु।

४८. गोस्त्रियोरुपसर्जनस्य। चित्रगुः, निष्कौशाम्बिः।

४९. लुक् तद्धितलुकि[10]। पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। पञ्चशष्कुलिः। आमलक्याः फलमामलकम्। बकुलम्। बदरम्।

५०. इद् गोण्याः। पञ्चगोणिः पटः। इदिति योगविभागात् पञ्चसूचिः।

---

१. इहैकश्रुतिपदमनुवर्त्तते। २. अनुदात्तपदानुवृत्त्योदात्तस्वरितपरस्यानुदात्तस्येत्यर्थः। सन्नतरोऽनुदात्ततर इत्यर्थः। ३. कर्मधारयत्वादिह राज्यमित्युत्तरपदाद्युदात्तं न भवति। ४. उपसर्जनं पूर्वमिति पूर्वं निपतति। ५. एकैव विभक्तिर्यस्य तन्नियतविभक्तीत्यर्थः। ६. गोस्त्रियोरिति ह्रस्वः। ७. प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमित्यप्रत्ययान्तमित्यर्थः। आवृत्त्या अप्रत्यय इत्यपि। ८. अव्युत्पत्तिपक्षे। ९. तदन्तविधिना कृत्तद्धितान्तावित्यर्थः। १०. पूर्वसूत्रात् स्त्रीपदमुपसर्जनपदञ्चानुवर्तते, उपसर्जनस्य स्त्रीप्रत्ययस्येत्यर्थः।

५१. लुपि युक्तवद् व्यक्तिवचने[1] । पञ्चालाः क्षत्रियाः, पञ्चाला जनपदः[2], कुरवः, मगधाः, मत्स्याः, अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्राः ।

५२. विशेषणानां चाजातेः । पञ्चाला जनपदो रमणीयाः, गोदौ ग्रामो रमणीयौ । नेह:—पञ्चाला जनपदः । *हरीतक्यादिषु व्यक्तिः* हरीतक्याः फलानि हरीतक्यः[3] । *खलतिकादिषु वचनम्* खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि । *मनुष्यलुपि प्रतिषेधो वक्तव्यः* चञ्चाभिरूपः। वध्रिका दर्शनीयः ।

५३. तदशिष्यं[4] संज्ञाप्रमाणत्वात् । पञ्चालाः, वरणा । आपो[5] दारा गृहाः सिकता वर्षा इति ।

५४ लुब्योगाप्रख्यानात्[6] । पञ्चालाः ।

५५. योगप्रमाणे च तदभावेऽदर्शनं स्यात् । पञ्चालाः ।

५६. प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्[7] ।

५७. कालोपसर्जने[8] च तुल्यम् ।

५८. जात्याख्यायामेकस्मिन्[9]बहुवचनमन्यतरस्याम् । ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः । सम्पन्ना यवाः । सम्पन्नो यवः ।

५९. अस्मदो द्वयोश्च । वयं ब्रूमः, अहं ब्रवीमि । वयं ब्रूमः, आवां ब्रूवः । *सविशेषणस्य प्रतिषेधः* अहं देवदत्तो ब्रवीमि । पटुरहं ब्रवीमि ।

६०. फल्गुनीप्रोष्ठपदानां[10] च नक्षत्रे । कदा पूर्वाः फल्गुन्यो, पूर्वे फल्गुन्यौ वा । कदा पूर्वाः प्रोष्ठपदाः पूर्वे प्रोष्ठपदे वा ।

६१. छन्दसि पुनर्वस्वोरेकवचनम् । पुनर्वसु नक्षत्रम्, पुनर्वसू वा ।

---

१. युक्तवत्प्रकृतिवदित्यर्थः । व्यक्तिर्लिङ्गम् । वचनं संख्या । २. जनपदे लुप् । ३. हरीतक्यादिभ्यश्चेति फलेऽर्थे लुप् । ४. तद्युक्तवद्वचनम् । अशिष्यम् न वक्तव्यम् । संज्ञायाः प्रतीतेरेवोक्तविषये प्रमाणत्वात् । ५. अब्दारगृहादिषु वचनाभावेऽपि लिङ्गवचनयोर्लोकादेव प्रतीतिरिति भावः । ६. लुबप्यशिष्यः न वक्तव्य इत्यर्थः । योगस्यावयवार्थस्याप्रख्यानादप्रतीतेः । ७. अशिष्यमिति वर्तते । प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमित्यादि वचनम् । अन्यो लोकः । ८. अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनस्तद्भिन्नोऽनद्यतन इति, विशेषणमुपसर्जनमित्यादि च पूर्वाचार्यैः परिभाषितं तत्राप्यशिष्यत्वं समानमित्यर्थः । ९. एकस्मिन् जातिरूपेऽर्थे । १०. द्वयोरिति वर्तते । फल्गुन्यौ प्रोष्ठपदे च द्वे द्वे नक्षत्रे ।

६२. विशाखयोश्च। विशाखा नक्षत्रं विशाखे वा।

६३ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्। उदितौ तिष्यपुनर्वसू दृश्येते[1]। पुष्यपुनर्वसू। सिद्धपुनर्वसू।

६४ सरूपाणामेकशेष एकविभक्तौ। वृक्षश्च वृक्षश्च वृक्षौ। रामौ। वृक्षाः, अक्षाः[2], पादाः, माषाः *विरूपाणामपि समानार्थानाम्* वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ, कुटिलदण्डौ।

६५. वृद्धो[3] यूना तल्लक्षणश्चेदेव विशेषः। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वात्स्यौ।

६६. स्त्री[4] पुंवच्च। गार्गी च गार्ग्यायणश्च गार्ग्यौ। वात्सी च वात्स्यायनश्च वात्स्यौ।

६७ पुमान् स्त्रिया। कुक्कुटश्च कुक्कुटी च कुक्कुटौ। हंसौ।

६८. भ्रातृपुत्रौ स्वसृदुहितृभ्याम्। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्। शुक्लः कम्बलः, शुक्ला शाटी, शुक्लं वस्त्रं, तदिदं शुक्लम्। तानीमानि शुक्लानि वा।

७० पिता मात्रा। माता च पिता च पितरौ, मातापितरौ वा।

७१. श्वशुरः श्वश्र्वा। श्वशुरश्च श्वश्रूश्च श्वशुरौ, श्वश्रूश्वशुरौ वा।

७२. त्यदादीनि[5] सर्वैर्नित्यम्। स च देवदत्तश्च तौ। यश्च देवदत्तश्च यौ। *त्यदादीनां मिथःसहोक्तौ यत्परं तच्छिष्यते* स च यश्च यौ। यश्च कश्च कौ। *पूर्वशेषोऽपि दृश्यते* इति भाष्यम्। स च यश्च तौ। *त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि* सा च देवदत्तश्च तौ। तच्च देवदत्तश्च यज्ञदत्ता च तानि। तच्च देवदत्तश्च ते[6]।

७३ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री। गाव इमाः। अजा इमाः। नेह:—इमे वत्साः।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसङ्कलिते
प्रथमाध्यायस्य द्वितीयपादः समाप्तः।

---

१. पुनर्नक्षत्रग्रहणात्पर्यायाणामपि ग्रहणम्। २. रूपग्रहणाद्भिन्नार्थत्वेऽपि। ३. वृद्धशब्दः पूर्वाचार्यस्य गोत्रस्य संज्ञा। गोत्रप्रत्ययान्तो युवप्रत्ययान्तेन सहोक्तः शिष्यते तयोः प्रत्ययमात्रकृतं कृत्स्नं वैरूप्यं चेत्। ४. वृद्धो यूनेति सूत्रमनुवर्त्तते। तेन वृद्धा स्त्री यूना सहोक्तौ पुंवदित्यर्थः। ५. त्यदादिः सर्वाद्यन्तर्गणः। ६. पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते।

# अथ प्रथमाध्यायस्य तृतीयपादः ।



१. भूवादयो[1] धातवः । भवति । एधते । स्पर्धते । नेह :—याः पश्यति ।

२. उपदेशेऽजनुनासिक इत् । एध, स्पर्ध । प्रतिज्ञानुनासिक्याः पाणिनीयाः ।

३. हलन्त्यम् । अइउण्—णकारः[2] । ऋलृक्—ककारः ।

४. न विभक्तौ तुस्माः । वृक्षात् , ब्राह्मणाः, पचतः, अपचताम् ।

५. आदिर्ञिटुडवः । ञिमिदा—मिन्नः[3] । टुवेपृ—वेपथुः[4] । डुपचष्—पक्त्रिमम्[5] ।

६. षः प्रत्ययस्य । नर्त्तकी[6], रजकी ।

७. चुटू । कौञ्जायन्यः[7] । शाण्डिक्यः[8] । कुरुचरी । उपसरजः ।

८. लशक्वतद्धिते । चयनम्, भवति, भुक्तः, प्रियंवदः, जिष्णुः, भङ्गुरम्, हरये ।

९. तस्य लोपः । मिन्नः, वेपथुः-इत्यादि ।

१०. यथासंख्यमनुदेशः समानाम् । हरये[9], विष्णवे, नायकः, पावकः ।

११. स्वरितेनाधिकारः । प्रतिज्ञास्वरिताः पाणिनीयाः । धातोः, ङ्याप्प्रातिपदिकात् , अङ्गस्य, पदस्य, भस्य ।

१२. अनुदात्तङित आत्मनेपदम् । आस्ते, वस्ते । सूते, शेते ।

---

१. भूश्च वाश्च भूवौ आदिश्चादिश्चादी भूवौ आदी येषां ते भूवादयः । भूशब्दस्य व्यवस्थावाचिनि आदिशब्दे वाशब्दस्य प्रकारार्थे तस्मिन्नन्वयः । तेन क्रियावाचिनो भ्वादयो धातुसंज्ञा इत्यर्थः । भ्वादयश्च धातुपाठे द्रष्टव्याः । २. तेनाणादिप्रत्याहाराः सिध्यन्ति । ३. ञीत्वाद् ञीतश्चेति वर्त्तमाने क्तः । ४. इह ट्वितोऽथुच् । ५. ड्वितः क्त्रिः । ६. षित्त्वान्ङीष् । ७. गोत्रे कुञ्जादिभ्यश्च्फञ् । व्रातच्फञोरस्त्रियाम् । ८. शण्डिकादिभ्यो ञ्यः । ९. एचोऽयवायावः ।

१३. भावकर्मणोः[1] । भूयते, क्रियते ।

१४. कर्त्तरि कर्मव्यतिहारे[2] । व्यतिलुनते, व्यतिपुनते ।

१५. न गतिहिंसार्थेभ्यः । व्यतिगच्छन्ति, व्यतिघ्नन्ति ।

१६. इतरेतरान्योन्योपपदाच्च । इतरेतरस्यान्योन्यस्य वा व्यतिलुनन्ति । *परस्परोपपदाच्चेति वक्तव्यम्* परस्परस्य व्यतिलुनन्ति ।

१७. नेर्विशः । निविशते । यदागमास्तद्ग्रहणेन गृह्यन्ते । न्यविशत । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् । मधुनि विशन्ति भ्रमराः ।

१८ परिव्यवेभ्यः क्रियः । परिक्रीणीते, विक्रीणीते, अवक्रीणीते ।

१९. विपराभ्यां जेः । विजयते, पराजयते ।

२०. आङो दोऽनास्यविहरणे । विद्यामादत्ते । आस्यग्रहणमविवक्षितम् । नेह :—मुखं विपादिकां कूलं वा व्याददाति । *पराङ्गकर्मकान्न निषेधः* व्याददते पिपीलिकाः पतङ्गस्य मुखम् ।

२१. क्रीडोऽनुसंपरिभ्यश्च । अनुक्रीडते, संक्रीडते, परिक्रीडते । चादाङः । आक्रीडते । *समोऽकूजने* संक्रीडति चक्रम् । *आगमेः क्षमायाम्* आगमयस्व[3] तावन्माणवकम् । *शिक्षेर्जिज्ञासायाम्* धनुषि शिक्षते[4] । *आशिषि नाथः*[5] सर्पिषो नाथते[6] । *हरतेर्गतताच्छील्ये* पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते । *किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्* अपस्किरते वृषो हृष्टः, कुक्कुटो भक्षार्थी श्वाश्रयार्थी च । *आङि नुप्रच्छयोः* आनुते शृगालः, आपृच्छते गुरुम् । *शप उपालम्भे* कृष्णाय शपते ।

२२ समवप्रविभ्यः स्थः । संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते । *आङः प्रतिज्ञायामुपसंख्यानम्* शब्दं नित्यमातिष्ठते[7] ।

२३. प्रकाशनस्थेयाख्ययोश्च[8] । गोपी कृष्णाय तिष्ठते[9] । संशय्य कर्णादिषु तिष्ठते[10] यः ।

---

१. भावः क्रिया । असत्त्वभूतो भावो हि तिङ्पदैरभिधीयते । २. क्रियाविनिमयः कर्मव्यतिहारः । ३. मा त्वरिष्ठा इत्यर्थः । ४. शकधातोः सन्नन्तस्येदं रूपम् । ५. आशिष्येवेति नियमार्थं वार्त्तिकम् । ६. सर्पिर्मे स्यादित्याशास्त इत्यर्थः । ७. प्रतिजानीत इत्यर्थः । ८. स्थेयाख्या निर्णेतृत्वेनाश्रयणम् । ९. स्वाशयं प्रकाशयतीत्यर्थः । १०. कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ।

२४. उदोऽनूर्ध्वकर्मणि । मुक्तावुत्तिष्ठते। * ईहायामेव * नेह :—ग्रामाच्छत-मुत्तिष्ठति ।

२५. उपान्मन्त्रकरणे[2] । आग्नेय्याग्नीध्रमुपतिष्ठते ।* उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् * आदित्यमुपतिष्ठते, गङ्गा यमुनामुपतिष्ठते, रथिकानुपतिष्ठते, पन्थाः स्रुघ्नमुपतिष्ठते । * वा लिप्सायाम् * भिक्षुकः प्रभुमुपतिष्ठते, उपतिष्ठति वा ।

२६. अकर्मकाच्च । भोजनकाले उपतिष्ठते ।

२७. उद्विभ्यां तपः । उत्तपते, वितपते[3] । * स्वाङ्गकर्मकाच्चेति[4] वक्तव्यम्* उत्तपते पाणिम् ।

२८. आङो यमहनः । आयच्छते, आयच्छेते, आयच्छन्ते। आहते, आघ्नाते, आघ्नते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह :—परस्य शिर आहन्ति ।

२९. समो गम्यृच्छिभ्याम् । सङ्गच्छते, समृच्छते । * विदिप्रच्छिस्वरतीनामुपसंख्यानम् * संवित्ते, संपृच्छते, संस्वरते । * अर्त्ति[5]श्रुदृशिभ्यश्चेति वक्तव्यम् * संकल्पा अस्य समरन्त[6] । संश्रृणुते, संपश्यते ।

३०. निसमुपविभ्यो ह्वः । निह्वयते, संह्वयते, उपह्वयते। * उपसर्गादस्यत्यूह्योर्वेति वाच्यम् * निरस्यते, निरस्यति । समूहते, समूहति ।

३१. स्पर्धायामाङः । कृष्णश्चाणूरमाह्वयते ।

३२. गन्धन[7]ावक्षेपण[8]सेवनसाहसिक्य[9]प्रतियत्न[10]प्रकथनोपयोगेषु कृञः । उत्कुरुते[11] । श्येनो वर्त्तिकामुदाकुरुते[12] । हरिमुपकुरुते[13] । परदारान् प्रकुरुते[14] ।

---

१. उद्युङ्क्त इत्यर्थः । २. मन्त्रः करणं यत्र तन्मन्त्रकरणं स्तुतिः । ३. दीप्यत इत्यर्थः । ४. स्वाङ्गं चेह न पारिभाषिकं किन्तु स्वमङ्गं स्वाङ्गम् । ५. अर्त्तीत्यनेन भौवादिकस्य जौहोत्यादिकस्य च ग्रहणम् । ६. इदं रूपं लुङि । ७. गन्धनमपकारप्रयुक्तं हिंसात्मकं सूचनम् । गन्ध अर्दने, अर्द हिंसायामिति चुरादौ पठ्यते । ८. अवक्षेपणं भर्त्सनम् । ९. साहसिक्यं साहसिकं कर्म । १०. प्रतियत्नो गुणाधानम् । ११. सूचयतीत्यर्थः। १२. भर्त्सयतीत्यर्थः । १३. सेवत इत्यर्थः। १४. तेषु सहसा प्रवर्त्तते ।

एधो दकस्योपस्कुरुते[1]। गाथाः प्रकुरुते। शतं प्रकुरुते[2]।

३३. अधेः प्रसहने[3]। शत्रुमधिकुरुते।

३४. वेः शब्दकर्मणः। स्वरान्विकुरुते[4]।

३५. अकर्मकाच्च। विकुर्वते छात्राः।

३६. संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु[5] नियः। शास्त्रे नयते[6]। दण्डमुन्नयते। माणवकमुपनयते[7]। तत्त्वं नयते[8]। कर्मकरानुपनयते[9]। करं विनयते[10]। शतं विनयते[11]।

३७. कर्त्तृस्थे चाशरीरे कर्मणि। क्रोधं विनयते। नेह :– गडुं विनयति।

३८. वृत्तिसर्गतायनेषु[12] क्रमः। ऋचि क्रमतेऽस्य बुद्धिः[13]। अध्ययनाय क्रमते[14]। अस्मिन् शास्त्राणि क्रमन्ते[15]।

३९. उपपराभ्याम्[16]। उपक्रमते, पराक्रमते।

४०. आङ उद्गमने। आक्रमते[17] सूर्यः। * ज्योतिरुद्गमन इति वाच्यम् * नेह :–आक्रामति धूमो हर्म्यतलात्।

४१. वेः पादविहरणे[18]। साधु विक्रमते वाजी। नेह :– विक्रामति सन्धिः।

४२. प्रोपाभ्यां समर्थाभ्याम्[19]। प्रक्रमते, उपक्रमते। नेह :– प्रक्रामति। गच्छतीत्यर्थः। उपक्रामति। आगच्छतीत्यर्थः।

४३. अनुपसर्गाद्वा[20]। क्रामति, क्रमते।

४४. अपह्नवे[21] ज्ञः। शतमपजानीते।

---

१. गुणमाधत्ते। २. धर्मार्थं विनियुङ्क्ते। ३. प्रसहनं क्षमाभिभवश्च। ४. उच्चारयति। ५. उत्सञ्जनमुत्क्षेपणम्। ६. शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन शिष्यसंमाननं फलितम्। ७. उपनयनपूर्वकेणाध्यापनेनोपनेतरि आचार्यत्वं क्रियते। ८. निश्चिनोत्यर्थः। ९. भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः। १०. विगणनमृणादेर्निर्यातनम्। राज्ञे देयं परिशोधयति। ११. धर्मार्थं विनियुङ्क्त इत्यर्थः। १२. वृत्तिरप्रतिबन्धः। सर्गं उत्साहः। तायनं वृद्धिः। १३. न प्रतिहन्यते। १४. उत्सहते। १५. स्फीतानि भवन्ति। १६. पूर्वसूत्रमनुवर्त्तते तेन नियमार्थमिदम्। १७. उदयते। १८. विहरणं विक्षेपः। १९. प्रारम्भे प्रोपयोस्तुल्यार्थता। २०. अप्राप्तविभाषेयम्। २१. अपह्नवोऽपलापः।

४५. अकर्मकाच्च । सर्पिषो जानीते[1] ।

४६. सम्प्रतिभ्यामनाध्याने[2] । शतं संजानीते, प्रतिजानीते वा ।

४७. भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु[3] वदः । शास्त्रे वदते, भृत्यानुपवदते, शास्त्रे वदते, क्षेत्रे वदते, क्षेत्रे विवदन्ते, कुलभार्यामुपवदते ।

४८. व्यक्तवाचां[4] समुच्चारणे । संप्रवदन्ते ब्राह्मणाः ।

४९. अनोरकर्मकात् । अनुवदते कठः कलापस्य[5] ।

५०. विभाषा विप्रलापे[6] । विप्रवदन्ते, विप्रवदन्ति वा वैद्याः ।

५१. अवाद् ग्रः । अवगिरते ।

५२. समः प्रतिज्ञाने । शब्दं नित्यं संगिरन्ते ।

५३. उदश्चरः सकर्मकात् । धर्ममुच्चरते[7] ।

५४. समस्तृतीयायुक्तात् । रथेन संचरते ।

५५. दाणश्च सा चेच्चतुर्थ्यर्थे । दास्या संयच्छते ।

५६. उपाद्यमः स्वकरणे । भार्यामुपयच्छते ।

५७. ज्ञाश्रुस्मृदृशां सनः । धर्मं जिज्ञासते, गुरुं शुश्रूषते, नष्टं सुस्मूर्षते, नृपं दिदृक्षते ।

५८. नानोर्ज्ञः । पुत्रमनुजिज्ञासति ।

५९. प्रत्याङ्भ्यां श्रुवः । प्रतिशुश्रूषति, आशुश्रूषति ।

६०. शदेः शितः । शीयते, शीयेते, शीयन्ते ।

६१. म्रियतेर्लुङ्लिङोश्च । म्रियते, मृषीष्ट, अमृत ।

६२. पूर्ववत्सनः । आसिसिषते, शिशयिषते । निविविक्षते, आचिक्रंसते ।

६३. आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । ईक्षांचक्रे, एधांचक्रे ।

---

१. सर्पिषोपायेन प्रवर्त्तत इत्यर्थः । २. आध्यानमुत्कण्ठापूर्वकं स्मरणं तद्भिन्ने । ३. भासनं दीप्तिः, उपसंभाषोपसान्त्वनम् । ज्ञानं सम्यगवबोधः, यत्न उत्साहः, विमतिर्नानामतिः, उपमन्त्रणं रहसि प्रार्थनम् । ४. मनुष्याणाम् । ५. यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः । ६. विप्रलापो विरुद्धोक्तिः । ७. उल्लङ्घ्य गच्छतीत्यर्थः ।

६४. प्रोपाभ्यां युजेरयज्ञपात्रेषु[1]। प्रयुङ्क्ते, उपयुङ्क्ते। * स्वराद्यन्तोपसर्गादिति वक्तव्यम् * उद्युङ्क्ते, नियुङ्क्ते।

६५. समः क्ष्णुवः। संक्ष्णुते शस्त्रम्।

६६. भुजोऽनवने[2]। भुङ्क्ते, भुञ्जाते।

६७. णेरणौ यत्कर्म[3] णौ चेत्स कर्त्तानाध्याने। दर्शयते[4] भवः। आरोहयते हस्ती। नेह :– स्मरयति वनगुल्मः।

६८. भीस्म्योर्हेतुभये। जटिलो भीषयते, मुण्डो भीषयते, विस्मापयते।

६९. गृधिवञ्च्योः प्रलम्भने[5]। माणवकं गर्धयते, वञ्चयते। नेहः – श्वानं गर्धयति।

७०. लियः संमाननशालीनीकरणयोश्च[6]। जटाभिर्लापयते[7], श्येनो वर्त्तिकामुल्लापयते[8]। बालमुल्लापयते[9]।

७१. मिथ्योपपदात्कृञोऽभ्यासे। पदं मिथ्या कारयते। नेह :– सकृत्पदं मिथ्या कारयति।

७२. स्वरितञितः कर्त्रभिप्राये क्रियाफले। यजते, पचते, सुनुते, कुरुते। पराभिप्राये तु यजति, पचति, सुनोति, करोति।

७३. अपाद्वदः। न्यायमपवदते धनकामः।

७४. णिचश्च। कटं कारयते। ओदनं पाचयते। कर्त्रभिप्राय इत्येव। नेह :–परस्य कटं कारयति, परस्य ओदनं पाचयति।

७५. समुदाङ्भ्यो यमोऽग्रन्थे। व्रीहीन् संयच्छते, भारमुद्यच्छते, वस्त्रमायच्छते। नेह :– उद्यच्छति वेदम्। कर्त्रभिप्राय एव। अन्यत्र तु संयच्छतीत्यादि।

७६. अनुपसर्गाज्ज्ञः। गां जानीते। अकर्त्रभिप्राये जानाति।

७७. विभाषोपपदेन प्रतीयमाने। स्वं यज्ञं यजते, यजति वा। स्वं कटं कुरुते, करोति वा[10]।

७८. शेषात्कर्त्तरि परस्मैपदम्। याति, वाति, भवति।

---

१. यज्ञपात्रे तु द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति। २. अवने तु महीं भुनक्ति। ३. णिचश्चेति सिद्धेऽकर्त्रभिप्रायार्थमिदम्। इह कर्मपदं क्रियार्थकमपि। तेन अणौ या क्रिया सैव णौ चेदित्यर्थः। ४. इह पश्यन्ति भवं भक्ताः, पश्यति भवः, दर्शयन्ति भवं भक्ता इति पूर्वकक्षात्रयमूह्यम्। ५. प्रलम्भनं मिथ्याफलाख्यानम्। ६. संमाननं पूजनम्, शालीनीकरणं न्यग्भावनम्। ७. पूजामधिगच्छतीत्यर्थः। ८. अभिभवतीत्यर्थः। ९. वञ्चयतीत्यर्थः। १०. एवं पञ्चसूत्र्यामुदाहार्यम्।

७६. अनुपराभ्यां कृञः । अनुकरोति, पराकरोति ।

८०. अभिप्रत्यतिभ्यः क्षिपः । अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति ।

८१. प्राद्वहः । प्रवहति ।

८२. परेर्मृषः । परिमृष्यति । वहेरनुवृत्त्या परिवहतीति केचित् ।

८३. व्याङ्परिभ्यो रमः । विरमति, आरमति, परिरमति ।

८४. उपाच्च । यज्ञदत्तमुपरमति[1] ।

८५. विभाषाऽकर्मकात् । उपरमति, उपरमते[2] वा ।

८६. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । बोधयति पद्मम्, योधयति काष्ठानि, नाशयति दुःखम्, जनयति सुखम्, अध्यापयति वेदम्, प्रावयति,[3] द्रावयति,[4] स्रावयति[5] ।

८७. निगरणचलनार्थेभ्यश्च । निगारयति, आशयति, भोजयति । चलयति, कम्पयति । * अदेः प्रतिषेधः * आदयते ।

८८. अणावकर्मकाच्चित्तवत्कर्तृकात् । आसयति, शाययति देवदत्तम् ।

८९. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः । पाययते, दमयते, आयामयते, आयासयते, परिमोहयते, रोचयते, नर्त्तयते, वादयते, वासयते । * धेट उपसंख्यानम् * धापयेते शिशुमेकं समीची ।

९०. वा क्यषः । लोहितायति, लोहितायते । पटपटायति, पटपटायते ।

९१. द्युद्भ्यो[6] लुङि । अद्युतत्, अद्योतिष्ट । अलुठत्, अलोठिष्ट ।

९२. वृद्भ्यः[7] स्यसनोः । वर्त्स्यति, वर्त्तिष्यते। अवर्त्स्यत, अवर्त्तिष्यत । विवृत्सति, विवर्त्तिषते ।

९३. लुटि च क्लृपः । कल्प्ता, कल्प्स्यति, चिक्लृप्सति । कल्पिता, कल्पिष्यते, चिकल्पिषते ।

इत्यार्षे पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते

प्रथमाध्यायस्य तृतीयपादः समाप्तः ।



१. उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽत्र रमिः । २. निवर्त्तत इत्यर्थः । ३. प्रापयतीत्यर्थः । ४. विलापयतीत्यर्थः । ५. स्पन्दयतीत्यर्थः । ६. बहुवचननिर्देशादाद्यर्थः । द्युतादिभ्य इत्यर्थः । ७. वृतु, वृधु, शृधु, स्यन्दू, कृपू—धातवो वृतादयो बहुवचननिर्देशाद् गृह्यन्ते ।

# अथ प्रथमाध्यायस्य चतुर्थपादः ।



१. आकडारादेका संज्ञा । * या परानवकाशा च * भेत्ता,[1] शिक्षा[2] अततक्षत्[3] ।

२. विप्रतिषेधे परं कार्यम् । वृक्षेभ्यः, रामेभ्यः ।

३. यू स्त्र्याख्यौ नदी । कुमारी, नदी । * प्रथमलिङ्गग्रहणञ्च * हे बहुश्रेयसि ।

४. नेयङुवङ्स्थानावस्त्री । हे श्रीः, हे भ्रूः ।

५. वामि । श्रीणाम्, श्रियाम् । भ्रूणाम्, भ्रुवाम् ।

६. ङिति ह्रस्वश्च । मत्यै, मतये । धेन्वै, धेनवे । श्रियै, श्रिये । भ्रुवै, भ्रुवे ।

७. शेषोऽघ्यसखि । हरये, वायवे, मतये, धेनवे । हरेः, हरौ ।

८. पतिः समास एव । भूपतिना, भूपतये । नेह :– पत्या, पत्ये ।

९. षष्ठीयुक्तश्छन्दसि वा । क्षेत्रस्य पतिना वयम् । पत्या वा ।

१० ह्रस्वं लघु । भेत्ता, छेत्ता, अचीकरत् ।

११. संयोगे गुरु । कुण्डा,[4] शिक्षा, भिक्षा ।

१२. दीर्घं च । ईहांचक्रे, ऊहांचक्रे ।

१३. यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । कर्त्ता, हर्त्ता, करिष्यति, औपगवः । भविष्यामि, कुण्डानि ।

१४. सुप्तिङन्तं पदम् । ब्राह्मणाः, पचन्ति । अन्तग्रहणात्संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ।[5] गौरी ब्राह्मणितरा ।

---

१. अत्र लघुसंज्ञा । तेन च लघूपधगुणः । २. अत्र गुरुसंज्ञैव । तेन चाङ्प्रत्ययः । ३. अत्र गुरुसंज्ञया लघुसंज्ञाया बाधात्सन्वल्लघुनीति न । ४. गुरोश्च हल इत्यप्रत्ययः । ५. तेन घरूपचेलडिति सूत्रे घपदं न घान्तग्राहकमतश्च गौरीत्यस्य न ह्रस्वः ।

१५. नः क्ये । राजीयति, राजायते । चर्मायति, चर्मायते । नियमार्थोऽयम्[1]। नेह :—वाच्यति ।

१६. सिति च । भवदीयः[2]।

१७. [3]स्वादिष्वसर्वनामस्थाने । राजभ्याम्, दद्भ्याम् ।

१८. यचि[4] भम् । गार्ग्यः[5], वात्स्यः । दाक्षिः, यूष्णः[6]। * नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् * नभस्वत्, अङ्गिरस्वत्, मनुष्वत् । * वृषण्वस्वश्वयोः * वृषण्वसुः, वृषणश्वः ।

१९. तसौ मत्वर्थे । विद्युत्वान् बलाहकः । यशस्वी ।

२०. अयस्मयादीनिच्छन्दसि[7]। अयस्मयं वर्म । सधुष्टुभा सऋक्वता[8] गणेन ।

२१. बहुषु बहुवचनम् । ब्राह्मणाः पठन्ति । रामाः । भवन्ति ।

२२. द्व्येकयोर्द्विवचनैकवचने । रामौ । भवतः । रामः । भवति ।

२३. कारके । अधिकारोऽयम्[9]। ग्रामादागच्छति ।

२४. ध्रुवमपायेऽपादानम् । ग्रामादागच्छति । धावतोऽश्वात्पतति । * जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् * अधर्माज्जुगुप्सते । अधर्माद्विरमति । धर्मात्प्रमाद्यति ।

२५. भीत्रार्थानां भयहेतुः । चौरेभ्यो बिभेति, चौरेभ्यस्त्रायते । चौरेभ्य उद्विजते, चौरेभ्यो रक्षति ।

२६. पराजेरसोढः । अध्ययनात्पराजयते ।

२७. [10]वारणार्थानामीप्सितः । यवेभ्यो गां वारयति, निवर्त्तयति ।

२८. [11]अन्तर्धौ येनादर्शनमिच्छति । उपाध्यायादन्तर्धत्ते । मातुर्निलीयते कृष्णः । नेह :— चौरान् न दिदृक्षते ।

---

१. नान्तमेव पदं नान्यदिति नियमः । २. भवतष्ठक्छसाविति छस् । पदत्वाज्जश् । ३. स्वादयः कप्प्रत्ययावधयः । ४. यस्मिन् विधिस्तदादावल्ग्रहण इति यादावजादावित्यर्थः । ५. यस्येति चेति लोपः । ६. अल्लोपोऽनः । ७. क्वचिद्भं क्वचित्पदं क्वचिदुभयमपि । ८. इह पदत्वात्कुत्वं भत्वाच्च जश्त्वं न । ९. तत्प्रयोजको हेतुश्चेति यावत् । कारकत्वं क्रियाजनकत्वम् । १०. प्रवृत्तिविघातो वारणम् । ११. व्यवधानमन्तर्धिः ।

२९. आख्यातोपयोगे[1]। उपाध्यायादधीते। नेह :— नटस्य शृणोति।

३०. जनिकर्त्तुः प्रकृतिः[2]। ब्रह्मणः प्रजाः प्रजायन्ते। शृङ्गाच्छरो जायते। गोमयाद् वृश्चिको जायते।

३१. भुवः प्रभवः[3]। हिमवतो गङ्गा प्रभवति।

३२. कर्मणा[4] यमभिप्रैति स सम्प्रदानम्। विप्राय गां ददाति। माणवकाय भिक्षां ददाति। * क्रियया यमभिप्रैति सोऽपि सम्प्रदानम् * पत्ये शेते, युद्धाय संनह्यते। * यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा * पशुना रुद्रं यजते।

३३. रुच्यर्थानां[5] प्रीयमाणः। हरये रोचते भक्तिः। देवदत्ताय स्वदतेऽपूपः।

३४. श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः[6]। देवदत्ताय श्लाघते। देवदत्ताय ह्नुते। गोपी कृष्णाय तिष्ठते। यज्ञदत्ताय शपते।

३५. धारेरुत्तमर्णः। देवदत्ताय शतं धारयति। भक्ताय धारयति मोक्षं हरिः। नेह :— शतं धारयति ग्रामे।

३६. स्पृहेरीप्सितः। पुष्पेभ्यः स्पृहयति[7]। नेह :— वने स्पृहयति।

३७. क्रुधद्रुहेर्ष्यासूयार्थानां[8] यं प्रति कोपः। देवदत्ताय क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति वा।

३८. क्रुधद्रुहोरुपसृष्टयोः कर्म। क्रूरमभिक्रुध्यति, अभिद्रुह्यति वा।

३९. राधीक्ष्योर्यस्य विप्रश्नः[9]। कृष्णाय राध्यति, ईक्षते[10] वा।

४०. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता। विप्राय गां प्रतिशृणोत्याशृणोति[11] वा।

---

१. आख्याता प्रतिपादयिता, उपयोगो नियमपूर्वकं विद्याग्रहणम्। २. प्रकृतिः कारणम्। ३. प्रभवः प्रथमतः प्रकाशस्थानम्। ४. अन्वर्थसंज्ञया दानस्य कर्मणेति योज्यम्। ५. अन्यकर्तृकोऽभिलाषो रुचिः। ६. ज्ञपयितुं स्वाभिप्रायं प्रकाशयितुमिष्यमाणः। ७. ईप्सिततमत्वविवक्षायान्तु पुष्पाणि स्पृहयतीत्येव। ८. क्रोधोऽमर्षः, द्रोहोऽपकारः, ईर्ष्याऽक्षमा, गुणेषु दोषाविष्करणमसूया। ९. विविधः प्रश्नो विप्रश्नः। १०. पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः। ११. विप्रेण मह्यं देहीति प्रवर्त्तितः प्रतिजानीते।

४१. अनुप्रतिगृणश्च । होत्रेऽनुगृणाति[1], प्रतिगृणाति ।

४२. साधकतमं[2] करणम् । दात्रेण लुनाति । बाणेन हतः ।

४३. दिवः कर्म च । अक्षैरक्षान्वा दीव्यति ।

४४. परिक्रयणे सम्प्रदानमन्यतरस्याम् । शताय शतेन वा परिक्रीतः ।

४५. आधारोऽधिकरणम्[3] । कटे शेते, आस्ते वा । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति ।

४६. अधिशीङ्स्थासां[4] कर्म । अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिः ।

४७. अभिनिविशश्च । अनिविशते सन्मार्गम् । अभिनिविशित्यवि-कृतस्य सङ्घातस्य ग्रहणान्नेह :— पापेऽभिनिवेशः ।

४८. उपान्वध्याङ्वसः । उपवसति, आवसति वा वैकुण्ठं हरिः । * अभुक्त्यर्थस्य न * वने उपवसति ।

४९. कर्तुरीप्सिततमं[5] कर्म । कटं करोति, हरिं भजति, ग्रामं गच्छति । नेह :— माषेष्वश्वं[6] बध्नाति । पयसा[7] ओदनं भुङ्क्ते ।

५०. तथायुक्तं चानीप्सितम्[8] । ग्रामं गच्छन् तृणं स्पृशति । ओदनं भुञ्जानो विषं भुङ्क्ते । चौरान् पश्यति ।

५१. अकथितञ्च ।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

---

१. होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयति । २. तमब्ग्रहणं ज्ञापयति नान्यत्र कारके शब्दसामर्थ्यगम्यः प्रकर्ष आश्रीयत इति। तेन गङ्गायां घोष इत्यादौ गौणाधारेऽप्यधिकरणसंज्ञा । इह प्रकर्षः फलाव्यवधानेन क्रियाजनकत्वरूपः । ३. कर्तृकर्मद्वारा क्रियाधार इत्यर्थात्। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधा-रस्त्रिधा । ४. आधार इति वर्त्तते । ५. क्रिययेत्यर्थात् । कर्त्तृवृत्तिव्यापारजन्य-फलाश्रयत्वेनेत्यर्थः । ६. कर्मणि ईप्सिता माषा न तु कर्त्तुः । ७. पयसा करणेन । पयोलाभेच्छयेत्यर्थः । भोजनफलाश्रयत्वे तु पय ओदनं च भुङ्क्त इति भवत्येव । ८. अनीप्सितं द्वेष्यमुदासीनञ्च । तृणमुदासीनम् विषचौराश्च द्वेष्याः ।

गां दोग्धि पयः। बलिं याचते वसुधाम्। अविनीतं विनयं याचते। तण्डुलान् ओदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति, हरति, कर्षति, वहति वा। ( अर्थनिबन्धनेयं संज्ञा ) बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषतेऽभिधत्ते वक्तीत्यादि।

५२. गतिबुद्धिप्रत्यवसानार्थ[1]शब्दकर्माकर्मकाणामणिकर्त्ता स णौ। शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत। आशयच्चामृतं देवान्वेदमध्यापयद्विधिम्। आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः॥१॥ * नीवह्योर्न * नाययति वाहयति वा भारं भृत्येन। * नियन्तृकर्तृकस्य वहेरनिषेधः * वाहयति रथं वाहान् सूतः। * आदिखाद्योर्न * आदयति खादयति वान्नं वटुना। * भक्षेरहिंसार्थस्य न * भक्षयत्यन्नं वटुना। नेह :– भक्षयति बलीवर्दान् शस्यम्। * जल्पतिप्रभृतीनामुपसंख्यानम् * जल्पयति भाषयति धर्मं पुत्रं देवदत्तः। * दृशेश्च * दर्शयति हरिं भक्तान्। * शब्दायतेर्न * शब्दाययति देवदत्तेन।

५३. हृक्रोरन्यतरस्याम्। हारयति कारयति वा भृत्यं भृत्येन वा कटम्। * अभिवादिदृशोरात्मनेपदे वेति वक्तव्यम् * अभिवादयते दर्शयते देवं भक्तं भक्तेन वा।

५४. स्वतन्त्रः[2] कर्त्ता। देवदत्तः पचति। स्थाली पचति। रामेण हतो वाली।

५५. तत्प्रयोजको हेतुश्च। स[3] कारयति, हारयति, भावयति।

५६. प्राग्[4]रीश्वरान्निपाताः। अधिकारोऽयम्।

५७. चादयोऽसत्त्वे। च, वा, ह, अह, एव, एवमित्यादि[5]। अ अपेहि। अहो ईशाः। नेह :– पशुर्वै[6] पुरुषः।

---

१. प्रत्यवसानं भक्षणम्। गतिबुद्धिप्रत्यवसानान्यर्था येषान्ते, शब्दः कर्म येषां ते, अकर्मकाश्च तेषामित्यर्थः। २. क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थ इत्यर्थः। स्वातन्त्र्यं चान्यानधीनव्यापाराश्रयत्वेन। ३. हेतुत्वाद्धेतुमति चेति णिच्। ४. अधिरीश्वर इति सूत्रात् प्रागित्यर्थः। ५. अन्ये गणपाठे द्रष्टव्याः। ६. पशुशब्दस्य चादौ पाठात्प्राप्तिः।

५८. प्रादयः। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि प्रति, परि, उप। [1] प्रभवति, पराभवति। नेह :— परा जयति सेना।

५९. उपसर्गाः क्रियायोगे। प्रणयति। परिणयति। * मरुच्छब्दस्योपसंख्यानम् * मरुद्भिर्दत्तो मरुत्तः। * श्रच्छब्दस्योपसंख्यानम् * श्रद्धा। [2]

६०. गतिश्च। प्रकृत्य, प्रकृतम्, प्रकरोति।

६१. ऊर्यादिच्विडाचश्च। [3] ऊरीकृत्य, ऊरीकृतम्। उररीकृत्य। शुक्लीकृत्य, शुक्लीकृतम्। पटपटाकृत्य, पटपटाकृतम्।

६२. अनुकरणं चानितिपरम्। खाट्कृत्य, खाट्कृतम्। नेह :— खाडिति कृत्वा निरष्ठीवत्।

६३. आदरानादरयोः सदसती। सत्कृत्य, सत्कृतम्, असत्कृत्य, असत्कृतम्। नेह :— सत्कृत्वा असत्कृत्वा वा काण्डं गतः।

६४. भूषणेऽलम्। अलङ्कृत्य, अलङ्कृतम्। नेह :— अलं कृत्वौदनं गतः।

६५. अन्तरपरिग्रहे। अन्तर्हत्य। [4] परिग्रहे तु अन्तर्हत्वा गतः। [5] * अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वक्तव्यम् * अन्तर्धा, अन्तर्धिः, अन्तर्णयति।

६६. कणेमनसी श्रद्धाप्रतिघाते। कणेहत्य, [6] मनोहत्य पयः पिबति।

६७. पुरोऽव्ययम्। पुरस्कृत्य, पुरस्कृतम्। नेह :— पुरः [7] कृत्वा गतः।

६८. अस्तं च। अस्तंगत्य सविता पुनरुदेति।

६९. अच्छ गत्यर्थवदेषु। अच्छगत्य, अच्छगतम्। अच्छोद्य, अच्छोदितम्। नेह [8] :— जलमच्छं गच्छति।

---

१. निपातत्वादव्ययत्वेन सुपो लुक्। २. सि. कौमुद्यां नेदं भाष्यवार्त्तिकमुपलभ्यते। ३. ऊरी, उररी, ताली, आताली, वेताली, धूसी, शकला, संसकला, ध्वंसकला, भ्रंशकलेत्यादयो गणपाठे द्रष्टव्याः। ४. मध्ये हत्वेत्यर्थः। ५. हतं गृहीत्वा गत इत्यर्थः ६. कणे-शब्दो निपातोऽभिलाषातिशये वर्त्तते। ७. पुर इति पुर-इति रान्तस्य द्वितीयाबहुवचने। ८. अव्ययमिति वर्त्तत इति हेतोः।

७०. अदोऽनुपदेशे । अदःकृत्य, अदःकृतम् । उपदेशे तु अदः कृत्वा ।

७१. तिरोऽन्तर्धौ । तिरोभूय, तिरोभूतम् । नेह :– तिरो भूत्वा[1] स्थितः ।

७२. विभाषा कृञि । तिरःकृत्य, तिरस्कृत्य[2], तिरः कृत्वा, तिरस्कृत्वा । अन्तर्धावित्येव । नेह :- तिरः कृत्वा काष्ठं गतः ।

७३. उपाजेऽन्वाजे । उपाजेकृत्य[3], उपाजे कृत्वा । अन्वाजेकृत्य, अन्वाजे कृत्वा ।

७४. साक्षात्प्रभृतीनि[4] च । * च्व्यर्थ इति वाच्यम् * साक्षात्कृत्य, साक्षात्कृत्वा । लवणंकृत्य, लवणं कृत्वा ।

७५. अनत्याधान उरसिमनसी । उरसिकृत्य, उरसि कृत्वा । मनसिकृत्य, मनसि कृत्वा । अत्याधाने तु उरसि कृत्वा पाणिं शेते ।

७६. मध्ये पदे निवचने च । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेकृत्य, निवचने कृत्वा[5] ।

७७. नित्यं हस्ते पाणावुपयमने[6] । हस्तेकृत्य, पाणौकृत्य ।

७८. प्राध्वं बन्धने । प्राध्वंकृत्य[7] । प्रार्थनादिभिरानुकूल्ये तु प्राध्वं कृत्वा ।

७९. जीविकोपनिषदावौपम्ये । जीविकाकृत्य, उपनिषत्कृत्य[8] । नेह :– जीविकां कृत्वा गतः ।

८०. ते प्राग्धातोः । प्रभवति । पराभवति ।

८१. छन्दसि परेऽपि । हन्ति नि मुष्टिना । निहन्ति मुष्टिना ।

---

१. पार्श्वतो भूत्वेत्यर्थः । २. तिरसोऽन्यतरस्यामिति वा सः । ३. दुर्बलस्य बलमाधायेत्यर्थः । विभक्तिप्रतिरूपकौ निपातावेतौ । ४. साक्षात्, मिथ्या, चिन्ता, भद्रा, लोचना, विभाषा, संपत्का, आस्था, अमा, श्रद्धा, प्राजर्या, प्राजरुहा, विजर्या, बीजरुहा, संसर्या । अर्थे, लवणम्, उष्णम्, शीतम्, उदकम्, आर्द्रम्, गतिसंज्ञासंनियोगेन मान्तत्वं निपात्यते । अग्नौ, वशे, विकम्पने, विहसने, प्रतपने, प्रादुस्, नमस्, आविस् । आकृतिगणोऽयम् । ५. वाचं नियम्येत्यर्थः । ६. उपयमनं विवाहः । ७. बन्धनेनानुकूलं कृत्वेत्यर्थः । ८. जीविकामिवोपनिषदमिव कृत्वेत्यर्थः ।

८२. व्यवहिताश्च । हरिभ्यां याह्योक आ । आ मन्द्रैरिन्द्र हरिभि-र्याहि ।

८३. कर्मप्रवचनीयाः । अधिकारोऽयमधिरीश्वर इति यावत् ।

८४. अनुर्लक्षणे । गत्युपसर्गसंज्ञापवादः । जपमनुप्रावर्षत्[1] ।

८५. तृतीयार्थे । नदीमन्ववसिता[2] सेना ।

८६. हीने । अनु हरिं[3] सुराः । अन्वर्जुनं योद्धारः ।

८७. उपोऽधिके च । उप परार्धे हरेर्गुणाः । उप हरिं सुराः ।

८८. अपपरी वर्जने । अप हरेः[4], परि हरेः संसारः ।

८९. आङ् मर्यादावचने[5] । आ मुक्तेः संसारः । आ सकलाद् ब्रह्म ।

९०. लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः । वृक्षम्प्रति पर्यनु वा विद्योतते विद्युत् । भक्तो विष्णुं प्रति पर्यनु वा । लक्ष्मीर्हरिं प्रति पर्यनु वा । वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति ।

९१. अभिरभागे । हरिमभि वर्त्तते, भक्तो हरिमभि, देवं देवमभि सिञ्चति[6] ।

९२. प्रतिः प्रतिनिधिप्रतिदानयोः । प्रद्युम्नः कृष्णात्प्रति[7] । तिलेभ्यः[7] प्रति यच्छति माषान् ।

९३. अधिपरी अनर्थकौ । कुतोऽध्यागच्छति[8], कुतः पर्यागच्छति[8] ।

९४. सुः पूजायाम् । सु सिक्तं भवता ।

९५. अतिरतिक्रमणे च । अति देवान् कृष्णः, अति स्तुतं भवता ।

---

१. जपहेतुकं जपोपलक्षितं वर्षणमित्यर्थः । परापि हेताविति तृतीयानेन बाध्यते । लक्षणेत्थम्भूतेत्यादिना सिद्धे पुनःसंज्ञाविधानसामर्थ्यात् । २. नद्या सह सम्बद्धे-त्यर्थः । ३. हरेर्हीना इत्यर्थः । ४. अत्र पञ्चम्यपाङ्परिभिरिति पञ्चमी । ५. वचनग्रहणादभिविधावपि । ६. कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया बाधान्न षत्वम् । ७. प्रतिनिधिप्रतिदाने च यस्मादिति पञ्चमी । ८. अनया गतिसंज्ञाया बाधः । तेन गति-र्गताविति निघातो नेति कर्मप्रवचनीयसंज्ञा-फलम् ।

९६. अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु । सर्पिषोऽपि स्यात्[1], मधुनोऽपि स्यात् । अपि स्तुयाद्विष्णुम् । अपि सिञ्च । धिग्देवदत्तमपि स्तुयाद् वृषलम् । अपि सिञ्च, अपि स्तुहि ।

९७. अधिरीश्वरे । अधि रामे भूः[2], अधि भुवि रामः ।

९८. विभाषा कृञि । यदत्र मामधिकरिष्यति[3] ।

९९. लः परस्मैपदम् । तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस, मस्, शतृक्वसू च । भवतीत्यादि ।

१००. तङानावात्मनेपदम् । त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ् । आनः (शानच्कानचौ) च ।

१०१. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । तिप्तस्झि–प्रथमः । सिप्, थस्, थ–मध्यमः । मिप्, वस्, मस्–उत्तमः । त, आताम्, झ–प्रथमः । थास्, आथाम्, ध्वम्–मध्यमः । इट्, वहि, महिङ्–उत्तमः ।

१०२. तान्येकवचनद्विवचनबहुवचनान्येकशः[4] । तिप्, सिप्, मिप्–एकवचनम् । तस्, थस् वस्–द्विवचनम् । झि, थ, मस्–बहुवचनम् । एवं सर्वत्र ।

१०३. सुपः । सु–एकवचनम् । औ–द्विवचनम् । जस्–बहुवचनम् । एवं सर्वत्र ।

१०४. विभक्तिश्च[5] । रामाः, भवतः ।

१०५. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि[6] मध्यमः। त्वं भवसि, युवां भवथः, यूयं भवथ । भवसि, भवथः, भवथ ।

१०६. प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । एहि मन्ये ओदनं भोक्ष्यसे इति, भुक्तः सोऽतिथिभिः ।

---

१. अत्र अपिशब्दो बिन्दुपदार्थद्योतकः सर्पिषो बिन्दुरपि दुर्लभ इत्यर्थः । सर्पिष इति षष्ठी तु बिन्दुना योगे । २. यस्मादधिकमिति सूत्रेणेह सप्तमी । ३. कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधात्तिङि चोदात्तवतीति निघातो न । ४. एकशः, एकैकमित्यर्थः । ५. तिङः सुपश्चेति वर्त्तते । ६. अप्रयुज्यमानेऽपीत्यर्थः ।

१०७. **अस्मद्युत्तमः**। अहं भवामि, आवां भवावः, वयं भवामः। भवामि। भवावः। भवामः।

१०८. **शेषे प्रथमः**। पचति, पचतः, पचन्ति।

१०९. **परः सन्निकर्षः संहिता**। दध्यत्र, मध्वत्र।

११०. **विरामोऽवसानम्**। दधिँ, वृक्षः।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसङ्कलिते
प्रथमाध्यायस्य चतुर्थः पादः समाप्तः।



# अथ द्वितीयाध्यायस्य प्रथमः पादः ।



१. समर्थः[1] पद[2]विधिः । परिभाषेयम् । कष्टं श्रितः कष्टश्रितः । नेह :— पश्य कष्टम् श्रितो गुरुकुलम् । शङ्कुलया खण्डः शङ्कुलाखण्डः । नेह :— करिष्यति शङ्कुलया, खण्ड उपलेन । एवमग्रेऽपि ।

२. सुबामन्त्रिते पराङ्गवत्स्वरे । द्रवत्पाणी शुभस्पती[3] । कुण्डेनाटन् । परशुना वृश्चन् । पूर्वाङ्गवच्चेति वक्तव्यम् * आ ते पितर्मरुताम् । प्रति त्वा दुहितर्दिवः । * अव्ययानां न * उच्चैरधीयान । * अव्ययीभावस्य त्विष्यते * उपाग्न्यधीयान ।

३. प्राक्कडारात्समासः । अधिकारोऽयम् ।

४. सह सुपा । अधिकारोऽयं विधिश्च । पूर्वम्भूतो भूतपूर्वः । सहेति योगो विभज्यते तिङापि सह यथा स्यात् स चच्छन्दस्येव । पर्यभूषत्, अनुव्यचलत् ।

५. अव्ययीभावः । अधिकारोऽयं तत्पुरुष इत्यतः प्राक् ।

६. अव्ययं विभक्तिसमीपसमृद्धि[4]व्यृद्ध्य[5]र्थाभावात्यया[6]सम्प्रति[7]शब्दप्रादुर्भावपश्चाद्यथा[8]नुपूर्व्ययौगपद्यसादृश्यसम्पत्ति[9]साकल्यान्तवचने[10]षु । अधिहरि, अपदिशम् । कृष्णस्य समीपमुपकृष्णम् । मद्राणां समृद्धिः सुमद्रम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा सम्प्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इति इतिहरि । विष्णोः पश्चादनुविष्णु । अनुरूपम् ।

---

१. समर्थः सामर्थ्यान्वितपदाश्रित इत्यर्थः । सामर्थ्यमेकार्थीभावः । २. पद-सम्बन्धी विधिः पदविधिः समासादिः । ३. शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः । पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात् । ४. ऋद्धेराधिक्यं समृद्धिः । ५. ऋद्धेरभावो व्यृद्धिः । ६. अत्ययो ध्वंसः । ७. असम्प्रति न युज्यत इत्यर्थः । ८. योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । ९. सम्पत्तिरनुरूप आत्मभावः । १०. वचनग्रहणं प्रत्येकं सम्बध्यते ।

अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत् सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां सम्पत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ।

७. **यथाऽसादृश्ये** । यथाध्यापकम् । सादृश्ये तु यथा हरिस्तथा हरः ।

८. **यावदवधारणे** । यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् । यावदमत्रं ब्राह्मणानामन्त्रयस्व ।

९. **सुप् प्रतिना मात्रार्थे** । शाकस्य लेशः शाकप्रति ।

१०. **अक्षशलाकासंख्याः परिणा** । अक्षेण विपरीतं वृत्तमक्षपरि, शलाकापरि, एकपरि ।

११. **विभाषा** । अधिकारोऽयम्[१] ।

१२. **अपपरिबहिरञ्चवः पञ्चम्या** । अपविष्णु संसारः, अप विष्णोः । बहिर्वनम्, बहिर्वनात् । प्राग्वनम्, प्राग्वनात् ।

१३. **आङ् मर्यादाभिविध्योः** । आमुक्ति संसारः, आ मुक्तेः । आबालं हरिभक्तिः, आ बालेभ्यः ।

१४ **लक्षणेनाभिप्रती आभिमुख्ये** । अभ्यग्नि शलभाः पतन्ति । अग्निमभि । प्रत्यग्नि, अग्निं प्रति ।

१५. **अनुर्यत्समया**[२] । अनुवनमशनिर्गतः ।

१६. **यस्य चायामः**[३] । अनुगङ्गं[४] वाराणसी । गङ्गाया अनु ।

१७. **तिष्ठद्गुप्रभृतीनि च** । तिष्ठन्त्यो गावो यस्मिन् स तिष्ठद्गु गोदोहनकालः ।

१८. **पारे मध्ये षष्ठ्या वा** । पारेगङ्गम्, गङ्गापारम्, गङ्गायाः पारम् । मध्येगङ्गम्, गङ्गामध्यम्, गङ्गाया मध्यम् ।

१९. **संख्या वंश्येन** । द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य । त्रिमुनि । विद्यातद्वतामभेदविवक्षायान्तु त्रिमुनि व्याकरणम् ।

---

१. चार्थे द्वन्द्व इति यावत् । २. समया सामीप्यम् । ३. आयामो दैर्घ्यम् । ४. गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः ।

२०. नदीभिश्च । * समाहारे चायमिष्यते * सप्तगङ्गम्, द्वियमुनम्, पञ्चनदम्, सप्तगोदावरम् ।

२१. अन्यपदार्थे च संज्ञायाम् । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् ।

२२. तत्पुरुषः । अधिकारोऽयम्[१] ।

२३. द्विगुश्च । पञ्चराजी, द्व्यहः, पञ्चगवम् ।

२४. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । कष्टं श्रितः, कष्टश्रितः । कान्तारमतीतः, कान्तारातीतः । नरकं पतितः, नरकपतितः । ग्रामगतः । तरङ्गात्यस्तः । सुखप्राप्तः । सुखापन्नः । * गम्यादीनामुपसंख्यानम् * ग्रामं गमी, ग्रामगमी । अन्नम्बुभुक्षुः, अन्नबुभुक्षुः ।

२५. स्वयं क्तेन । स्वयंकृतस्यापत्यं स्वायंकृतिः ।

२६. खट्वा क्षेपे । खट्वारूढो जाल्मः ।

२७. सामि । सामिकृतम्[२] ।

२८. कालाः । मासप्रमितः[३] प्रतिपच्चन्द्रः ।

२९. अत्यन्तसंयोगे[४] च । मुहूर्तं सुखम्, मुहूर्तसुखम् ।

३०. तृतीया तत्कृतार्थेन गुणवचनेन । शङ्कुलया खण्डः, शङ्कुलाखण्डः । धान्यार्थः[५] ।

३१. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः । मासपूर्वः, मातृसदृशः, पितृसमः, माषोनम्, माषविकलम्, वाक्कलहः, आचारनिपुणः, गुडमिश्रः, आचारश्लक्ष्णः । * अवरस्योपसंख्यानम् * मासेनावरो मासावरः ।

३२. कर्तृकरणे कृता बहुलम् । हरिणा त्रातो हरित्रातः । नखनिर्भिन्नः । बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम् । तेन दात्रेण लूनवानित्यादौ न ।

३३. कृत्यैरधिकार्थवचने[६] । वातच्छेद्यं तृणम् । काकपेया नदी ।

३४. अन्नेन व्यञ्जनम् । दध्ना ओदनः, दध्योदनः[७] ।

---

१. शेषो बहुव्रीहिरिति यावत् । २, सामीत्यर्धार्थमव्ययम् । ३. मासम्परिच्छेत्तुमारब्धवानित्यर्थः । अनत्यन्तसंयोगार्थं वचनम् । ४. इह क्तेनेति न सम्बध्यते । ५. अर्थशब्देन समासः । ६. स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनम् । ७. अत्रोपसेकक्रियाद्वारा सामर्थ्यम् ।

३५. भक्ष्येण मिश्रीकरणम्। गुडेन धाना गुडधानाः[1]।

३६. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः[2]। यूपाय दारु, यूपदारु। नेह :– रन्धनाय स्थाली। * अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् * द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः, गोहितम्, गोसुखम्, गोरक्षितम्।

३७. पञ्चमी भयेन। चोराद्भयं चोरभयम्। * भयभीतभीतिभीभिरिति वाच्यम् * वृकभीतः, वृकभीतिः, वृकभीः।

३८. अपेतापोढमुक्तपतितापत्रस्तैरल्पशः। सुखापेतः, कल्पनापोढः, चक्रमुक्तः, स्वर्गपतितः, तरङ्गापत्रस्तः। नेह :– प्रासादात्पतितः।

३९. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन। स्तोकान्मुक्तः[3], अन्तिकादागतः, अभ्याशादागतः, दूरादागतः, विप्रकृष्टादागतः, कृच्छ्रादागतः।

४०. सप्तमी शौण्डैः[4]। अक्षेषु शौण्डः, अक्षशौण्डः। ईश्वराधीनः[5]।

४१. सिद्धशुष्कपक्वबन्धैश्च। सांकाश्यसिद्धः, आतपशुष्कः, स्थालीपक्वः, चक्रबन्धः।

४२. ध्वाङ्क्षेण क्षेपे। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः, तीर्थकाकः[6]।

४३. कृत्यैर्ऋणे[7]। मासे देयं मासदेयमृणम्। वत्सरदेयम्। पूर्वाह्णेगेयं साम[8]।

४४. संज्ञायाम्। अरण्येतिलकाः[9], वनेकसेरुकाः।

४५. क्तेनाहोरात्रावयवाः। पूर्वाह्णकृतम्। अपररात्रकृतम्।

४६. तत्र। तत्रकृतम्[10]। तत्रभुक्तम्।

---

१. मिश्रणद्वारा सामर्थ्यम्। २. तदर्थेन प्रकृतिविकृतिभाव एवेष्यते। ३. पञ्चम्याः स्तोकादिभ्य इत्यलुक्। ४. शौण्डादिभिरित्यर्थः। शौण्ड, कितव, धूर्त्त व्याड, प्रवीण, संवीत, अन्तर्, अधि, पण्डित, कुशल, चपल, निपुणशब्दास्तत्र। ५. अषडक्षेति खः। ६. अनवस्थित इत्यर्थः। ध्वाङ्क्षपदेनात्र ध्वाङ्क्षवाचिनो ग्रहः। ७. ऋणग्रहणमावश्यकोपलक्षणार्थम्। ८. तत्पुरुषे कृती त्यलुक ९. हलदन्तादित्यलुक्। १०. ऐकपद्यमैकस्वर्यञ्च समासफलम्।

४७. क्षेपे। अवतप्तेनकुलस्थितं तवैतत्[1]।

४८. पात्रेसमितादयश्च। पात्रेसमिताः[2], गेहेशूरः, गेहेनर्दी।

४९. पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन। पूर्वं स्नातः पश्चादनुलिप्तः, स्नातानुलिप्तः। एकनाथः, सर्वयाज्ञिकः, जरन्नैयायिकाः, पुराणमीमांसकाः, नवपाठकाः, केवलवैयाकरणाः।

५०. दिक्संख्ये संज्ञायाम्। पूर्वेषुकामशमी, सप्तर्षयः। संज्ञायामेवेति नियमार्थम्। नेह :– उत्तरा वृक्षाः, पञ्च ब्राह्मणाः।

५१. तद्धितार्थोत्तरपदसमाहारे च। पूर्वस्यां शालायां भवः पौर्वशालः[3], आपरशालः। पूर्वशालाप्रियः। षाण्मातुरः। * द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् * पञ्चगवधनः[4]।

५२. संख्यापूर्वो द्विगुः। पञ्चगवम्, पञ्चकपालः[5]।

५३. कुत्सितानि कुत्सनैः। वैयाकरणखसूचिः[6], मीमांसकदुर्दुरूढः।

५४. पापाणके कुत्सितैः। पापनापितः, अणककुलालः।

५५. उपमानानि सामान्यवचनैः। घन इव श्यामो घनश्यामः, शस्त्रीश्यामा।

५६. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। पुरुषो व्याघ्र इव पुरुषव्याघ्रः, नृसोमः।

५७. विशेषणं विशेष्येण बहुलम्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम्। कृष्णसर्पः। क्वचिन्न रामो जामदग्न्यः।

५८. पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च। पूर्ववैयाकरणः, अपराध्यापकः। * अपरस्यार्धे पश्चभावो वक्तव्यः * अपरश्चासावर्धः पश्चार्धः। प्रथमपुरुषः, चरमपुरुषः, जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः, मध्यमपुरुषः, वीरपुरुषः[7]।

---

१. चापलमित्यर्थः। २. भोजनकाल उपस्थिता न तु कार्य इत्यर्थः। ३. दिक्पूर्वपदादिति ञः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। ४. गोरतद्धितेति टच्। ५. संस्कृतं भक्षा इत्यण् तस्य द्विगोर्लुगिति लुक। ६. निष्प्रभ इत्यर्थः। ७. एकवीर इति तु बाहुलकात्।

५९. श्रेण्यादयः[1] कृतादिभिः[2]। * श्रेण्यादिषु च्व्यर्थवचनं कर्त्तव्यम् * अश्रेणयः श्रेणयः कृताः, श्रेणीकृताः, एककृताः।

६०. क्तेन नञ्विशिष्टेनानञ्। कृतं च तदकृतं च कृताकृतम्, भुक्ताभुक्तम्। * शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम् * शाकप्रियः पार्थिवः, शाकपार्थिवः।

६१. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः। सद्वैद्यः, महावैयाकरणः, परमपुरुषः, उत्तमपुरुषः, उत्कृष्टपुरुषः।

६२. वृन्दारकनागकुञ्जरैः पूज्यमानम्। गोवृन्दारकः। अश्ववृन्दारकः। गोनागः, गोकुञ्जरः।

६३. कतरकतमौ जातिपरिप्रश्ने। कतरकठः, कतमकलापः।

६४. किं क्षेपे। किंराजा[3] यो न रक्षति।

६५. पोटा युवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः। इभपोटा[4], इभयुवतिः, अग्निस्तोकः, उदश्वित्कतिपयम्, गोगृष्टिः[5], गोधेनुः[6], गोवशा[7], गोवेहत्[8], गोवष्कयणी[9]। कठप्रवक्ता, कठश्रोत्रियः, कठाध्यापकः, कठधूर्त्तः।

६६. प्रशंसावचनैश्च[10]। गोमतल्लिका, गोमचर्चिका, गोप्रकाण्डम्, गवोद्धः, गोतल्लजः।

६७. युवा[11] खलतिपलितवलिनजरतीभिः। युवा खलतिः, युवखलतिः। युवतिः खलतिः, युवखलतिः, युवपलितः, युववलिनः, युवजरती[12]।

---

१. श्रेणि, एक, पूग, कुण्ड, राशि, विशिख, निचय, निधान, इन्द्र, देव, मुण्ड, भूत, श्रवण, वदान्य, अध्यापक, ब्राह्मण, क्षत्रिय, पटु, पण्डित, कुशल, चपल, निपुण, कृपणे-तिश्रेण्यादिः। २. कृत, मित, मत, भूत, उक्त, समाज्ञात, सामाम्नात, समाख्यात, संभावित, अवधारित, निराकृत, अवकल्पित, उपकृत, उपाकृते-तिकृतादिः। ३. कुत्सितो राजेति विग्रहः। किमः क्षेप इति निषेधान्न टच्। ४. पोटा स्त्रीपुंसलक्षणा। ५. गृष्टिः सकृत्प्रसूता। ६. धेनुर्नवप्रसूतिका। ७. वशा वन्ध्या। ८. वेहद् गर्भघातिनी। ९. वष्कयणी तरुणवत्सा। १०. प्रशस्ता गौरित्यर्थः। मतल्लिकादयः शब्दा नियतलिङ्गाः प्रशंसावचनाः। ११. पूर्वनिपातार्थं वचनम्। जरतीतिस्त्रीलिङ्गनिर्देशात् प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ज्ञाप्यते। १२. युवत्यामेव जरतीधर्मोपलम्भेन सामानाधिकरण्यम्।

६८. कृत्यतुल्याख्या अजात्या। भोज्योष्णम्, तुल्यश्वेतः, सदृशश्वेतः।

६९. वर्णो वर्णेन। कृष्णसारङ्गः[१]।

७०. कुमारः श्रमणादिभिः[२]। कुमारश्रमणा।

७१. चतुष्पादो गर्भिण्या। गोगर्भिणी।

७२ मयूरव्यंसकादयश्च। मयूरो व्यंसको मयूरव्यंसकः[३], उदक्चावाक्च उच्चावचम्, निश्चितं च प्रचितं निश्चप्रचम्, नास्ति किञ्चन यस्य सोऽकिञ्चनः। * आख्यातमाख्यातेन क्रियासातत्ये * अश्नीत पिबतेत्येवं सततं यत्राभिधीयते साश्नीतपिबता, पचतभृज्जता, खादतमोदता। * एहीडादयोऽन्यपदार्थे * एहीडेति यस्मिन्कर्मणि तदेहीडम्, एहिपचम्, उद्धरोत्सृजा, उद्धमविधमा। * जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति * जहिजोडः, जहिस्तम्बः। नास्ति कुतोऽपि भयं यस्य सोऽकुतोभयः, अन्यो राजा राजान्तरम्, चिदेव चिन्मात्रम्।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसङ्कलिते
द्वितीयाध्यायस्य प्रथमः पादः समाप्तः।



---

१. सारङ्गश्चित्रः। २. श्रमणा, प्रव्रजिता, गर्भिणीत्यादयः शब्दाः स्त्रीलिङ्गाः पठ्यन्ते। लिङ्गविशिष्टपरिभाषाया इदमपि ज्ञापकम्। ३. व्यंसको धूर्त्तः।

# अथ द्वितीयाध्यायस्य द्वितीयः पादः



१. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः, अपरकायः, अधरकायः, उत्तरकायः। मध्याह्नः[1], सायाह्नः, मध्यरात्रः।

२ अर्धं नपुंसकम्। अर्धं पिप्पल्या अर्धपिप्पली।

३ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्। द्वितीयं भिक्षाया द्वितीयभिक्षा, भिक्षाद्वितीयम्। तृतीयभिक्षा, भिक्षातृतीयम्। चतुर्थभिक्षा, भिक्षाचतुर्थम्। तुर्यभिक्षा, भिक्षातुर्यम्।

४ प्राप्तापन्ने च द्वितीयया। प्राप्तो जीविकाम् प्राप्तजीविकः, जीविकाप्राप्तः, प्राप्तजीविका[2]। आपन्नजीविकः, जीविकापन्नः, आपन्नजीविका[2]।

५. कालाः परिमाणिना। मासो जातस्य यस्य स मासजातः, द्वयहजातः।

६. नञ्। न ब्राह्मणः, अब्राह्मणः। * नञो नलोपस्तिङि क्षेपे * अपचसि त्वं जाल्म।

७. ईषदकृता। ईषत्पिङ्गलः। * ईषद् गुणवचनेनेति वाच्यम् * ईषद्रक्तम्।

८. षष्ठी। राज्ञः पुरुषः, राजपुरुषः। राजकम्बलः। * कृद्योगा[3] षष्ठी समस्यत इति वाच्यम् * इध्मस्य व्रश्चनः, इध्मव्रश्चनः।

९. याजकादिभिश्च। ब्राह्मणयाजकः, देवपूजकः। * गुणात्तरेण तरलोपश्चेति वक्तव्यम्[4] * सर्वेषां श्वेततरः, सर्वश्वेतः। सर्वशुक्ला गौः।

१०. न निर्धारणे। नृणां द्विजः श्रेष्ठः। * प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् * सर्पिषो ज्ञानम्।

---

१. संख्याविसायेतिज्ञापकात्सर्वोऽप्येकदेशः कालेन समस्यते। २. द्वितीयया अ इतिच्छित्त्वा अकारविधानात्प्राप्तापन्नयोः स्त्रीलिङ्गयोरकारान्तत्वं विधीयते। तेन पुंवद्भावाप्राप्तावपि रूपसिद्धिः। ३. प्रतिपदविधाना षष्ठी न समस्यत इत्यस्य प्रतिप्रसवोऽयम्। ४. न निर्धारण इति पूरणगुणेति च निषेधस्य प्रतिप्रसवोऽयम्।

११. पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन । सतां षष्ठः, छात्राणां दशमः, काकस्य कार्ष्ण्यम्, ब्राह्मणस्य शुक्लाः[1] । नेह :—बुद्धिमान्द्यम्, अर्थगौरवम् । फलानां सुहितः[2], द्विजस्य कुर्वन्[3] कुर्वाणो वा, ब्राह्मणस्य कृत्वा[4], ब्राह्मणस्य कर्त्तव्यम् । तव्यता तु भवत्येव स्वकर्त्तव्यम् । तक्षकस्य सर्पस्य ।

१२. क्तेन च पूजायाम्[5] । राज्ञां मतो, बुद्धः, पूजितो[6] वा ।

१३. अधिकरणवाचिना च । इदमेषामासितं, गतं, भुक्तं वा ।

१४ कर्मणि च । आश्चर्यो गवां दोहोऽगोपेन ।

१५. तृजकाभ्यां कर्त्तरि । अपां स्रष्टा । वज्रस्य भर्त्ता । ओदनस्य पाचकः । पत्यर्थभर्त्तृशब्दस्य तु याजकादौ पाठात्समासः । भूभर्त्ता । शेषषष्ठ्या समासे च नायं निषेधः । त्रिभुवनविधाता ।

१६. कर्त्तरि च । भवतः शायिका ।

१७. नित्यं क्रीडाजीविकयोः । उद्दालकपुष्पभञ्जिका[7] । दन्तलेखकः ।

१८. कुगतिप्रादयः । कुत्सितः पुरुषः, कुपुरुषः । ऊरीकृतम् । * कारिकाशब्दस्योपसंख्यानम् * कारिकाकृत्य[8], दुष्पुरुषः, सुपुरुषः । * प्रादयो गताद्यर्थे प्रथमया * प्रगत आचार्यः प्राचार्यः । * अत्यादयः क्रान्ताद्यर्थे द्वितीयया * अतिक्रान्तो मालामतिमालः । * अवादयः क्रुष्टाद्यर्थे तृतीयया * अवक्रुष्टः कोकिलयावकोकिलः । * पर्यादयो ग्लानाद्यर्थे चतुर्थ्या * परिग्लानोऽध्ययनाय पर्यध्ययनः । अलं कुमार्यै, अलंकुमारिः । * निरादयः क्रान्ताद्यर्थे पञ्चम्या * निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः । * इवेन समासो विभक्त्यलोपश्च * जीमूतस्येव । * कर्मप्रवचनीयानां प्रतिषेधः * वृक्षम्प्रति ।

१९. उपपदमतिङ् । कुम्भकारः । गतिकारकोपपदानां[9] कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः । व्याघ्री, अश्वक्रीती, कच्छपी ।

---

१. प्रकरणादिना दन्ता इति विशेष्ये ज्ञात इदमुदाहरणम् । अनित्योऽयं गुणेन निषेधस्तदशिष्यं संज्ञाप्रमाणत्वादित्यादिनिर्देशात । २. तृप्त इत्यर्थः । ३. किङ्कर इत्यर्थः । ४. पूर्वोत्तरसाहचर्यादव्ययं कृदेव । तेन तदुपरीत्यादि । ५. अत्र पूजापदेन मतिबुद्धिपूजार्थेभ्यश्चेतिविहितमुपलक्ष्यते । ६. राजपूजित इत्यादौ तु भूतक्तान्तेन तृतीयातत्पुरुषः । ७. क्रीडाविशेषस्य संज्ञेयम् । संज्ञायामिति ण्वुल् । ८. कारिका क्रिया । ९. अतिङ्ग्रहणाज्ज्ञापकादिदं लभ्यते ।

२०. **अमैवाव्ययेन**। स्वादुङ्कारं भुङ्क्ते। अमैवेतिनियमान्नेह कालो भोक्तुम्। अग्रे भुक्त्वा अग्रे भोजम्[1]।

२१. **तृतीयाप्रभृतीन्यन्यतरस्याम्**[2]। मूलकेनोपदंशं, मूलकोपदंशं भुङ्क्ते।

२२. **क्त्वा च**। उच्चैःकृत्य, उच्चैः कृत्वा[3]।

२३ **शेषो**[4] **बहुव्रीहिः**। अधिकारोऽयं चार्थे द्वन्द्व इत्यतः प्राक्।

२४ **अनेकमन्यपदार्थे**। प्राप्तमुदकं यं स प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। वीरपुरुषको ग्रामः। * प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः * प्रपतितपर्णः, प्रपर्णः। * नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः * अविद्यमानपुत्रः, अपुत्रः। अस्तिक्षीरा।

२५. **संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये**। दशानां समीपे ये सन्ति ते उपदशाः[5], उपविंशाः, अदूरदशाः, अधिकचत्वारिंशाः, द्वौ वा त्रयो वा द्वित्राः। द्विरावृत्ता दश द्विदशाः[6]।

२६. **दिङ्नामान्यन्तराले**। दक्षिणस्याः पूर्वस्याश्चान्तरालं दिक् दक्षिणपूर्वा। उत्तरपूर्वा। नामग्रहणाद्यौगिकानां न। ऐन्द्र्याश्च कौवेर्याश्चान्तरालं दिक्।

२७. **तत्र तेनेदमिति सरूपे**[7]। केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि, कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि। मुष्टीमुष्टि। बाहूबाहवि।

२८. **तेन सहेति तुल्ययोगे**। पुत्रेण सह, सपुत्रः, सहपुत्रो[8] वा आगतः। तुल्ययोगवचनं प्रायिकम्। सकर्मकः। सलोमकः।

---

१. अमान्येन च तुल्यविधानमेतत्। २. उपदंशस्तृतीयायामित्यत आरभ्येत्यर्थः। ३. अव्यये यथाभिप्रेतेति क्त्वा। ४. उक्तादन्यः शेषः प्रथमान्तमित्यर्थः। ५. नव एकादश वेत्यर्थः। ६. विंशतिरित्यथः ७. इतिशब्दाद्विषयविशेषाणां प्रतीतिः। ८. वोपसर्जनस्येति सहस्य सो वा।

२९. चार्थे[1] द्वन्द्वः। धवखदिरौ। संज्ञापरिभाषम्। होतृपोतृनेष्टोद्गातारः।

३०. उपसर्जनं पूर्वम्। कष्टश्रितः। शङ्कुलाखण्डः। यूपदारु। वृकभयम्। राजपुरुषः। अक्षशौण्डः।

३१. राजदन्तादिषु परम्। दन्तानां राजा राजदन्तः। * धर्मादिष्वनियमः * अर्थधर्मौ धर्मार्थौ। जम्पती[2], दम्पती, जायापती।

३२. द्वन्द्वे घि। हरिश्च हरश्च हरिहरौ। * अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे * हरिगुरुहराः, हरिहरगुरवः।

३३. अजाद्यदन्तम्। ईशकृष्णौ। * बहुष्वनियमः * अश्वरथेन्द्राः। इन्द्राश्वरथाः। इन्द्राग्नी[3]।

३४. अल्पाच्तरम्। शिवकेशवौ। * ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण * हेमन्तशिशिरवसन्ताः। कृत्तिकारोहिण्यौ। * लघ्वक्षरं पूर्वम् * कुशकाशम्। * अभ्यर्हितं च * तापसपर्वतौ। * वर्णानामानुपूर्व्येण * ब्राह्मणक्षत्रियविट्शूद्राः। * भ्रातुर्ज्यायसः * युधिष्ठिरार्जुनौ। * संख्याया अल्पीयस्याः * द्वित्राः।

३५. सप्तमीविशेषणे बहुव्रीहौ। कण्ठेकालः, चित्रगुः। * सर्वनामसंख्ययोरुपसंख्यानम् * सर्वश्वेतः, द्विशुक्लः। शब्दपरविप्रतिषेधात्। द्व्यन्यः, त्र्यन्यः * वा प्रियस्य * गुडप्रियः, प्रियगुडः। * गड्वादेः परा सप्तमी * गडुकण्ठः। क्वचिन्न :—वहेगडुः।

३६. निष्ठा। कृतकृत्यः। * जातिकालसुखादिभ्यः परा निष्ठा वाच्या * सारङ्गजग्धी, मासजाता, सुखजाता। प्रायिकं चेदम्। कृतकटः, पीतोदकः।

---

१. समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः। मिलितानामन्वय इतरेतरयोगः। समूहः समाहारः। तेषु समुच्चयान्वाचययोरसामर्थ्यान्न समासः। २. जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। ३. घ्यन्तादजाद्यदन्तं विप्रतिषेधेन।

३७. वाहिताग्न्यादिषु[1]। आहिताग्निः, अग्न्याहितः। * प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ। अस्युद्यतः, दण्डपाणिः। क्वचिन्न :– विवृतासिः।

३८. कडाराः[2] कर्मधारये। कडारजैमिनिः, जैमिनिकडारः।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसङ्कलिते
द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः।



१. आकृतिगणोऽयम्। २. कडार, गडुल, काण, खञ्ज, कुण्ठ, खञ्जर, खलति, गौर, वृद्ध, भिक्षुक, पिङ्गल, तनु, वटरे-ति।

# अथ द्वितीयाध्यायस्य तृतीयपादः ।



१. अनभिहिते । अधिकारोऽयम् ।

२. कर्मणि द्वितीया । कटं करोति, हरिं भजति। अभिहिते[1] तु प्रथमैव हरिः सेव्यते, लक्ष्म्या सेवितः। शतेन क्रीतः शत्यः। प्राप्त आनन्दो यं प्राप्तानन्दः। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

* उभसर्वतसोः कार्या धिगुपर्य्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ *

उभयतः कृष्णं गोपाः। सर्वतः कृष्णम् । धिक् कृष्णाभक्तम् । उपर्य्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । * अभितः परितः-समयानिकषाहाप्रतियोगेऽपि * अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा[2] कृष्णाभक्तम् । बुभुक्षितं न प्रति भाति किञ्चित् ।

३. तृतीया च होश्छन्दसि । यवाग्वाग्निहोत्रं[3] जुहोति । यवागूमग्निहोत्रं जुहोति ।

४. अन्तरान्तरेण युक्त । अन्तरा त्वां मां च हरिः । अन्तरेण हरिं न सुखम् ।

५. कालाध्वनोरत्यन्तसंयोगे । मासमधीते । मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः ।

६. अपवर्गे तृतीया । अह्ना क्रोशेन वानुवाकोऽधीतः ।

७. सप्तमीपञ्चम्यौ कारकमध्ये । अद्य भुक्त्वा[4] द्व्यहे द्व्यहाद्वा भोक्ता । इहस्थोऽयं[5] क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् ।

८. कर्मप्रवचनीययुक्ते द्वितीया । जपमनु प्रावर्षत् ।

---

१. अभिधानञ्च तिङ्कृत्तद्धितसमासैरित्यर्थः । क्वचिन्निपातेनापि । २. तस्य शोच्यत इत्यर्थः । ३. अग्निहोत्रशब्दोऽत्र हविषि वर्त्तते । अग्नये हूयत इति व्युत्पत्तेः । ४. अत्र कर्त्तृशक्तिद्वयमध्ये कालः । ५. कर्त्तृकर्मशक्त्योर्मध्येऽत्र देशः ।

**९. यस्माद्धिकं यस्य चेश्वरवचनं तत्र सप्तमी ।** उप परार्धे[1] हरेर्गुणाः । अधि भुवि[2] रामः । अधि रामे[2] भूः । सप्तमी शौण्डै[3]रिति समासे तु रामाधीना[4] भूः ।

**१०. पञ्चम्यपाङ्परिभिः ।** अप हरेः, परि[5] हरेः संसारः । आ मुक्तेः संसारः । आ सकलाद्ब्रह्म ।

**११. प्रतिनिधिप्रतिदाने च यस्मात् ।** प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रति यच्छति माषान् ।

**१२. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।** ग्रामं ग्रामाय वा गच्छति । नेह :– पन्थानं गच्छति । गन्त्राधिष्ठितेऽध्वन्येवायं निषेधः । नेह :– उत्पथेन पथे[6] गच्छति ।

**१३. चतुर्थी सम्प्रदाने[7] ।** विप्राय गां ददाति । पत्ये शेते । * तादर्थ्ये चतुर्थी वाच्या * मुक्तये हरिं भजति । * क्लृपिसंपद्यमाने च * भक्तिर्ज्ञानाय कल्पते, संपद्यते, जायते वा । * उत्पातेन ज्ञापिते च * वाताय कपिला विद्युत्[8] । * हितयोगे च * ब्राह्मणाय हितम् ।

**१४. क्रियार्थोपपदस्य च कर्मणि स्थानिनः[9] ।** फलेभ्यो याति[10] ।

**१५. तुमर्थाच्च भाववचनात् ।** यागाय[11] याति ।

**१६. नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ।** हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । दैत्येभ्यो हरिरलं, प्रभुः, समर्थः, शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः[12] । प्रभुर्बुभूषुर्भुवनत्रयस्य । वषडिन्द्राय । स्वस्ति गोभ्यो भूयात्[13] ।

**१७. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।** न त्वां तृणं तृणाय वा मन्येऽहम् । * अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम् * न त्वां

---

१. परार्धादधिका इत्यर्थः । २. ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । ३. शौण्डादिगणेऽधिशब्दपाठात् । ४. अषडक्षेति खः । ५. परिरिह वर्जने लक्षणादौ तु हरिम्प्रति । ६. उत्पथात् पन्था आक्रमितुमिहेष्यते । ७. अनभिहित इत्येव । नेह :– दानीयो विप्रः । ८.—आतपायातिलोहिनी । पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेदिति पूरणीयम् । ९. अप्रयुज्यमानस्येत्यर्थः । १०. फलान्याहर्तुं यातीत्यर्थः । द्वितीयापवादोऽयम् । ११. भाववचनाश्चेति घञ् । यष्टुं यातीत्यर्थः । १२. स एषां ग्रामणीः, तस्मै प्रभवतीत्यादिनिर्देशात् । १३. इह चकारग्रहणाच्चतुर्थी चाशिषीति षष्ठी बाध्यते ।

नावं काकमन्नं शुकं शृगालं वा मन्ये। नेह निषेधः :– न त्वां शुने श्वानं वा मन्ये।

१८. कर्त्तृकरणयोस्तृतीया। रामेण बाणेन हतो वाली। * प्रकृत्यादिभ्य[1] उपसंख्यानम् *। प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। द्विद्रोणेन धान्यं क्रीणाति। सुखेन दुःखेन वा याति।

१९. सहयुक्तेऽप्रधाने[2]। पुत्रेण सहागतः पिता।

२०. येनाङ्गविकारः[3]। अक्ष्णा काणः। पादेन खञ्जः।

२१. इत्थम्भूतलक्षणे[4]। जटाभिस्तापसः[5]। अपि भवान् कमण्डलुना छात्रमद्राक्षीत् ?

२२. संज्ञोऽन्यतरस्यां कर्मणि। पित्रा, पितरं वा संजानीते।

२३. हेतौ। दण्डेन घटः। धनेन कुलम्। पुण्येन दृष्टो हरिः। फलमपीह हेतुः। अध्ययनेन वसति। गम्यमानापि क्रिया कारकविभक्तीनां प्रयोजिका। अलं श्रमेण[6]। शतं शतेन[7] वा वत्सान् पाययति पयः। * अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया * दास्या संयच्छते। नेह :– भार्य्यायै संयच्छति।

२४. अकर्त्तर्यृणे पञ्चमी। शताद्बद्धः।

२५. विभाषा गुणेऽस्त्रियाम्। जाड्याज्जाड्येन वा बद्धः। विभाषेति योगविभागादगुणे स्त्रियाञ्च क्वचित्। धूमादग्निमान्। नास्ति घटोऽनुपलब्धेः।

२६. षष्ठी हेतुप्रयोगे[8]। अन्नस्य हेतोर्वसति।

२७. सर्वनाम्नस्तृतीया च। केन हेतुना कस्य हेतोर्वा वसति ? * निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् * किं निमित्तं, केन निमित्तेन, कस्मै निमित्तायेत्यादि। एवं किं कारणं, किं प्रयोजनमित्यादि। प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः। ज्ञानेन निमित्तेन, ज्ञानाय निमित्ताय वा हरिः सेव्यः।

---

१. प्रकृत्यादिराकृतिगणः। २. एवं साकंसार्धसमं-योगेऽपि। विनापि सहशब्दयोगं तृतीया। वृद्धो यूनेति निर्देशात्। ३. येनाङ्गेनाङ्गिनो विकार इत्यर्थः। ४. इत्थम्भूतः कञ्चित्प्रकारं प्राप्त इत्यर्थः। ५. जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः। ६. श्रमेण साध्यं नास्तीत्यर्थः। ७. शतेन परिच्छिद्येत्यर्थः। ८. हेतुशब्दप्रयोगे हेताविव्यर्थः।

२८. **अपादाने पञ्चमी।** ग्रामादायाति। धावतोऽश्वात्पतति। चौराद्बिभेति। * ल्यब्लोपे कर्मण्यधिकरणे च * प्रासादात्प्रेक्षते[१]। आसनात्प्रेक्षते[२]। श्वशुराज्जिह्रेति[३]। गम्यमानापि क्रिया कारकविभक्तीनां प्रयोजिका। कस्मात्त्वम्? नद्याः। * यतश्चाध्वकालनिर्माणं तत्र पञ्चमी * * तद्युक्तादध्वनः प्रथमासप्तम्यौ * * कालात्सप्तमी च वक्तव्या * वनाद् ग्रामो योजनं योजने वा। कार्त्तिक्या आग्रहायणी मासे।

२९. **अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते[४]।** अन्यो भिन्न इतरो वा कृष्णात्। आराद्वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्। चैत्रात्पूर्वः फाल्गुनः। अवयववाचियोगे तु पूर्वं कायस्य। प्राक्प्रत्यग्वा ग्रामात्। दक्षिणा ग्रामात्। दक्षिणाहि ग्रामात्। प्रभृत्यर्थयोगे[५] पञ्चमी। भवात्प्रभृति आरभ्य वा सेव्यो हरिः।

३०. **षष्ठ्यतसर्थप्रत्ययेन।** ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि, उपरिष्टाद्वा।

३१. **एनपा द्वितीया।** एनपेति योगविभागात्षष्ठ्यपि। दक्षिणेन ग्रामं ग्रामस्य वा।

३२. **पृथग्विनानानाभिस्तृतीयान्यतरस्याम्।** पृथग् रामेण, रामात्, रामं वा। विना रामेण, रामात्, रामं वा। नाना रामेण, रामात्, रामं वा।

३३. **करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य।** स्तोकेन स्तोकाद्वा, अल्पेन अल्पाद्वा, कृच्छ्रेण कृच्छ्राद्वा, कतिपयेन कतिपयाद्वा मुक्तः। सत्त्ववचने तु स्तोकेन विषेण हतः।

३४. **दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्।** दूरं विप्रकृष्टमन्तिकमभ्याशं वा ग्रामस्य ग्रामाद्वा।

३५. **दूरान्तिकार्थेभ्यो द्वितीया[६] च।** ग्रामस्य दूरं, दूरात्, दूरेण वा अन्तिकमन्तिकादन्तिकेन वा। सत्त्ववचने तु दूरः पन्थाः।

---

१. प्रासादमधिरुह्येत्यर्थः। २. आसन उपविश्येत्यर्थः। ३. श्वशुरं वीक्ष्येत्यर्थः। ४. अन्य इत्यर्थग्रहणमितरग्रहणं प्रपञ्चार्थम्। दिशि दृष्टः शब्दो दिक्शब्दस्तेन देशकालवृत्तिनापि योगे भवति। ५. अपादाने पञ्चमीति सूत्रे कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगादिदं ज्ञायते। ६. प्रातिपदिकार्थमात्रे विधिरयम्।

३६. **सप्तम्यधिकरणे च**[१]। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्वस्मिन्नात्मास्ति। वनस्य दूरे अन्तिके[२] वा। * क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् * अधीती व्याकरणे। * साध्वसाधुप्रयोगे च * साधुः कृष्णो मातरि, असाधुर्मातुले। * निमित्तात्कर्मयोगे[३] * चर्मणि[४] द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि[५] पुष्कलको हतः॥

३७. **यस्य च भावेन[६] भावलक्षणम्**। गोषु दुह्यमानासु गतः। दुग्धास्वागतः।

३८. **षष्ठी चानादरे**[७]। रुदति, रुदतो वा प्राव्राजीत्[८]।

३९. **स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च**। गवां, गोषु वा स्वामी, ईश्वरः, अधिपतिः, दायादः, साक्षी, प्रतिभूः, प्रसूतो वा।

४०. **आयुक्तकुशलाभ्यां चासेवायाम्**[९]। आयुक्तः[१०] कुशलो वा हरिपूजने, हरिपूजनस्य वा।

४१. **यतश्च निर्धारणम्**[११]। नृणां, नृषु वा ब्राह्मणः श्रेष्ठः। गवां, गोषु वा कृष्णा बहुक्षीरा। गच्छतां, गच्छत्सु वा धावन् शीघ्रः। छात्राणां, छात्रेषु वा मैत्रः पटुः।

४२. **पञ्चमी विभक्ते**[१२]। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः।

४३. **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः**। मातरि साधुर्निपुणो वा। नेह :- साधुर्देवदत्तो मातरं प्रति। * अप्रत्यादिभिरिति वक्तव्यम्। * साधुर्निपुणो वा मातरं प्रति पर्यनु वा।

४४. **प्रसितोत्सुकाभ्यां तृतीया च**। प्रसित उत्सुको वा हरिणा, हरौ वा।

---

१. चाद् दूरान्तिकार्थेभ्यः। २. चतस्रोऽत्र विभक्तयः फलिताः। ३. योगः संयोगसमवायात्मकः। ४. तृतीयात्र प्राप्ता निवार्यते। ५. सीमाण्डकोशः। पुष्कलको गन्धमृगः। ६. भावः क्रिया। ७. अनादराधिके भावलक्षण इत्यर्थः। ८. रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः। ९. आसेवा तत्परता। १०. आयुक्तो व्यापारितः। ११. जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। १२ विभागो विभक्तम्।

४५. नक्षत्रे च लुपि। मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् । मूले, श्रवणे वा।

४६. प्रातिपदिकार्थ[1]लिङ्गपरिमाणवचनमात्रे प्रथमा। उच्चैः, नीचैः। कृष्णः, श्रीः, ज्ञानम्। तटः[2], तटी, तटम्। द्रोणो[3] व्रीहिः। एकः[4], द्वौ, बहवः।

४७. संबोधने च। हे राम। हे रामौ। हे रामाः।

४८. साऽऽमन्त्रितम्। अग्ने नय। अग्न इन्द्र वरुण।

४९. एकवचनं सम्बुद्धिः। हे राम। हे हरे।

५०. षष्ठी शेषे। राज्ञः पुरुषः। पशोः पादः। पितुः पुत्रः। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधो द[5]कस्योपस्कुरुते। भजे शम्भोश्चरणयोः। फलानां तृप्तः।

५१. ज्ञोऽविदर्थस्य करणे। सर्पिषो[6] ज्ञानम्।

५२. अधीगर्थदयेशां कर्मणि। मातुः स्मरणम्। सर्पिषो दयनम्, ईशनं वा।

५३. कृञः प्रतियत्ने[7]। एधो दकस्योपस्करणम्।

५४. रुजार्थानां भाववचनानामज्वरेः। चौरस्य रोगस्य रुजा। चौरस्य रुजति रोगः। * अज्वरिसंताप्योरिति वाच्यम् * रोगस्य चौरज्वरः, चौरसंतापो वा। चौरं ज्वरयति ज्वरः, संतापयति तापो वा।

५५. आशिषि नाथः। सर्पिषो नाथनम्। सर्पिषो नाथते[8]।

५६. जासिनिप्रहणनाटक्राथपिषां हिंसायाम्। चौरस्योज्जासनम्। चौरस्योज्जासयति। निप्रौ संहतौ विपर्ययस्तौ व्यस्तौ च। चौरस्य निप्रहणनं, प्रणिहननं, निहननं, प्रहणनं वा। चौरस्योन्नाटनं, क्राथनं, पेषणं वा।

---

१. नियतोपस्थितिकः प्रातिपदिकार्थः। यस्मिन्प्रातिपदिक उच्चारिते यस्यार्थस्य नियमेन भानं जायते स इत्यर्थः। मात्रशब्दस्य प्रत्येकं योगः। अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम्। २. अनियतलिङ्गा लिङ्गमात्राधिक्य इत्यस्योदाहरणम्। ३. द्रोणरूपपरिमाणपरिच्छिन्नो व्रीहिरित्यर्थः। ४. उक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम्। ५. उदकार्थो दकशब्दोऽप्यस्ति। एध इन्धनम्। ६. सर्पिषोपायेन करणभूतेन प्रवृत्तिरित्यर्थः। प्रतिपदविधाना षष्ठी न समस्यते। ७. प्रतियत्नो गुणाधानम्। ८. आशास्त इत्यर्थः।

५७. व्यवहृपणोः समर्थयोः[१]। शतस्य व्यवहरणं पणनं वा।

५८. दिवस्तदर्थस्य। शतस्य दीव्यति।

५९. विभाषोपसर्गे। शतस्य शतं वा प्रतिदीव्यति।

६०. द्वितीया ब्राह्मणे। गामस्य तदहः सभायां दीव्येयुः।

६१. प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने। अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य, अनुब्रूहि वा।

६२. चतुर्थ्यर्थे बहुलं छन्दसि। पुरुषमृगश्चन्द्रमसे गोधा कालकादार्वाघाटस्ते वनस्पतीनाम्। * षष्ठ्यर्थे चतुर्थी वाच्या * या खर्वेण पिबति तस्यै खर्वः।

६३. यजेश्च करणे। घृतस्य घृतेन वा यजते।

६४. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे। पञ्चकृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। द्विरह्नोऽधीते।

६५. कर्तृकर्मणोः कृति[२]। कृष्णस्य कृतिः। जगतः कर्त्ता कृष्णः। * गुणकर्मणि वेष्यते * नेताश्वस्य स्रुघ्नस्य स्रुघ्नं वा।

६६. उभयप्राप्तौ कर्मणि। आश्चर्यो गवां दोहोऽगोपेन। * स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः * भेदिका[३] बिभित्सा वा रुद्रस्य जगतः। * शेषे विभाषा * विचित्रा जगतः कृतिर्हरेः, हरिणा वा। शब्दानामनुशासनमाचार्येण, आचार्यस्य वा।

६७. क्तस्य[४] च वर्त्तमाने। राज्ञां मतो बुद्धः पूजितो वा।

६८. अधिकरणवाचिनश्च[५]। इदमेषामासितं शयितं गतं भुक्तं वा।

६९. न लोका[६]व्ययनिष्ठाखलर्थतृनाम्[७]। कुर्वन्, कुर्वाणो वा सृष्टिं हरिः। ओदनं पेचानः, पेचिवान् वा। पपिः सोमम्, ददिर्गाः। हरिं दिदृक्षुः,

---

१. समस्तुल्योऽर्थो ययोस्तयोरित्यर्थः शकन्ध्वादित्वात्पररूपम्। द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता। २. तद्धिते तु कृतपूर्वी कटम्। शेष इति निवृत्तम्। ३. पर्यायार्हणोत्पत्तिष्विति भावे ण्वुच्। ४. न लोकेति निषेधापवादोऽयम्। ५. अयमपि निषेधापवादः। ६. ल इति लादेशाः शतृशानचौ, कानच्क्वसू, किकिनौ च गृह्यन्ते। ७. तृन्निति प्रत्याहारः शतृशानचाविति तृशब्दादारभ्या तृनो नकारात्।

अलङ्करिष्णुर्वा। दैत्यान् घातुको हरिः। * कमेरनिषेधः * लक्ष्म्याः कामुको हरिः। जगत्सृष्ट्वा। सुखं कर्त्तुम्। विष्णुना हता दैत्याः। दैत्यान् हतवान् विष्णुः। ईषत्करः प्रपञ्चो हरिणा। सोमं पवमानः[1]। आत्मानं मण्डयमानः। वेदमधीयन्। कर्त्ता कटान्। * द्विषः शतुर्वा * मुरस्य मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्, नरकस्य जिष्णुः।

७०. अकेनोर्भविष्यदाधमर्ण्ययोः। सतः पालकोऽवतरति। व्रजं गामी। शतं दायी।

७१. कृत्यानां कर्त्तरि वा। मया मम वा सेव्यो हरिः। अत्र योगो विभज्यते। कृत्यानाम्[2]—नेतव्या व्रजं गावः कृष्णेन। कर्त्तरि वा। उक्तोऽर्थः।

७२. तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्। तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। नेह :— तुलोपमा वा कृष्णस्य नास्ति।

७३. चतुर्थी चाशिष्यायुष्य[3]मद्रभद्रकुशलसुखार्थहितैः। आयुष्यं चिरजीवितं मद्रं भद्रं कुशलं निरामयं सुखं शमर्थः प्रयोजनं हितं पथ्यं वा कृष्णस्य कृष्णाय वा भूयात्।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
द्वितीयाध्यायस्य तृतीयः पादः समाप्तः।



१. शानन्–चानश्–शतृ–तृनां तृन्प्रत्याहारान्तर्गतत्वात्। २. उभयप्राप्ताविति नेति च वर्त्तते। उभयप्राप्ताविति कर्त्तरि निषेधे सिद्धे कर्मणि निषेधार्थमिदम्। ३. व्याख्यानात्सर्वत्रार्थग्रहणम्। मद्रभद्रयोः पर्य्यायत्वादन्यतरो न पठनीयः।

# अथ द्वितीयाध्यायस्य चतुर्थः पादः ।



१. द्विगुरेकवचनम्[1] । पञ्चानां गवां समाहारः, पञ्चगवम् । पञ्चपूली ।

२. द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्[2] । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् ।

३. अनुवादे चरणानाम्[3] । * स्थेणोर्लुङीति वक्तव्यम् * उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् ।

४. अध्वर्युक्रतुरनपुंसकम्[4] । अर्काश्वमेधम् । सामवेदे विहितौ तु इषुवज्रौ । नेह :— राजसूयवाजपेये ( अर्धर्चादी ) ।

५. अध्ययनतोऽविप्रकृष्टाख्यानाम् । पदकक्रमकम् ।

६. जातिरप्राणिनाम् । धानाशष्कुलि । आराशस्त्रि । प्राणिनां तु विट्शूद्राः । द्रव्यजातीनामेव । नेह :— रूपरसौ, गमनाकुञ्चने । जातिप्राधान्य एव । नेह :— वदरामलकानि ।

७. विशिष्टलिङ्गो[5] नदीदेशोऽग्रामाः । उध्यश्च इरावती च उध्येरावति । गङ्गाशोणम् । कुरुकुरुक्षेत्रम् ।

८. क्षुद्रजन्तवः[6] । यूकालिक्षम् । दंशमशकम् ।

९. येषां च विरोधः शाश्वतिकः । अहिनकुलम् । गोव्याघ्रम् । काकोलूकम्[7] ।

---

१. एकस्यार्थस्य वचनं वाचको भवतीत्यर्थः । समाहारद्विगोश्चेदं ग्रहणं भवति । २. समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणम् । एषां समाहार एव यथा स्यादिति । ३. चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्त्तते । कठकालापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुनः शब्देनानूद्येते तदेदमुदाहरणम् । ४. अध्वर्युक्रतुर्यजुर्वेदे विहितः क्रतुः । ५. विशिष्टलिङ्गो विभिन्नलिङ्ग इत्यर्थः । ६. क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । शतं वा प्रसृतौ येषां केचिदानकुलावधि ॥ ७. एषु परत्वात्प्राप्तमपि विभाषा वृक्षमृगेति चकारेण बाध्यते ।

१०. शूद्राणामनिरवसितानाम्[१]। तक्षायस्कारम्। बहिष्कृतानां तु चण्डालमृतपाः।

११. गवाश्वप्रभृतीनि च[२]। गवाश्वम्। दासीदासम्।

१२. विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्। वृक्षादौ विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। शुकबकम्, शुकबकाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे। * फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम् * बदराणि चामलकानि च बदरामलकम्। नेह :— बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधावित्यादि।

१३. विप्रतिषिद्धं[३] चानधिकरणवाचि। शीतोष्णम्, शीतोष्णे। जीवितमरणम्, जीवितमरणे। सुखदुःखम्, सुखदुःखे। चार्थे द्वन्द्व इति सिद्धे नियमार्थमिदम्। विरुद्धार्थानां वैकल्पिकः समाहारद्वन्द्वश्चेद्भवति तर्हि अद्रव्यवाचिनामेवेति। नेह :— शीतोष्णे उदके स्तः।

१४. न दधिपयआदीनि। दधिपयसी, इध्माबर्हिषी[४], ऋक्सामे, वाङ्मनसे।

१५. अधिकरणैतावत्त्वे[५] च। दश दन्तोष्ठाः।

१६. विभाषा समीपे[६]। उपदशं दन्तोष्ठम्। उपदशा दन्तोष्ठाः।

१७. स[७] नपुंसकम्। पञ्चगवम्, दशगवम्। पाणिपादम्, दशग्रीवम्। दन्तोष्ठम्। * अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः * पञ्चपूली। * आबन्तो वा * पञ्चखट्वी, पञ्चखट्वम्। * अनो नलोपश्च वा द्विगुः स्त्रियाम् * पञ्च-

---

१. निरवसानं बहिष्करणम्। २. गवाश्वम्, गवाविकम्, गवैडकम्, अजाविकम्, अजैडकम्, कुब्जवामनम्, कुब्जकिरातम्, पुत्रपौत्रम्—इत्यादि गणपाठे द्रष्टव्यम्। ३. विप्रतिषिद्धं विरुद्धार्थः। ४. गणपाठे निपातनाद् दीर्घः। ५. अधिकरणस्य द्रव्यस्य एतावत्त्वं संख्यावगमः। ६. पूर्वोक्तस्याधिकरणैतावत्त्वस्य सामीप्येन प्रतीतावित्यर्थः। ७. यस्यायमेकवद्भाव उक्तः स द्विगुर्द्वन्द्वश्चेत्यर्थः।

तक्षी, पञ्चतक्षम्। * पात्राद्यन्तस्य न * पञ्चपात्रम्, त्रिभुवनम्, चतुर्युगम्। * पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा *। पुण्याहम्, सुदिनाहम्। * पथः संख्याव्ययादेः * त्रयाणां पन्थास्त्रिपथम्। विरूपः पन्था विपथम्। कृतसमासान्तनिर्देशान्नेह। सुपन्थाः। * सामान्ये नपुंसकम् * मृदु पचति। प्रातः कमनीयम्।

१८. अव्ययीभावश्च। अधिहरि। उन्मत्तगङ्गम्—इत्यादि।

१९. तत्पुरुषोऽनञ्कर्मधारयः[१]। अधिकारोऽयं विभाषा सेनेत्यन्तं यावत्।

२०. संज्ञायां कन्थोशीनरेषु। सुशमस्यापत्यानि सौशमयस्तेषां कन्था, सौशमिकन्थम्। अन्यत्र तु दाक्षिकन्था।

२१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम्[२] पाणिन्युपज्ञं व्याकरणम्। नन्दोपक्रमं द्रोणः।

२२. छाया बाहुल्ये। इक्षुच्छायम्[३]। शलभच्छायम्।

२३ सभा राजाऽमनुष्यपूर्वा[४]। * पर्य्यायस्यैवेष्यते * इनसभम्, ईश्वरसभम्। नेह :– राजसभा, चन्द्रगुप्तसभा। रक्षस्सभम्, पिशाचसभम्।

२४. अशाला[५] च। स्त्रीसभम्[६]। शालार्थत्वे तु धर्मसभा[७]।

२५. विभाषा सेनासुराच्छायाशालानिशानाम्। ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला। श्वनिशम्, श्वनिशा। तत्पुरुषोऽनञ्कर्मधारय इत्युक्तेर्नेह :– दृढसेनो राजा, असेना, परमसेना।

२६. परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः। कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ। अर्धपिप्पली। * द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः * पञ्चसु कपालेषु संस्कृतः, पञ्चकपालः पुरोडाशः। प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै, अलकुमारिः[८]। निष्कौशाम्बिः।

---

१. नञ्कर्मधारयभिन्नस्तत्पुरुषो नपुंसकमित्यर्थः। २. यदुपज्ञेयमुपक्रम्यञ्च तयोरादिः प्राथम्यञ्चेदाख्यातुमिष्यते। ३. इक्षूणां बाहुल्यं गम्यते। ४. अमनुष्यशब्दो रूढया रक्षःपिशाचादीनाह। ५. शालार्थभिन्ना संघातार्था सभेत्यर्थः पर्युदासनञा लभ्यते। ६. स्त्रीसंघात इत्यर्थः। ७. धर्मशालेत्यर्थः। ८. अत एव ज्ञापकात्समासः।

२७. पूर्ववदश्ववडवौ[1] । अश्वश्च वडवा चाश्ववडवौ । अश्ववडवान् ।

२८. हेमन्तशिशिरावहोरात्रे च च्छन्दसि । हेमन्तश्च शिशिरं च हेमन्तशिशिरौ । अहोरात्रे ।

२९. रात्राह्नाहाः पुंसि । अहोरात्रः, पूर्वरात्रः । पूर्वाह्णः, द्व्यहः । * संख्यापूर्वं रात्रं क्लीबम् * द्विरात्रम्, त्रिरात्रम्, गणरात्रम् ।

३०. अपथं नपुंसकम् । अपथानि गाहते मूढः । तत्पुरुष इत्येव । नेह :– अपथो देशः ।

३१. अर्धर्चाः[2] पुंसि च । अर्धर्चः, अर्धर्चम् । ध्वजः, ध्वजम् । तीर्थम्, तीर्थः । शरीरम्, शरीरः । मण्डम्, मण्ड इत्यादि ।

३२. इदमोऽन्वादेशे[3]ऽशनुदात्तस्तृतीयादौ । अशादेशवचनं साकच्का-र्थम् । इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम् ।

३३. एतदस्त्रतसोस्त्रतसौ चानुदात्तौ । एतस्मिन्ग्रामे सुखं वसामः । अथो[4]ऽत्राधीमहे । अतो न गन्तास्मः ।

३४. द्वितीयाटौस्स्वेनः[5] । अनेन व्याकरणमधीतमेनं छन्दोऽध्यापय । एनम्, एनौ, एनान् । अनेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वम् ।

३५. आर्धधातुके । अधिकारोऽयं ण्यक्षत्रियार्षञित इति यावत् ।

३६. अदो जग्धिर्ल्यप्ति किति । प्रजग्ध्य, जग्धः[6], जग्धवान् ।

३७. लुङ्सनोर्घसॢ । अघसत्, अघसताम्, अघसन् । जिघत्सति । * अच्युपसंख्यानम् * प्रघसः ।

३८. घञपोश्च । घासः । प्रघसः[7] ।

३९. बहुलं छन्दसि । घस्तान्नूनम्[8] । सग्धिश्च[9] मे ।

१. अत्र द्विवचनमतन्त्रम् । २. अर्धर्चादयो गणपाठे द्रष्टव्याः । ३. अन्वादेशोऽनुकथनमेकस्यैवाभिधेयस्य । ४. सर्वानुदात्तं पदं भवति । ५. इदमो मण्डूकप्लुत्यानुवृत्तिः । ६. अन्नमित्यत्र तु अन्नाण्ण इति निपातनात्सिद्धिः । ७. उपसर्गेऽद इत्यप् । ८. बहुलग्रहणाद् घस्तामित्यत्र नोपधालोपः । ९. सग्धिः सहभोजनम् ।

४०. **लिट्यन्यतरस्याम्** । जघास, जक्षतुः, जक्षुः । आद, आदतुः, आदुः ।

४१. **वेञो वयिः** । उवाय, ऊयतुः, ऊयुः । ऊवतुः, ऊवुः । ववौ, ववतुः, ववुः ।

४२. **हनो वध लिङि**[1] । वध्यात्, वध्यास्ताम्, वध्यासुः ।

४३. **लुङि च** । अवधीत्, अवधिष्टाम्, अवधिषुः ।

४४. **आत्मनेपदेष्वन्यतरस्याम्** । आवधिष्ट[2], आवधिषाताम्, आवधिषत । आहत, आहसाताम्, आहसत ।

४५. **इणो गा लुङि** । अगात्, अगाताम्, अगुः । अगायि भवता । * इण्वदिक इति वक्तव्यम् * अध्यगात्, अध्यगाताम्, अध्यगुः ।

४६. **णौ गमिरबोधने** । गमयति, गमयतः, गमयन्ति । बोधने तु प्रत्याययति । इण्वदिक इति अधिगमयति ।

४७. **सनि च**[3] । जिगमिषति, अधिजिगमिषति । बोधने तु अर्थान् प्रतीषिषति ।

४८. **इङश्च** । अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते ।

४९. **गाङ् लिटि** । अधिजगे, अधिजगाते, अधिजगिरे ।

५०. **विभाषा लुङ्लृङोः** । अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । अध्यैष्ट, अध्यैषाताम्, अध्यैषत । अध्यगीष्यत, अध्यैष्यत ।

५१. **णौ च सँश्चङोः**[4] । अधिजिगापयिषति, अध्यापिपयिषति । अध्यजीगपत, अध्यापिपत् ।

५२. **अस्तेर्भूः**[5] । भविता, भवितुम्, भवितव्यम् ।

५३. **ब्रुवो वचिः**[6] । वक्ता, वक्तुम्, वक्तव्यम् । ऊचे, वक्ष्यते ।

---

१. वधादेशोऽदन्तः। अतो लोपः । तस्य स्थानिवद्भावादवधीदित्यादौ न वृद्धिः। २. आङो यमहन इत्यात्मनेपदम् । ३. योगविभाग उत्तरार्थः। इङश्चेति सन्येव यथा स्यात्। ४. सँश्चङोरिति णेर्विशेषणम् । ५. अस्तेरनुप्रयोगसामर्थ्यान्नेह :– ईहामास, ईहामासतुरित्यादि । ६. इकार उच्चारणार्थः ।

५४. चक्षिङः ख्याञ्। * ख्शादिरयमादेश इष्यते * चख्यौ,[1] चख्ये। चक्शौ,[2] चक्शे। ख्याता, ख्यातुम्। क्शाता, क्शातुम्। * वर्जने प्रतिषेधो वक्तव्यः * समचक्षिष्टेत्यादि। दुर्जनाः संचक्ष्याः[3]।

५५ वा लिटि। चख्यौ, चचक्षे।

५६. अजेर्व्यघञपोः। प्रवायकः। प्रवयणीयः। विवाय, विव्यतुः, विव्युः। * वलादावार्धधातुके वेष्यते * विवयिथ, विवेथ, आजिथ। वेता, अजिता। वेष्यति, अजिष्यति। अवैषीत, आजीत्। अवेष्यत, आजिष्यत। * अजेः क्यपि वीभावो नेति वाच्यम् * समज्या। घञपोस्तु समाजः, समजः।

५७. वा यौ[4]। प्रवयणम्। प्राजनम्।

५८. ण्यक्षत्रियार्षञितो[5] यूनि लुगणिञोः। कुर्वादिभ्यो ण्यः, तस्माद्यूनि इञ्, तस्य लुक्। कौरव्यः पिता पुत्रश्च। श्वाफल्कः पिता पुत्रश्च। वासिष्ठः पिता पुत्रश्च। बैदः पिता पुत्रश्च। तैकायनिः पिता पुत्रश्च।

५९. पैलादिभ्यश्च। पैलः[6] पिता पुत्रश्च।

६०. इञः[7] प्राचाम्। पान्नागारिः पिता पुत्रश्च।

६१. न तौल्वलिभ्यः। तौल्वलिः पिता, तौल्वलायनः पुत्रः। धारणिः पिता। धारणायनः पुत्र इत्यादि।

६२. तद्राजस्य बहुषु[8] तेनैवास्त्रियाम्। अङ्गाः, मगधाः, इक्ष्वाकवः, पञ्चालाः। स्त्रियान्तु आङ्ग्यः। मागध्यः।

६३. यस्कादिभ्यो गोत्रे। यस्काः, मित्रयवः। नेह :— यास्क्यः।

६४. यञञोश्च। गर्गाः, वत्साः, बिदाः। नेह :— गार्ग्यः, बैद्यः।

६५. अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च। अत्रयः, भृगवः, कुत्साः, वसिष्ठाः, गोतमाः, अङ्गिरसः।

---

१. असिद्धकाण्डे शस्य यो वेति स्थितम्। २. चर्त्वस्यासिद्धत्वाच्चयो द्वितीया इति न। ३. वर्जनीया इत्यर्थः। ४. ल्युट्प्रत्ययस्य निरनुबन्धस्यैतद्रूपम्। ५. ण्यप्रत्ययान्तात्, क्षत्रियगोत्रप्रत्ययान्तात्, ऋष्यभिधायिनो गोत्रप्रत्ययान्तात्, ञित्प्रत्ययान्ताच्चेत्यर्थः। ६. पीलाया वेत्यण्, तस्मादणो द्व्यच इति फिञ्। तस्य लुक्। ७. गोत्रे य इञ् तदन्तादित्यर्थः। प्राचामिति गोत्रविशेषणम्। ८. लुगिति वर्त्तते। ते तद्राजाः, ञ्यादयस्तद्राजा इति च वक्ष्यति।

६६. बह्वच इञः प्राच्यभरतेषु[1] । पन्नागाराः । युधिष्ठिराः ।

६७. न गोपवनादिभ्यः[2] । गौपवनाः । शैग्रवाः ।

६८. तिककितवादिभ्यो द्वन्द्वे । तैकायनयश्च कैतवायनयश्च, तिककितवाः[3] । वाङ्करयश्च भाण्डीरथयश्च, वङ्करभण्डीरथाः[4] ।

६९. उपकादिभ्योऽन्यतरस्यामद्वन्द्वे[5] । उपकलमकाः । औपकायनलामकायनाः । उपकाः, औपकायनाः । लमकाः, लामकायनाः । भ्राष्टककपिष्ठलाः । भ्राष्टकिकापिष्ठलयः । भ्राष्टकाः, भ्राष्टकयः । कपिष्ठलाः, कापिष्ठलयः ।

७०. आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । अगस्तयः, कुण्डिनाः ।

७१. सुपो धातुप्रातिपदिकयोः । पुत्रीयति । घटीयति । राजपुरुषः ।

७२. अदिप्रभृतिभ्यः शपः । अत्ति, हन्ति, द्वेष्टि—इत्यादि ।

७३. बहुलं छन्दसि । वृत्रं हनति । अहिः शयते । अन्येभ्यश्च भवति । त्राध्वं नो देवाः ।

७४. यङोऽचि च[6] । लोलुवः । पोपुवः । सनीस्रंसः । दनीध्वंसः । बहुलग्रहणादचं विनापि । बोभवीति, बोभोति[7] । लालपीति । वावदीति ।

७५. जुहोत्यादिभ्यः श्लुः । जुहोति । बिभेति । नेनेक्ति ।

७६ बहुलं छन्दसि । दाति प्रियाणि । पूर्णा विवष्टि । जनिमाविवक्ति ।

७७. गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु[8] । अगात्, अस्थात्, अदात्, अधात्, अपात्, अभूत् ।

७८. विभाषा घ्राधेट्शाच्छासः । अघ्रात्, अघ्रासीत् । अधात्, अधासीत् । अशात्, अशासीत् । अच्छात्, अच्छासीत् । असात्, असासीत् ।

---

१. भरतानां प्राच्यत्वादेव सिद्धे पुनर्ग्रहणं ज्ञापयति, अन्यत्र प्राच्यग्रहणे भरतग्रहणं मा भूदिति । २. बिदाद्यन्तर्गणोऽयं गोपवनादिः । ३. तिकादिभ्यः फिञ्, तस्य लुक् । ४. अत इञ्, तस्य लुक् । ५. पूर्वतोऽत्र द्वन्द्व इत्यपि वर्त्तते । ६. चकारेण बहुलमनुकृष्यते न तुच्छन्दसीति । तेनच्छन्दसि भाषायां च यङो लुग्भवति । ७. चर्करीतञ्चेति यङ्लुगन्तस्यादिप्रभृतिषु पाठाच्छपो लुक् । यङो वेति वेट् । ८. लुगिति वर्त्तते न तु श्लुः । गापाविहेणादेशपिबती गृह्येते । नेह :— अगासीन्नटः, अपासीन्नृपः ।

७९. तनादिभ्यस्तथासोः[1]। अतत, अतनिष्ट। अतथाः, अतनिष्ठाः। असत, असनिष्ट। असथाः, असनिष्ठाः।

८०. मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो[2] लेः[3]। अक्षन्नमीमदन्त हि। माह्वर्मित्रस्य। प्रणङ् मर्त्यस्य। सुरुचो वेन आवः। मान आधक्। आप्रा द्यावापृथिवी। परावर्ग् भारभृद्यथा। अक्रन्नुषासः। त्वे रयिं जागृवांसो अनुग्मन्। मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम्। अज्ञत[4] वा अस्य दन्ताः। विभाषानुवृत्तेर्नेह :– न ता अगृभ्णन्नजनिष्ट हि षः।

८१. आमः। ईहाञ्चक्रे। एधांचक्रे–इत्यादि।

८२. अव्ययादाप्सुपः। तत्र शालायाम्। कृत्वा।

८३. नाव्ययीभावादतोऽम्त्वपञ्चम्याः। उपकुम्भम्, उपकुम्भादानय। अपदिशम्, अपदिशात्।

८४. तृतीयासप्तम्योर्बहुलम्। उपकुम्भम्, उपकुम्भेन वा कृतम्। उपकुम्भम्, उपकुम्भे वा निधेहि।

८५. लुटः प्रथमस्य डारौरसः। भविता, भवितारौ, भवितारः। अध्येता, अध्येतारौ, अध्येतारः— इत्यादि।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसङ्कलिते
द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः।



१. इह थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम्। २. अत्तेरादेशो घस्। ह्वृ कौटिल्ये इत्यस्य कृतगुणानुकरणं ह्वरेति। अकार उच्चारणार्थः। वृ-इति वृङ्वृञोर्ग्रहणम्। ३. घस्लादेशस्य गमहनेत्युपधालोपे शासिवसीति षः। ४. लोके तु अघसत्, अह्वार्षीत्, अनशत्, अवारीत्, अधाक्षीत्, आप्रासीः, अवर्जीत्, अकार्षीत्, अगमत्, अजनि—इत्यादि।

# अथ तृतीयाध्यायस्य प्रथमपादः ।



१. प्रत्ययः । पञ्चमाध्यायान्तं यावदधिकारोऽयम् ।

२. परश्च । अयमपि तथा ।

३. आद्युदात्तश्च । अयमपि पूर्ववत् । अग्निः । कर्त्तव्यम् ।

४. अनुदात्तौ सुप्पितौ । दृषदौ, दृषदः । यज्ञस्य । न यो युच्छति ।

५. गुप्तिज्किद्भ्यः सन्[1] । * गुपेर्निन्दायाम् * जुगुप्सते[2] । * तिजेः क्षमायाम् * तितिक्षते । * कितेर्व्याधिप्रतिकारे निग्रहेऽपनयने नाशने संशये च * चिकित्सति ।

६. मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । * मानेर्जिज्ञासायाम् * मीमांसते । * बधेश्चित्तविकारे * बीभत्सते । * दानेरार्जवे * दीदांसते । * शानेर्निशाने * शीशांसते ।

७. धातोः कर्मणः[3] समानकर्तृकादिच्छायां वा । पठितुमिच्छति, पिपठिषति । कर्त्तुमिच्छति, चिकीर्षति । * आशङ्कायां सन्वक्तव्यः * आशङ्के कूलं पतिष्यति, पिपतिषति कूलम् । श्वा मुमूर्षते ।

* शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ *

नेह :- चिकीर्षितुमिच्छति । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते ।

८. सुपः[4] आत्मनः क्यच् । आत्मनः पुत्रमिच्छति, पुत्रीयति । गव्यति । नाव्यति । * मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच न * इदमिच्छति । किमिच्छति । स्वरिच्छति ।

---

१. अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति । २. धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न । ३. उपस्थितत्वादिषिकर्मण इषिणा समानकर्तृकाद्धातोरिति योज्यम् । ४. कर्मण इच्छायां वेति च वर्त्तते ।

९. काम्यच्च । आत्मनः पुत्रमिच्छति, पुत्रकाम्यति । वस्त्रकाम्यति । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किंकाम्यति । स्वःकाम्यति ।

१०. उपमानादाचारे[१] । पुत्रमिवाचरति, पुत्रीयतिच्छात्रम् । विष्णूयति द्विजम् । * अधिकरणाच्चेति वक्तव्यम् * प्रासादीयति कुट्यां भिक्षुः । कुटीयति प्रासादे ।

११. कर्त्तुः क्यङ् सलोपश्च । सलोपो व्यवस्थितः । * ओजसोऽप्सरसो नित्यमितरेषां विभाषया * कृष्ण इवाचरति, कृष्णायते । ओजायते[२] । अप्सरायते । यशायते, यशस्यते । विद्वायते, विद्वस्यते । [३]त्वद्यते, मद्यते । युष्मद्यते, अस्मद्यते । कुमारीवाचरति, कुमारायते[४] । हरिणीवाचरति, हरितायते । गुर्वीव, गुरूयते । सपत्नीव, सपत्नायते, सपतीयते, सपत्नीयते । युवतिरिव, युवायते । पट्वीमृदूयते । पाचिकायते । * आचारेऽवगल्भक्लीबहोडेभ्यः[५] क्विब्वा वक्तव्यः * अवगल्भते, अवगल्भायते । क्लीबते, क्लीबायते । होडते, होडायते । अवगल्भांचक्रे । क्लीबांचक्रे । होडांचक्रे । * सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः * कृष्ण इवाचरति, कृष्णति, कृष्णायते । अति, अतः, अन्ति । मालाति । मालांचकार । अमालात् । अमालासीत् । कविरिव, कवयति । कवीयात् । अकवयीत् । अकवायीत् । श्रीरिव, श्रयति । शिश्राय । पितेव, पितरति । पित्रियात् । भूरिव, भवति । बुभाव । अभावीत् । द्रुरिव, द्रवति, अद्रावीत् ।

१२. भृशादिभ्यो[६] भुव्यच्वेर्लोपश्च[७] हलः । अभृशो भृशो भवति भृशायते । शीघ्रायते । सुमनायते । स्वमनायत[८] । उन्मनायते, उदमनायत ।

---

१. उपमानरूपात्कर्मणः सुबन्तात् आचारेऽर्थे क्यजित्यर्थः । २. ओजःशब्दो वृत्तिविषये तद्वति वर्त्तते । ओजस्वीवाचरतीत्यर्थः । ३. प्रत्ययोत्तरपदयोश्चेत्यस्य विषयः । ४. क्यङ्मानिनोश्चेति पुंवद्भावः । ५. अवगल्भादयः पचाद्यजन्ताः । क्विप्प्रत्ययसन्नियोगेनाच्प्रत्ययस्यानुदात्तत्वमनुनासिकत्वं च प्रतिज्ञायते । ६. भृश, शीघ्र, मन्द, चपल, पण्डित, उत्सुक, उन्मनस्, अविमनस, सुमनस्, रहस्, रेहत्, शश्वत्, बृहत्, वेहत्, नृषत्, शुधि, अधर, ओजस्, वर्चस्-इति भृशादिः । ७. अच्वेरित्यनेन पर्युदासेनाभूततद्भावविषयेभ्य इत्यर्थो लभ्यते । ८. उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियत इति मनः शब्दात्प्रागट् । 'संग्राम युद्धे' इति गणसूत्रे संविशिष्टपाठश्चेदं ज्ञापयति ।

१३. लोहितादिडाज्भ्यः क्यष्। लोहितायति, लोहितायते[1]। पटपटायति, पटपटायते।

१४ कष्टाय क्रमणे। कष्टाय क्रमते, कष्टायते। * सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति[2] वक्तव्यम् * सत्रायते[3], कक्षायते, कृच्छ्रायते, गहनायते।

१५. कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः। रोमन्थं वर्त्तयति, रोमन्थायते गौः। * हनुचलन इति वक्तव्यम् * नेह :– कीटो रोमन्थं[4] वर्त्तयति। * तपसः परस्मैपदञ्च * तपश्चरति, तपस्यति।

१६. बाष्पोष्मभ्यामुद्वमने। बाष्पमुद्वमति, बाष्पायते। ऊष्मायते। * फेनाच्चेति वक्तव्यम् * फेनमुद्वमति, फेनायते।

१७. शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे। शब्दं करोति, शब्दायते[5]। वैरायते, कलहायते, अभ्रायते, कण्वायते, मेघायते। * सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम्। सुदिनायते, दुर्दिनायते, नीहारायते।

१८. सुखादिभ्यः कर्तृवेदनायाम्[6]। सुखं वेदयते, सुखायते। दुःखायते[7]।

१९. नमोवरिवश्चित्रङः क्यच्[8]। नमस्यति[9] देवान्। वरिवस्यति[10] गुरून्। चित्रीयते[11]।

२०. पुच्छभाण्डचीवराण्णिङ्। * पुच्छादुदसने व्यसने पर्यसने च * उत्पुच्छयते। विपुच्छयते। परिपुच्छयते। * भाण्डात्समाचयने * भाण्डानि समाचिनोति, संभाण्डयते। समबभाण्डत। * चीवरादर्जने परिधाने च * संचीवरयते[12] भिक्षुः।

---

१. कृभ्वस्तियोगं विनापीह डाच्, डाजन्तात्क्यषो विधानसामर्थ्यात्। लोहित, नील, हरित, पीत, मद्र, फेन, मन्द–इति लोहितादिराकृतिगणः। २. कण्वं पापम्। ३. सत्रादयो वृत्तिविषये पापार्थाः। तेभ्यो द्वितीयान्तेभ्यः क्यङ्। पापं चिकीर्षतीत्यस्वपदविग्रहः। ४. अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः। तदश्नातीति कैयटः। वर्त्तुलं करोतीति न्यासकारहरदत्तौ। ५. पक्षे तत्करोतीति णिचि शब्दयतीति न्यासः। ६. वेदनाकर्तुरेव चेत्सुखादीनि स्युः। ७. सुख, दुःख, तृप्त, गहन, कृच्छ्र, अस्र, अलीक, प्रतीप, करुण, कृपण, सोढ-ेति सुखादिः। ८. करण इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्यायामाश्चर्ये चार्थे। ९. पूजयतीत्यर्थः। १०. शुश्रूषत इत्यर्थः। ११. विस्मयत इत्यर्थः। विस्मापयत इत्यन्ये। १२. चीवराणि अर्जयति परिधत्ते वेत्यर्थः।

२१. मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् । मुण्डं करोति, मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । * व्रताद्भोजनतन्निवृत्त्योः * पयः शूद्रान्नं वा व्रतयति । * वस्त्रात्समाच्छादने * संवस्त्रयति । * हल्यादिभ्यो ग्रहणे * हलिं कलिं वा गृह्णाति, हलयति[1], कलयति । अजहलत्[2], अचकलत् , कृतं गृह्णाति, कृतयति । तूस्तानि[3] विहन्ति, वितूस्तयति ।

२२. धातोरेकाचो हलादेः क्रियासमभिहारे[4] यङ् । पुनः पुनरतिशयेन वा भवति, बोभूयते । बोभूयांचक्रे । अबोभूयिष्ट । पापच्यते । यायज्यते । जाज्वल्यते । देदीप्यते । भृशं शोभते, रोचते, इत्यत्र यङ् नेति भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते । * सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः * सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अटाट्यते । अरार्यते[5] । अशाश्यते । ऊर्णोनूयते । बेभिद्यते । बेभिदांचक्रे । बेभिदिता ।

२३. नित्यं कौटिल्ये गतौ । कुटिलं व्रजति, वाव्रज्यते । कुटिलं क्रामति, चङ्क्रम्यते ।

२४. लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । गर्हितं लुम्पति, लोलुप्यते । सासद्यते । चञ्चूर्यते । जञ्जप्यते । जञ्जभ्यते । दंदह्यते । दंदश्यते । जेगिल्यते ।

२५. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । सत्यं करोति, आचष्टे वा सत्यापयति । * अर्थवेदयोरप्यापुग् वक्तव्यः * अर्थापयति, वेदापयति । पाशं विमुञ्चति, विपाशयति । रूपं पश्यति, रूपयति । वीणयोपगायति, उपवीणयति । तूलेनानुकुष्णाति, अनुतूलयति[6] । श्लोकैरुपस्तौति, उपश्लोकयति । सेनयाभियाति, अभिषेणयति । लोमान्यनुमार्ष्टि, अनुलोमयति । त्वचं[7] गृह्णाति, त्वचयति । वर्मणा संनह्यति, संवर्मयति । वर्णं गृह्णाति, वर्णयति । चूर्णैरवध्वंसते, अवचूर्णयति । चोरयति ।

---

१. हलिकल्योरदन्तत्वं च निपात्यते । २. अग्लोपित्वान्न सन्वद्भावः । ३. तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । मुण्डादयः सत्यापपाशेत्यत्रैव पठितुं युक्ताः । ४. पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । ५. इह यकारपररेफस्य न द्वित्वनिषेधः । अरार्यत इति भाष्योदाहरणात् । ६. तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । ७ . त्वच संवरणे घः ।

२६. हेतुमति च[1]। भवन्तं प्रेरयति, भावयति। ओदनं पचन्तं प्रेरयति ओदनं पाचयति। कटं कुर्वन्तं प्रेरयति, कटं कारयति। * तत्करोति, तदाचष्टे * प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च * पटुमाचष्टे, पटयति। अपीपटत् अपपटत्[3]। * तेनातिक्रामति * अश्वेनातिक्रामति, अश्वयति। हस्तयति * धातुरूपं च * * आख्यानात्कृतस्तदाचष्टे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवत्[4] कारकम् * कंसवधमाचष्टे, कंसं घातयति। कंसमजीघतत्। * कर्तृकरणाद्धात्वर्थे[5] असिना हन्ति, असयति।

२७. कण्ड्वादिभ्यो यक्[6]। कण्डूञ् गात्रविघर्षणे। कण्डूयते, कण्डूयति मन्तु अपराधे। मन्तूयति। रोष इत्येके। चन्द्रस्तु जितमाह। मन्तूयते। वल्गु पूजामाधुर्ययोः। वल्गूयति-इत्यादि।

२८. गुपूधूपविच्छिपणिपनिभ्य आयः। गोपायति, धूपायति, विच्छायति, पणायति[7]। व्यवहारे तु पणते पेणे—इत्यादि। पनायति।

२९. ऋतेरीयङ्[8]। ऋतीयते[9]।

३०. कमेर्णिङ्। कामयते, कामयेते, कामयन्ते।

३१. आयादय[10] आर्धधातुके वा। गोपायिता, गोपिता, गोप्ता। ऋतीयिता, अर्त्तिता[11]। कामयिता, कमिता।

---

१. हेतुर्विद्यते यस्यासौ हेतुमान् प्रयोजकव्यापारस्तस्मिन्प्रेषणादौ वा इत्यर्थः। हेतुर्हि स्वतन्त्रस्य कर्त्तुः प्रयोजकः। २. परत्वाद् वृद्धौ सत्यां टिलोपेऽग्लोपित्वाभावात्सन्वद्भावः। ३. वृद्धेर्लोपो बलीयानिति भाष्यात्पूर्वं टिलोपेऽग्लोपित्वान्न सन्वद्भावः। ४. प्रकृतिवच्चेति चकारो भिन्नक्रमः। प्रकृतिवत् कारकं चेति। चात्कार्यम्। हेतुमण्णौ प्रकृतेर्यादृशं कारकं कार्यं च तादृशमिहापीत्यर्थः तेनाड्द्वित्वकुत्वतत्वादयः सिध्यन्ति। ५. कर्तृव्यापारार्थं यत्करणं न तु चक्षुरादि तस्मादित्यर्थः। ६. द्विविधाः कण्ड्वादयः, धातवः प्रातिपदिकानि च। धात्वधिकाराद्धातुभ्य एव प्रत्ययः। कण्ड्वादयो गणपाठे द्रष्टव्याः। ७. व्यवहारे स्तुतौ च। पन च। पनधातुः स्तुत्यर्थ एव। तत्साहचर्यात्पणिः स्तुतावेवार्यं लभते। ८. ऋतेश्छङिति सिद्धे ईयङ्वचनं ज्ञापयति धातुविहित प्रत्ययानामायन्नादयो न भवन्तीति। ९. ऋतिः सौत्रो धातुः। जुगुप्साया धातुरिति बहवः, कृपायां चेत्येके। १०. आयादय आय-ईयङ्-णिङ्-प्रत्यय

**३२. सनाद्यन्ता[१] धातवः।** पिपठिषति, पुत्रीयति, पुत्रकाम्यति।

**३३. स्यतासी ऌलुटोः[२]।** भविष्यति, अभविष्यत्, श्वो भविता।

**३४. सिब्बहुलं लेटि।** जोषिषत्। तारिषत्। न च भवति :—पताति विद्युत्। प्रिया अग्ना भवाति।

**३५. कास्प्रत्ययादाम[३]मन्त्रे लिटि।** * कास्यनेकाच[४] इति वक्तव्यम् * कासांचक्रे। दरिद्रांचकार। चुलुम्पांचकार।

**३६. इजादेश्च गुरुमतोऽनृच्छः।** ईहाञ्चक्रे, ऊहाञ्चक्रे, एधांचक्रे। ऋच्छेस्तु आनर्च्छ। * ऊर्णोतेराम्नेति वाच्यम् * ऊर्णुनाव।

**३७. दयायासश्च।** दयाञ्चक्रे, पलायांचक्रे, आसाञ्चक्रे।

**३८. उषविदजागृभ्योऽन्यतरस्याम्।** ओषाञ्चकार, उवोष। विदा[५]ञ्चकार, विवेद। जागराञ्चकार, जजागार।

**३९. भीह्रीभृहुवां श्लुवच्च[६]।** बिभयाञ्चकार, बिभाय। जिह्रयाञ्चकार, जिह्राय। जुहवाञ्चकार, जुहाव।

**४०. कृ[७]ञ्चानुप्रयुज्यते लिटि।** एधाञ्चक्रे, एधांबभूव, एधामास[८]। पाचयाञ्चकार, पाचयाम्बभूव, पाचयामास।

**४१. विदाङ्कुर्व[९]न्त्वित्यन्यतरस्याम्।** विदांकरोतु, विदांकुरुताम्, विदाङ्कुर्वन्तु। वेत्तु, वित्ताम्, विदन्तु-इत्यादि।

---

१. सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विब्-णिज्यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥ २. निरनुबन्धकग्रहणे सानुबन्धकस्येति परिभाषया ऌशब्देन ऌङ्ऌटोर्ग्रहणम्। ३. आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा। आस्कासोरांविधानात् पररूपं कतन्तवत्॥ ४. प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः। ५. विदेरदन्तत्वप्रतिज्ञानादामि न गुणः। ६. श्लाविव द्वित्वमित्त्वं च। ७. कृञिति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते। कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विरिति सूत्रे कृ-इत्यारभ्य कृञो द्वितीयेति ञकारेण कृञ्प्रत्याहारः। संपदिस्तु तदन्तर्भूतोऽपि न प्रयुज्यतेऽनन्वितार्थत्वात्। ८. अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न। ९. विदेर्लोट्याम् गुणाभावो लोटो लुक् कृञश्च लोट्परस्यानुप्रयोग इत्यर्थः।

४२. अभ्युत्सादयां[1] प्रजनयां चिकयां रमयामकः पावयांक्रियाद्विदामक्रन्निति छन्दसि। अभ्युत्सादयामकः। प्रजनयामकः। चिकयामकः। रमयामकः। पावयांक्रियात्। विदामक्रन्। लोके तु अभ्युदसीषदत्। प्राजीजनत्। अचैषीत्। अरीरमत्। पाव्यात्। अवेदिषुः।

४३. च्लि लुङि। अकार्षीत्, अहार्षीत्।

४४. च्लेः[2] सिच्। अकार्षीत्, अहार्षीत्। * स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः * अस्प्राक्षीत्,[3] अस्पार्क्षीत्, अस्पृक्षत्।[4] अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। अतर्पीत्,[5] अत्राप्सीत्, अतार्प्सीत्, अतृपत्। अदर्पीत्, अद्राप्सीत्, अदार्प्सीत्, अदृपत्।

४५. शल इगुपधादनिटः क्सः। अलिक्षत्। अधुक्षत्।

४६. श्लिष आलिङ्गने।[6] आश्लिक्षत्कन्यां देवदत्तः। अन्यत्र तु आश्लिषज्जतु काष्ठम्।

४७. न दृशः। अदर्शत्,[7] अद्राक्षीत्।

४८ णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्। अचीकरत्, अबीभवत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। * कमेश्च्लेचङ् वक्तव्यः * अचकमत। णिङ्पक्षे तु सन्वद्भावः। अचीकमत।

४९. विभाषा धेट्श्व्योः।[8] अदधत्, अधात्, अधासीत्। अशिश्वियत्, अश्वत्, अश्वयीत्।[9]

---

१. सदिजनिरमीणां ण्यन्तानां लुङ्याम्प्रत्ययो निपात्यते। चिनोतेराम् द्वित्वं कुत्वं च। अक इति चतुर्भिः सम्बध्यते। पवतेः पुनातेर्वा लिङ्याम् क्रियादित्यनुप्रयोगश्च। विदेर्लुङ्याम् गुणाभावः अक्रन्नित्यनुप्रयोगश्च। २. स्थानिन्यादेशे च चित्त्वमागमानुदात्तत्वं प्रत्ययस्वरमिव चित्स्वरमपि न बाधेतेति। ३. वैकल्पिकोऽमागमः। ४. पक्षे क्सः। ५. सिच्पक्षे रधादित्वाद्वेट्। सिजभावपक्षे पुषादित्वादङ्। ६. आलिङ्गनं परिष्वङ्गः। श्लिष इत्येको योगः। पुषाद्यङोऽपवादो न तु चिणः पुरस्तादपवादन्यायात्। तत आलिङ्गने। नियमार्थञ्चेदम्। आलिङ्गन एवेति। कर्मणि अनालिङ्गने सिजेव। आश्लेषि, आश्लिक्षातामित्यादि। ७. इरितो वेत्यङ्विकल्पः। ८. विभाषा घ्राधेडिति सिचो वा लुक्। ९. जॄस्तम्भ्विव्त्यङ् वा। सिच्पक्षे ह्म्यन्तेति न वृद्धिः।

५०. **गुपेश्छन्दसि** । गृहानजूगुपतं युवम् । अगौप्तम्, अगोपिष्टम्, अगोपायिष्टमिति वा ।

५१. **नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः** । मा त्वायतो जरितुः काममूनयीः । मा त्वाग्निर्ध्वनयीत् । काममैलयीः । मैनमर्दयीत् । लोके तु औननत्, अदध्वनत्, ऐलिलत्, आर्दिदत् ।

५२. **अस्यतिवक्तिख्यातिभ्योऽङ्** । पर्यास्थत[1] । अवोचत् । आख्यत् ।

५३. **लिपिसिचिह्वश्च** । अलिपत् । असिचत् । अह्वत् ।

५४. **आत्मनेपदेष्वन्यतरस्याम्** । अलिपत, अलिप्त । असिचत, असिक्त । अह्वत, अह्वास्त ।

५५. **पुषादि[2]द्युताद्यॢदितः परस्मैपदेषु** । अपुषत्, अशुषत् । अद्युतत्, अश्वितत् । अगमत्, अशकत् । आत्मनेपदे तु अद्योतिष्ट । अश्वेतिष्ट ।

५६. **सर्त्ति[3]शास्त्यर्त्तिभ्यश्च** । असरत् । अशिषत् । आरत् । समरत[4], समरेताम्, समरन्त ।

५७. **इरितो वा** । भिदिर् अभिदत्, अभैत्सीत् । छिदिर् अच्छिदत्, अच्छैत्सीत् । आत्मनेपदे तु अभित्त । अच्छित्त ।

५८. **जॄस्तम्भु[5]म्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** । अजरत्, अजारीत् । अस्तभत, अस्तम्भीत् । अम्रुचत्, अम्रोचीत् । अम्लुचत्, अम्लोचीत् । अग्रुचत्, अग्रोचीत् । अग्लुचत्, अग्लोचीत् । अग्लुचत्, अग्लुञ्चीत् । अश्वत्, अशिश्वयत, अश्वयीत्[6] ।

५९. **कृमृदृरुहिभ्यश्छन्दसि** । इदं तेभ्योऽकरं नमः । अथोऽमरत् । अदरदर्थान् । यत्सानोः सानुमारुहत् । लोके तु अकार्षीत् । अमृत । अदारीत् । अरुक्षत् ।

६०. **चिण् ते पदः** । अपादि ।

---

१. परस्मैपदे पुषादिपाठादेवाङ्सिद्धौ आत्मनेपदार्थं वचनम् । २. पुषादिर्दिवाद्यन्तर्गणो गृह्यते व्याख्यानात् । द्युतादिर्भ्वाद्यन्तर्गणः । ३. इह लुग्शपा शासिना साहचर्यात्सर्त्यर्ती जौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्नाङ् । असार्षीत् । आर्षीत् । ४. पृथग्योगकरणमात्मनेपदार्थम् । अर्त्तिश्रुदृशिभ्यश्चेत्यात्मनेपदम् । ५. स्तम्भुः सौत्रो धातुः । ६. विभाषा धेट्श्व्योरिति वा चङ् । तदभावपक्षे ह्म्यन्तेति न वृद्धिः ।

६१. दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । अदीपि, अदीपिष्ट । अजनि, अजनिष्ट । अबोधि, अबुद्ध । अपूरि, अपूरिष्ट । अतायि, अतायिष्ट । अप्यायि, अप्यायिष्ट ।

६२. अचः कर्मकर्त्तरि । अकारि, अकृत कटः स्वयमेव । अलावि, अलविष्ट केदारः स्वयमेव ।

६३. दुहश्च । अदोहि, अदुग्ध गौः स्वयमेव ।

६४. न रुधः । अवारुद्ध गौः स्वयमेव ।

६५. तपोऽनुतापे[1] च । अन्वतप्त पापेन[2] ।

६६. चिण् भावकर्मणोः । अभावि । अकारि घटः कुलालेन ।

६७. सार्वधातुके यक् । भूयते । अनुभूयते ।

६८. कर्त्तरि शप् । भवति । पचति ।

६९. दिवादिभ्यः श्यन् । दीव्यति[3] । सीव्यति—इत्यादि ।

७०. वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । भ्राश्यते, भ्राशते । भ्लाश्यते, भ्लाशते । भ्राम्यति[4], भ्रमति । क्राम्यति, क्रामति[5] । क्लाम्यति, क्लामति[6] । त्रस्यति, त्रसति । त्रुट्यति, त्रुटति । लष्यति, लषति ।

७१. यसोऽनुपसर्गात् । यस्यति, यसति । सोपसर्गस्य तु प्रयस्यति ।

७२. संयसश्च । संयस्यति, संयसति ।

७३. स्वादिभ्यः श्नुः । सुनोति । सिनोति—इत्यादि ।

७४. श्रुवः शृ च । शृणोति, शृणुतः, शृण्वन्ति—इत्यादि ।

७५. अक्षोऽन्यतरस्याम् । अक्ष्णोति, अक्षति ।

७६. तनूकरणे तक्षः । तक्ष्णोति, तक्षति वा काष्ठम् ।

७७. तुदादिभ्यः शः । तुदति । नुदति—इत्यादि ।

७८. रुधादिभ्यः श्नम् । रुणद्धि । भिनत्ति—इत्यादि ।

७९. तनादिकृञ्भ्य उः । तनोति । सनोति—इत्यादि । करोति, कुरुतः, कुर्वन्ति ।

---

१. अनुतापः पश्चात्तापः । २. पापं कर्तृ तेनाभ्याहत इत्यर्थः । अथवा पापेन पुंसा कर्त्रा अशोचीत्यर्थः । ३. हलि चेति दीर्घः । ४. शमामष्टानामिति दीर्घः । ५. क्रमः परस्मैपदेष्विति दीर्घः । ६. ष्ठिवुक्लम्वित्विति दीर्घः ।

८०. धिन्विकृण्व्योर[1] च । धिनोति[2] । कृणोति ।

८१. क्र्यादिभ्यः श्ना । क्रीणाति । प्रीणाति–इत्यादि ।

८२. स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च । स्तभ्नाति, स्तभ्नोति । स्तुभ्नाति, स्तुभ्नोति । स्कभ्नाति, स्कभ्नोति । स्कुभ्नाति, स्कुभ्नोति । स्कुनाति, स्कुनोति ।

८३. हलः श्नः शानज्झौ । स्तभान[3] । मुषाण । पुषाण—इत्यादि ।

८४. छन्दसि शायजपि । गृभाय जिह्वया मधु । बधान देव सवितः ।

८५. व्यत्ययो बहुलम् । आण्डा शुष्मस्य भेदति । जरसा मरते पतिः । इन्द्रो वस्तेन नेषतु । इन्द्रेण युजा तरुषेम वृत्रम् । लोके तु भिनत्ति, म्रियते, नयतु, तरेम ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥

धुरि दक्षिणायाः[4] । चषालं ये अश्वयूपाय तक्षति[5] । ब्रह्मचारिणमिच्छते[6] । प्रतीपमन्य ऊर्मिर्युध्यति[7] । मधोस्तृप्ता[8] इवासते । अधा स वीरैर्दशभिर्वियूयाः[9] । श्वोऽग्नीनाधास्यमानेन[10] । तमसो गा अदुक्षत्[11] । मित्र[12] वयं च सूरयः । स्वरव्यत्ययो यथास्थानं वक्ष्यते । अन्नादाय[13] ।

८६. लिङ्याशिष्यङ् । मन्त्रं वोचेमाग्नये[14] ।
गमेम जानतो गृहान् । * दृशेरग् वक्तव्यः * पितरं च दृशेयं मातरं च ।

८७. कर्मवत्कर्मणा तुल्यक्रियः[15] । पच्यते ओदनः स्वयमेव । भिद्यते काष्ठम् ।

---

१. अन्त्यस्येत्यर्थः । २. अतो लोपस्य स्थानिवद्भावाद् गुणो न । ३. अतो हेरिति हेर्लुक् । ४. दक्षिणस्यामिति प्राप्ते । ५. तक्षन्तीति प्राप्ते । ६. उपग्रहः परस्मैपदात्मनेपदे । इच्छतीति प्राप्ते । ७. युध्यत इति प्राप्ते । ८. मधुन इति प्राप्ते । ९. नरः पुरुषः । वियूयादिति प्राप्ते । १०. कालः कालवाची प्रत्ययः । लृडिह लुङ्विषये । ११. अधुक्षदिति प्राप्ते । १२. मित्रा वयमिति प्राप्ते । १३. कर्तृशब्दः कारकमात्रपरः । तद्वाचिनां कृत्तद्धितानां व्यत्ययः । अण्विषयेऽच् । अवग्रहे भेदः । यङ्–यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः । तत्फलं तु भेदतीत्याद्युक्तमेव । १४. वच उम् । १५. कर्त्तरि शबित्यतोऽनुवृत्तं कर्त्तरीति प्रथमया विपरिणम्यते । कर्मपदञ्चावृत्त्या कर्मस्थक्रियापरमपि ।

अपाचि। अभेदि। कर्मस्थक्रियत्वे उदाहरणानि। कर्तृस्थक्रियत्वे तु अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च। * सकर्मकाणां प्रतिषेधः * अन्योऽन्यं स्पृशतः। अजा ग्रामं नयति।

८८. तपस्तपःकर्मकस्यैव। तप्यते तपस्तापसः। अतप्त।

८९. न दुहस्नुनमां यक्चिणौ। गौः पयो दुग्धे। अदुग्ध। प्रस्नुते गौः। प्रास्नोष्ट। नमते दण्डः। अनंस्त। * यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् * कारयते। अचीकरत। उच्छ्रयते। उदशिश्रियत। ब्रूते कथा। अवोचत। * णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्[1] * पुच्छमुदस्यति, उत्पुच्छयते। उदपुपुच्छत गौः। ग्रन्थते ग्रन्थः। अग्रन्थिष्ट। श्रन्थते। अश्रन्थिष्ट। विकुर्वते सैन्धवाः। व्यकारिष्ट। व्यकृत।

९०. कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च। कुष्यति, कुष्यते वा पादः स्वयमेव। रज्यति, रज्यते वा वस्त्रम्।

९१. धातोः। अधिकारोऽयमातृतीयाध्यायसमाप्तेः।

९२. तत्रोपपदं सप्तमीस्थम्। कुम्भं करोतीति कुम्भकारः। स्तम्बेरमः। कर्णेजपः। उपसरजः। मन्दुरजः।

९३. कृदतिङ्। कर्त्तव्यम्। करणीयम्। कर्त्ता। कारकः।

९४. वाऽसरूपोऽस्त्रियाम्। विक्षिपः। विक्षेप्ता। विक्षेपकः।

९५. कृत्याः। अधिकारोऽयं प्राङ् ण्वुलः।

९६. तव्यत्तव्यानीयरः। कर्त्तव्यम्। करणीयम्। * वसेस्तव्यत्कर्त्तरि णिच्च * वसतीति वास्तव्यः। * केलिमर उपसंख्यानम् * पचेलिमा माषाः। भिदेलिमानि[2] काष्ठानि।

९७. अचो यत्। चेयम्। जेयम्। * तकिशसिचतियतिजनिभ्यो यद्वाच्यः * तक्यम्। शस्यम्। चत्यम्। यत्यम्। जन्यम्[3]। * हनो वा यद्वधश्च वक्तव्यः * वध्यः। पक्षे ण्यत्। घात्यः।

---

१. भारद्वाजीयास्तु इत्थं पठन्ति। २. कर्मणि प्रत्ययः। कर्मकर्त्तर्ययमिति केषांचिन्मतं भाष्यविरुद्धम्। ३. जनेर्यद्विधिः स्वरार्थः। ण्यतापि रूपसिद्धेः। जनिवध्योश्चेति वृद्धिस्तु न।

९८. पोरदुपधात्। ण्यतोऽपवादः। शप्यम्। लभ्यम्। नानुबन्धकृतमसारूप्यम्। अतो न ण्यत्। तव्यदादयस्तु स्युरेव।

९९. शकिसहोश्च। शक्यम्। सह्यम्।

१००. गदमदचरयमश्चानुपसर्गे। गद्यम्। मद्यम्। चर्यम्। * चरेराङि चागुरौ * आचर्यो[1] देशः। गुरुस्तु आचार्यः। यमेर्ग्रहणं नियमार्थम्। सोपसर्गान्माभूदिति। प्रयाम्यम्[2]।

१०१. अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु। अवद्यं पापम्। अन्यत्र अनुद्यं[3] गुरुनाम। पण्या गौः। शतेन वर्या[4] कन्या।

१०२. वह्यं करणम्। वह्यं शकटम्। अन्यद्वाह्यम्।

१०३. अर्यः स्वामिवैश्ययोः। अर्यः स्वामी वैश्यो वा।

१०४. उपसर्या काल्या प्रजने। उपसर्या[5] गौः।

१०५. अजर्यं संगतम्। न जीर्यतीति अजर्यमार्यसंगतम्।

१०६. वदः सुपि क्यप् च। ब्रह्मोद्यम्। ब्रह्मवद्यम्।

१०७. भुवो भावे। ब्रह्मभूयं[6] गतः।

१०८. हनस्त च। ब्रह्महत्या[7]।

१०९. एतिस्तुशास्वृदृजुषः क्यप्। इत्यः[8]। स्तुत्यः। शिष्यः। वृत्यः। वृ-इति वृञो ग्रहणं न वृङः। वार्या ऋत्विजः। आदृत्यः। जुष्यः। * शंसिदुहिगुहिभ्यो वेति वक्तव्यम् * शंस्यम्। शस्यम्। दुह्यम्, दोह्यम्। गुह्यम्। गोह्यम्। * आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् * आज्यं[9] घृतम्।

११०. ऋदुपधाच्चाक्लृपिचृतेः। वृत्यम्। वृध्यम्। क्लृपिचृत्योस्तु कल्प्यम्, चर्त्यम्।

१११. ई[10] च खनः। खेयम्।

---

१. गन्तव्य इत्यर्थः। २. तेन न तत्र भवेद्विनियम्यमिति वार्त्तिकप्रयोगान्निपूर्वात्स्यादेव। त्वया नियम्या इत्यादि। ३. तद्धि न गर्ह्यम्। किन्तु उच्चारणानर्हम्। आत्मनाम गुरोर्नामेति स्मृतेः। ४. न निरोद्धव्या। अन्या वृत्या। ५. गर्भग्रहणार्थं प्राप्तकालेत्यर्थः। ६. ब्रह्मभावमित्यर्थः। ७. स्त्रीत्वं लोकात्। ब्रह्मणो हननमित्यर्थः। ८. कथमुपेयम्। एरेतद्रूपं नेणः। ९. बाहुलकात्करणे। १०. इ चेति ह्रस्वः सुपठः।

११२. भृञोऽसंज्ञायाम्। भृत्याः कर्मकराः। संज्ञायां तु भार्या नाम क्षत्रियाः। * समश्च बहुलम् * संभृत्याः संभार्याः कर्मकराः।

११३. मृजेर्विभाषा। मृज्यः। मार्ग्यः।

११४. राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः। राजसूयः[1]। राजसूयम्। सरत्याकाशे सूर्यः। मृषोद्यम्। रुच्यः। कुप्यं सुवर्णरजतभिन्नं धनम्। कृष्टपच्याः[2]। अव्यथ्यः।

११५. भिद्योद्ध्यौ नदे। भिद्यः[3]। उद्ध्यः[4]।

११६. पुष्यसिध्यौ नक्षत्रे। पुष्यः[5]। सिध्यः[6]।

११७. विपूयविनीयजित्या मुञ्जकल्कहलिषु। विपूयो[7] मुञ्जः। विनीयः कल्कः[8]। जित्यो हलिः[9]। अन्यत्र तु विपव्यम्। विनेयम्। विजेयम्।

११८. प्रत्यपिभ्यां ग्रहेः। * छन्दसीति वक्तव्यम् *। प्रतिगृह्यम्। अपिगृह्यम्। लोके तु प्रतिग्राह्यम्। अपिग्राह्यम्।

११९. पदास्वैरिबाह्यापक्ष्येषु च। अवगृह्यं पदम्। गृह्यकाः[10] शुकाः। ग्रामगृह्या[11] सेना। आर्यगृह्यः[12]।

१२०. विभाषा कृवृषोः। कृत्यम्, कार्यम्। वृष्यम्, वर्ष्यम्।

१२१. युग्यं च पत्रे[13]। युग्यो गौः।

१२२. अमावस्यदन्यतरस्याम्। अमावस्या[14], अमावास्या।

१२३. छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि। निष्टर्क्यं

---

१. राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः। २. कृष्टे स्वयमेव पच्यन्ते। ३. भिनत्ति कूलम्। ४. उज्झत्युदकम्। ५. पुष्यन्त्यस्मिन्नर्थाः। ६. सिध्यन्त्यस्मिन्। ७. रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः। ८. कल्कः पिष्ट ओषधिविशेषः। पापमिति वा। ९. हलिः कृष्टसमीकरणार्थं स्थूलकाष्ठम्। जित्यो बलेन कृष्टव्य इत्यर्थः। १०. पञ्जरादिबन्धनेन परतन्त्रीकृताः। अस्वैरी परतन्त्र इत्यर्थात्। ११. ग्रामबहिर्भूतेत्यर्थः। बाह्येति स्त्रीलिङ्गनिर्देशात्पुंनपुंसकयोर्न। १२. आर्यैर्गृह्यते, आर्यपक्षाश्रित इत्यर्थः। १३. पत्रं वाहनम्। अत्र क्यप् कुत्वं च निपात्यते। १४. अमा सह वसतोऽस्यां चन्द्रार्काविति विग्रहः।

चिन्वीत पशुकामः। स्पर्धन्ते वा उ देवहूये। प्रणीयः। उन्नीयः। उच्छिष्यः। मर्यः। स्तर्या। ध्वर्यः। खन्यः। खान्यः। शुन्धध्वं दैव्याय कर्मणे देवयज्यायै। आपृच्छ्यं धरुणं वाज्यर्षति। प्रतिषीव्यः। ब्रह्मवाद्यम्। भाव्यः। स्ताव्यः। उपचाय्यपृडम्। * हिरण्य इति वक्तव्यम् * उपचेयपृडमन्यत्।

१२४. ऋहलोर्ण्यत्। कार्य्यम्। हार्य्यम्। वाक्यम्। पाक्यम्।

१२५. ओरावश्यके। लाव्यम्।पाव्यम्। अवश्यलाव्यम्[1]। अवश्यपाव्यम्।

१२६. आसुयुवपिरपिलपित्रपिचमश्च। यतोऽपवादः। आसाव्यम्, याव्यम्,। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्।

१२७. आनाय्योऽनित्ये। आनाय्यो दक्षिणाग्निः[2]।

१२८. प्रणाय्योऽसंमतौ। प्रणाय्यश्चौरः[3]। प्रणाय्योऽन्तेवासी[4]।

१२९. पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामधेनीषु। पाय्यं[5] मानम्। मेयमन्यत्। सम्यङ् नीयते होमार्थमग्निं प्रतीति सांनाय्यं हविर्विशेषः। निचीयतेऽस्मिन्धान्यादिकमिति निकाय्यो निवासः। धीयतेऽनया समिदिति धाय्या ऋक्।

१३०. क्रतौ कुण्डपाय्यसंचाय्यौ। कुण्डेन पीयतेऽस्मिन् सोमः स कुण्डपाय्यः क्रतुः। संचीयतेऽसौ संचाय्यः।

१३१. अग्नौ[6] परिचाय्योपचाय्यसमूह्याः। परिचाय्यः। उपचाय्यः। समूह्यः।

१३२. चित्याग्निचित्ये च। चीयतेऽसौ चित्योऽग्निः। अग्नेश्चयनमग्निचित्या।

१३३. ण्वुल्तृचौ। कारकः, कर्त्ता। हारकः, हर्त्ता। वोढा। कारिका, कर्त्री। कुटिता, कोटकः। विजिता। घातकः। दायकः। शमकः। दमकः। नियामकः। जनकः। वधकः। रन्धकः। जम्भकः। रधिता, रद्धा। मङ्क्ता। नंष्टा, नशिता। रम्भकः, रब्धा। लम्भकः, लब्धा। एषिता, एष्टा। सहिता,

---

१. लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि। समो वा हिततयोर्मांसस्य पचि युड्घञोः॥ इति मलोपः। २. गार्हपत्यादयमानीयते सततमप्रज्वलनादनित्यश्च। ३. प्रीत्यनर्ह इत्यर्थः। ४. विरक्त इत्यर्थः। ५. मीयतेऽनेनेति विग्रहः। आदेः पत्वञ्च। ६. अग्निधारणार्थे स्थलविशेष एते निपात्यन्ते।

सोढा। दरिद्रिता, दरिद्रायकः। क्रमिता। संजिगमिषिता। विवृत्सिता। पापचकः[1], पापाचकः[2]।

१३४. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः। नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। मधुसूदनः। विभीषयतीति विभीषणः। लवणः[3]। ग्राही। स्थायी। मन्त्री। विशयी[4]। विषयी[5]। परिभवी, परिभावी[6]। पचः। नदट्, चोरट्, देवट्। नदी। चोरी। देवी। जारभरा। श्वपचा[7]। चेक्रियः। नेन्यः। लोलुवः। पोपुवः। मरीमृजः।

१३५. इगुपधज्ञाप्रीकिरः कः। क्षिपः, लिखः, बुधः, कृशः। ज्ञः। प्रियः। किरः।

१३६. आतश्चोपसर्गे[8]। सुग्लः। प्रज्ञः।

१३७. पाघ्राध्माधेट्दृशः शः। पिबः। जिघ्रः। धमः। धयः। धया[9] कन्या। पश्यः। घ्रः संज्ञायां[10] न। व्याघ्रः।

१३८. अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च। लिम्पः, विन्दः, धारयः, पारयः, वेदयः, उदेजयः, चेतयः, सातयः[11]। * नौ लिम्पेर्वाच्यः * निलिम्पा देवाः। * गवादिषु विदेः संज्ञायाम्। गोविन्दः, अरविन्दम्।

१३९. ददातिदधात्योर्विभाषा। णापवादः। ददः, दायः। दधः, धायः। अनुपसर्गादित्येव। प्रदः, प्रधः।

१४०. ज्वलितिकसन्तेभ्यो णः। अचोऽपवादः। ज्वालः, ज्वलः। चालः, चलः। अनुपसर्गादित्येव। उज्ज्वलः। * तनोतेरुपसंख्यानम् * अवतनोतीत्यवतानः।

१४१. श्याद्व्यधास्रुसंस्रुवतीणवसावहृलिहश्लिषश्वसश्च[12]। अवश्यायः।

---

१. यङन्ताण्ण्वुल्। अतो लोपस्य स्थानिवद्भावान्न वृद्धिः। २. यङ्लुगन्ताण्ण्वुल्। ३. नन्द्यादिगणे निपातनाण्णत्वम्। ४. वृद्ध्यभावो निपातनात्। ५. इह षत्वमपि। ६. वृद्ध्यभावो वा निपातनात्। ७. न्यङ्क्वादिषु पाठात् श्वपाकोऽप्यणि। ८. श्याद्व्यधेति णस्यापवादः। ९. धेटष्टित्वात्स्तनंधयीतिवत् ङीप् प्राप्तः। खशोऽन्यत्र नेष्यत इति हरदत्तः। १०. व्याघ्रादिभिरिति निर्देशात्। ११. सातिः सुखार्थो हेतुमण्ण्यन्तः। वा सरूपन्यायेन क्विप्। सात् परमात्मा। सात्वन्तो भक्ताः। १२. अनुपसर्गादिति विभाषेति च निवृत्तम्। अतो नित्यं णः।

प्रतिश्यायः । दायः, धायः । व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायः। अवहारः । लेहः । श्लेषः । श्वासः ।

१४२. दुन्योरनुपसर्गे । दुनोतीति दावः । नीसाहचर्य्यात्सानुबन्धकाद् दुनोतेरेव णः । दवतेस्तु पचाद्यच् । दवः । नायः । सोपसर्गे तु प्रदवः । प्रणयः ।

१४३. विभाषा ग्रहः । अचोऽपवादः । ग्रहः, ग्राहः[1] । * भवतेश्चेति काशिका * भवो देवः संसारश्च । भावाः पदार्थाः ।

१४४. गेहे कः । गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद् गृहा दाराः ।

१४५. शिल्पिनि ष्वुन् । * नृतिखनिरञ्जिभ्य एव * नर्त्तकः, खनकः, रजकः[2] । नर्त्तकी[3], खनकी, रजकी[4] ।

१४६. गस्थकन् । गाथकः । गाथिका ।

१४७. ण्युट् च । गायनः । गायनी ।

१४८. हश्च व्रीहिकालयोः । हायना[5] व्रीहयः । हायनो[6] वर्षम् ।

१४९. प्रुसृल्वः समभिहारे[7] वुन् । प्रवकः । सरकः । लवकः ।

१५०. आशिषि च । जीवताज्जीवकः[8] । नन्दतान्नन्दकः ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
तृतीयाध्यायस्य प्रथमपादः समाप्तः ।



१. व्यवस्थितविभाषाश्रयणात् ज्योतिषि ग्रहः । जलचरे ग्राहः । २. असि अकेऽने च रञ्जेर्नलोपो वाच्यः । ३. षित्त्वान् ङीष् । ४. भाष्यमते तु नृतिखनिभ्यामेव ष्वुन् । रञ्जेस्तु क्वुन् शिल्पिसंज्ञयोरिति क्वुन् । रजिका । ५. जहत्युदकमिति विग्रहः । ६. जहाति पदार्थानिति, जिहीते प्राप्नोति वा । ७. समभिहारेण साधुकारित्वं लक्ष्यते । ८. आशासितुः पित्रादेरियमुक्तिः ।

# अथ तृतीयाध्यायस्य द्वितीयपादः ।



१. कर्मण्यण् । कुम्भं करोतीति कुम्भकारः । नगरकारः । काण्डलावः । शरलावः । वेदाध्यायः । चर्चापाठः[१] । * शीलिकामिभक्ष्याचरिभ्यो णः * अणोऽपवादः । मांसशीला मांसकामा । मांसभक्षा । कल्याणाचारा । * ईक्षिक्षमिभ्यां च * सुखप्रतीक्षा । बहुक्षामा ।

२. ह्वावामश्च । कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ।

३. आतोऽनुपसर्गे कः । अणोऽपवादः । गोदः । कम्बलदः । पार्ष्णित्रम् । *कविधौ सर्वत्र सम्प्रसारणिभ्यो डः * ब्रह्मज्यः[२] । आह्वः[३] । प्रह्वः ।

४. सुपि स्थः । सुपीति योगो विभज्यते । समस्थः । विषमस्थः । द्विपः । ततः स्थ इति । आरम्भसामर्थ्याद् भावे । आखूनामुत्थानमाखूत्थः ।

५. तुन्दशोकयोः परिमृजापनुदोः । * आलस्यसुखाहरणयोरिति वाच्यम् * तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्त्ता । अन्यत्र तुन्दपरिमार्जः । शोकापनोदः । * कप्रकरणे मूलविभुजादिभ्य[४] उपसंख्यानम् * मूलानि विभुजति, मूलविभुजो रथः । महीध्रः । कुध्रः । गिलः । कुमुदम् ।

६. प्रे दाज्ञः । अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः ।

७. समि ख्यः । अणोऽपवादः । गोसंख्यः ।

८. गापोष्टक् । कापवादः । सामगः । सामगी । * पिबतेः सुराशीध्वोरिति वाच्यम् * सुरापी । शीधुपी । अन्यत्र क्षीरपा । सुरां पातीति सुरापा ।

९. हरतेरनुद्यमनेऽच् । अणोपवादः । अंशहरः । उद्यमने भारहारः । * शक्तिलाङ्गुलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम् । शक्तिग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । तोमरग्रहः । यष्टिग्रहः । घटग्रहः । घटीग्रहः । धनुर्ग्रहः । * सूत्रे च धार्येऽर्थे * सूत्रग्रहः । अन्यत्र सूत्रग्राहः ।

१०. वयसि[५] च । कवचहरः कुमारः ।

---

१. आदित्यं पश्यति, ग्रामं गच्छतीत्यादावनभिधानान्न । २. ब्रह्म जिनातीति विग्रहः । ३. सर्वत्र ग्रहणादातश्चोपसर्गे । ४. मूलविभुजादिराकृतिगणः । ५. उद्यमनार्थं सूत्रम् ।

११. आङि ताच्छील्ये । पुष्पाहरः । अताच्छील्ये तु भारहारः ।

१२. अर्हः । अणोऽपवादः । पूजार्हा ब्राह्मणी ।

१३. स्तम्बकर्णयो रमिजपोः । * हस्तिसूचकयोरिति वक्तव्यम् * स्तम्बेरमो हस्ती । कर्णेजपः सूचकः ।

१४. शमि धातोः संज्ञायाम् । शङ्करः । शंभवः । शंवदः । शङ्करा[1] नाम परिव्राजिका तच्छीला ।

१५. अधिकरणे शेतेः । खे शेते, खशयः । * पार्श्वादिषूपसंख्यानम् * पार्श्वशयः । पृष्ठशयः । उदरशयः । * उत्तानादिषु कर्त्तृषु * उत्तानः शेते, उत्तानशयः । अवमूर्धशयः[2] । * गिरौ डश्छन्दसि * गिरौ शेते गिरिशः । लोके तु लोमादित्वाच्छः ।

१६. चरेष्टः[3] । कुरुषु चरतीति कुरुचरः । कुरुचरी ।

१७. भिक्षासेनादायेषु च[4] । भिक्षाचरः । सेनाचरः । आदायचरः[5] ।

१८. पुरोऽग्रतोऽग्रेषु सर्त्तेः । पुरःसरः । अग्रतःसरः । अग्रमग्रेऽग्रेण वा सरतीति अग्रेसरः । एदन्तत्वं च निपात्यते । अग्रसरमित्यपि बाहुलकात् ।

१९. पूर्वे कर्त्तरि । पूर्वः सरतीति पूर्वसरः । पूर्वं सरतीति वाक्ये पूर्वसारः ।

२०. कृञो हेतुताच्छील्यानुलोम्येषु । यशस्करी विद्या । श्राद्धकरः । वचनकरः ।

२१. दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्त्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु[6] । दिवाकरः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः[7] । कारकरः । अन्तकरः । अनन्तकरः । आदिकरः । बहुकरः । नान्दीकरः । किङ्करः । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्त्तृकरः । चित्रकरः । क्षेत्रकरः । एककरः । द्विकरः । जङ्घाकरः । बाहुकरः । अहस्करः[8] । यत्करः । तत्करः । धनुष्करः[9] । अरुष्करः । * किंयत्तद्बहुषु

---

१. पुनर्धातुग्रहणं बाधकविषये प्रवृत्त्यर्थम् । तेन कृञो हेत्विति न टः । २. अवनतो मूर्धा यस्य सोऽवमूर्धाधोमुख इत्यर्थः । ३. अधिकरण उपपदे । ४. अनधिकरणार्थ आरम्भः । ५. आदायेति ल्यबन्तम् । ६. अहेत्वादावपि । ७. कस्कादित्वात्सः । ८. अयमपि कस्कादौ । ९. नित्यं समास इति षत्वम् ।

कृञोऽज्विधानमिति वार्त्तिकम् * किंकरा। यत्करा। तत्करा। बहुकरा। पुंयोगे किंकरी।

२२. कर्मणि भृतौ[1]। कर्मकरो भृतकः।

२३. न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु। शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकारः। चाटुकारः। सूत्रकारः। मन्त्रकारः। पदकारः।

२४. स्तम्बशकृतोरिन्। *व्रीहिवत्सयोरिति वक्तव्यम् *स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः।

२५. हरतेर्दृतिनाथयोः पशौ। दृतिहरिः[2], नाथहरिः[3] पशुः।

२६ फलेग्रहिरात्मम्भरिश्च। फलानि गृह्णाति, फलेग्रहिः[4]। आत्मानं बिभर्त्तीति आत्मम्भरिः[5]। चात्कुक्षिम्भरिः। उदरम्भरिः।

२७. छन्दसि वनसनरक्षिमथाम्। ब्रह्मवनिं त्वा क्षत्रवनिम्। उत नो गोषणिं धियम्। ये पथां पथि रक्षयः। हविर्मथीनामभि।

२८. एजेः खश्। जनमेजयतीति जनमेजयः। अङ्गमेजयः। * वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम् * वातमजा मृगाः। शुनिन्धयः[6]। तिलन्तुदः। शर्धञ्जहा[7] माषाः।

२९. नासिकास्तनयोर्ध्माधेटोः। * स्तने धेटो नासिकायां ध्मश्चेति वाच्यम् * स्तनं धयतीति स्तनन्धयः। स्तनन्धयी[8]। नासिकन्धयः। नासिकन्धमः।

३०. नाडीमुष्ट्योश्च। * यथासख्यं नेष्यते * नाडिन्धमः। नाडिन्धयः। मुष्टिन्धमः। मुष्टिन्धयः। * घटीखारीखरीषूपसंख्यानम् * घटिन्धमः, घटिन्धयः। खारिन्धमः, खारिन्धयः, खरिन्धमः, खरिन्धयः।

३१. उदि कूले रुजिवहोः। कूलमुद्रुजः। कूलमुद्वहः।

३२. वहाभ्रे लिहः। वहंलिहो गौः। अभ्रंलिहो वायुः।

३३. परिमाणे पचः। प्रस्थम्पचा स्थाली। खारिम्पचः कटाहः।

३४. मितनखे च। मितम्पचा ब्राह्मणी। नखम्पचा यवागूः[9]।

---

१. भृतिर्वेतनं तस्यां गम्यमानायाम्। कर्मणीति स्वरूपपरम्। २. दृतिं चर्ममयद्रव्यं हरतीति दृतिहरिः कुक्कुरः। ३. नाथं नासारज्जुं हरतीति। ४. उपपदस्य एत्वम्। ५. आत्मनो मुमागमश्च। ६. खित्यनव्ययस्येति ह्रस्वः। ७. शर्धोऽपानशब्दस्तं जहतीति। ८. धातोष्टित्त्वान् ङीप्। ९. पचिरत्र तापवाची।

३५. विध्वरुषोस्तुदः । विधुन्तुदो राहुः । अरुन्तुदः ।

३६. असूर्यललाटयोर्दृशितपोः । असूर्यम्पश्या[1] राजदाराः । ललाटन्तपः सूर्यः ।

३७. उग्रम्पश्येरम्मदपाणिन्धमाश्च । उग्रम्पश्यः । इरम्मदो[2] मेघज्योतिः । पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा[3] ।

३८. प्रियवशे वदः खच् । प्रियंवदः । वशंवदः । * गमेः सुपि वाच्यः * मितङ्गमो हस्ती । * विहायसो विह च * * खच्च डिद्वा वाच्यः * विहङ्गमो विहङ्गः ।

३९. द्विषत्परयोस्तापेः । द्विषन्तं परं वा तापयतीति द्विषन्तपः[4] । परन्तपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषाऽनित्या । तेनेह न । द्विषतीतापः ।

४०. वाचि यमो व्रते । वाचंयमो मौनव्रती । अन्यत्र वाग्यामः ।

४१ पूःसर्वयोर्दारिसहोः । पुरं दारयतीति पुरन्दरः । सर्वंसहः । * भगे च दारेरिति काशिका[5] * भगन्दरः ।

४२. सर्वकूलाभ्रकरीषेषु कषः । सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः गिरिर्वा । करीषङ्कषा वात्या ।

४३. मेघर्तिभयेषु कृञः । मेघङ्करः । ऋतिङ्करः । भयङ्करः । भयशब्देन तदन्तविधिः । अभयङ्करः ।

४४. क्षेमप्रियमद्रेऽण्[6] च । क्षेमङ्करः । क्षेमकारः[7] । प्रियङ्करः । प्रियकारः । मद्रंकरः । मद्रकारः ।

४५. आशिते भुवः करणभावयोः । आशितो भवत्यनेनाशितम्भव ओदनः । आशितस्य भवनमाशितम्भवः ।

४६ संज्ञायां भृतृवृजिधारिसहितपिदमः । विश्वम्भरा वसुन्धरा । रथन्तरं[8] साम । पतिंवरा कन्या । शत्रुंजयो हस्ती । युगन्धरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिन्दमः[9] ।

---

१. न सूर्यं पश्यन्तीति विग्रहः । असमर्थसमासो निपातनात् । २. इरया माद्यतीति विग्रहः । इरा उदकम् । ३. अन्धकारावृत इत्यर्थः । ४. खचि ह्रस्व इति ह्रस्वः । मुमि कृते संयोगान्तलोपः । ५. अन्ये तु बाहुलकाल्लब्धमिदमित्याहुः । ६. चात् खच् । ७. अल्पारम्भाः क्षेमकरा इति तु पचाद्यचि कर्मणः शेषत्वविवक्षायाम् । ८. रथेन तरतीति व्युत्पत्तिमात्रं न त्ववयवार्थानुगमः । ९. दमिरिह शमनायां तेन सकर्मकः ।

४७. गमश्च[1]। सुतङ्गमः।

४८. अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः। अन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः। सर्वगः। अनन्तगः। * सर्वत्रपन्नयोरुपसंख्यानम् * सर्वत्रगः। पन्नं[3] पतितं गच्छतीति पन्नगः। * उरसो लोपश्च * उरसा गच्छतीत्युरगः। * सुदुरोरधिकरणे * सुखेन गच्छत्यत्र सुगः। दुर्गः। * अन्यत्रापि दृश्यत इति वक्तव्यम् * ग्रामगः। * डे च विहायसो विहादेशो वक्तव्यः * विहगः।

४९. आशिषि हनः। शत्रुं वध्याच्छत्रुहः। * दारावाहनोऽणन्तस्य च टः संज्ञायाम् * दार्वाघाटः। * चारौ वा * चार्वाघाटः। चार्वाघातः। * कर्मणि समि च * वर्णसङ्घाटः। वर्णसङ्घातः। पदसङ्घाटः। पदसङ्घातः।

५०. अपे क्लेशतमसोः। क्लेशापहः पुत्रः। तमोपहः सूर्यः।

५१. कुमारशीर्षयोर्णिनिः। कुमारघाती। शीर्षघाती[4]।

५२. लक्षणे जायापत्योष्टक्। जायाघ्नो ना। पतिघ्नी स्त्री।

५३. अमनुष्यकर्तृके च। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। शत्रुघ्नः कृतघ्न इत्यादि तु मूलविभुजादित्वात्सिद्धम्।

५४. शक्तौ हस्तिकपाटयोः[5]। हस्तिघ्नो ना। कपाटघ्नश्चोरः।

५५. पाणिघताडघौ शिल्पिनि। पाणिघः। ताडघः। * राजघ उपसंख्यानम्। राजानं हन्ति, राजघः।

५६. आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्। अनाढ्यमाढ्यं कुर्वन्त्यनेनाढ्यङ्करणम्।

५७. कर्त्तरि भुवः खिष्णुच्खुकञौ। अनाढ्य आढ्यो भवति, आढ्यम्भविष्णुः। आढ्यम्भावुकः। सुभगम्भविष्णुः। सुभगम्भावुकः।

५८. स्पृशोऽनुदके क्विन्। घृतस्पृक्। मन्त्रस्पृक्।

५९. ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च। ऋतौ, ऋतुं वा यजतीति ऋत्विक्। धृष्णोतीति दधृक्। सृजन्ति तां स्रक्। दिशन्ति तामिति दिक्। उत्स्निह्यति, उष्णिक्। प्राङ्। प्रत्यङ्। उदङ्। युङ्। क्रुङ्।

---

१. योगविभाग उत्तरार्थः। २. डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। ३. पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम्। ४. शिरसः शीर्षभावोऽपि निपात्यते। ५. मनुष्यकर्तृकार्थमिदम्।

६०. त्यदादिषु दृशोऽनालोचने कञ्च[1]। तादृक्, तादृशः। यादृक्, यादृशः। * समानान्ययोश्चेति वक्तव्यम् * सदृक्, सदृशः। अन्यादृक्, अन्यादृशः। * क्सोऽपि वाच्यः। तादृक्षः। सदृक्षः। अन्यादृक्षः। कीदृक्षः।

६१. सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्[2]। द्युसत्, उपनिषत्। अण्डसूः, प्रसूः। मित्रद्विट्, प्रद्विट्। मित्रध्रुक्, प्रध्रुक्। गोधुक्, प्रधुक्। अश्वयुक्, प्रयुक्। वेदवित्, निवित्। काष्ठभित्, प्रभित्। रज्जुच्छित्, प्रच्छित। शत्रुजित्, प्रजित्। सेनानीः, प्रणीः। विराट्, सम्राट्।

६२. भजो ण्विः। अंशभाक्। प्रभाक्।

६३. छन्दसि सहः। तुराषाट्।

६४. वहश्च[3]। दित्यवाट्।

६५. कव्यपुरीषपुरीष्येषु ञ्युट्। कव्यवाहनः पितॄणाम्। पुरीषवाहनः। पुरीष्यवाहनः।

६६. हव्येऽनन्तःपादम्। अग्निश्च हव्यवाहनः। अन्तःपादन्तु, हव्यवाळग्निरजरः पिता नः।

६७. जनसनखनक्रमगमो विट्। अब्जाः[4]। गोजाः। गोषा इन्द्रो नृषा असि। इयं शुष्मेभिर्बिसखा इवारुजत्। आ दधिक्रा शवसा पञ्च कृष्टीः। अग्रेगाः।

६८. अदोऽनन्ने। आममत्ति, आमात्। सस्यात्। नेह :– अन्नादः।

६९. क्रव्ये च। क्रव्यमत्ति, क्रव्यात्। क्रव्याद इति तु पृषोदरादिपाठात्सिद्धम्।

७०. दुहः कब्घश्च। कामदुघा। अर्थदुघा।

७१. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्। * श्वेतवहादीनां डस् पदस्येति[5] वक्तव्यम् * श्वेतवाः, श्वेतवाहौ, श्वेतवाहः। उक्थानि उक्थैर्वा शंसति, उक्थशा यजमानः। उक्थशासौ। पुरो दाश्यते पुरोडाः[6]। पुरोडाशौ।

७२. अवे यजः। अवयाः। अवयाजौ।

७३. विजुपे छन्दसि। उपयट्।

---

१. चात् क्विन्। २. वक्ष्यमाणस्य क्विप् चेत्यस्य प्रपञ्चोऽयम्। ३. योगविभाग उत्तरार्थः। ४. विड्वनोरित्यात्वम्। ५. यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इत्यर्थः। ६. निपातनाद् दस्य डः।

७४. **आतो मनिन्क्वनिब्वनिपश्च।** वाद्विच्। सुदामा। सुधीवा, सुपीवा। भूरिदावा, घृतपावा। कीलालपाः।

७५. **अन्येभ्योऽपि दृश्यन्ते।** सुशर्मा। प्रातरित्वा। विजावा[1]। अवावा[2]। रोट्। रेट्। सुगण्।

७६. **क्विप् च।** उखायाः स्रंसते, उखास्रत्। पर्णध्वत्। वाहभ्रट्।

७७. **स्थः क च[3]।** शंस्थः। शंस्थाः।

७८. **सुप्यजातौ णिनिस्ताच्छील्ये।** उष्णभोजी। शीतभोजी। नेह :– ब्राह्मणानामन्त्रयिता। * साधुकारिण्युपसंख्यानम् * साधुकारी। साधुदायी। * ब्रह्मणि वदः * ब्रह्मवादी।

७९. **कर्त्तर्युपमाने।** उष्ट्र इव क्रोशति, उष्ट्रक्रोशी। ध्वाङ्क्षरावी।

८०. **व्रते।** स्थण्डिलशायी।

८१. **बहुलमाभीक्ष्ण्ये।** क्षीरपायिण उशीनराः।

८२. **मनः।** दर्शनीयमानी।

८३. **आत्ममाने खश्च।** पण्डितम्मन्यः। पण्डितमानी।

८४. **भूते।** अधिकारोऽयं वर्त्तमाने लडिति यावत्।

८५. **करणे यजः।** सोमेनेष्टवान्, सोमयाजी। अग्निष्टोमयाजी।

८६. **कर्मणि हनः।** पितृव्यघाती। मातुलघाती।

८७. **ब्रह्मभ्रूणवृत्रेषु क्विप्[4]।** ब्रह्महा। भ्रूणहा। वृत्रहा।

८८. **बहुलं छन्दसि।** यो मातृहा पितृहा।

८९. **सुकर्मपापमन्त्रपुण्येषु कृञः[5]।** सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। स्वादिष्वेवेति नियमाभावात्। शास्त्रकृत्, भाष्यकृत्।

९०. **सोमे सुञः[6]।** सोमसुत्।

---

१. विजायत इति विजावा। विड्वनोरित्यात्त्वम्। २. ओणृ अपनयने। ३. शमि धातोरित्यचं बाधितुं सूत्रम्। ४. चतुर्विधोऽत्र नियम इष्यते। ब्रह्मादिष्वेव, हन्तेरेव, भूत एव, क्विबेवेति काशिकायाम्। भाष्ये तु आदिमोऽन्तिमश्च द्विविध एव। ५. भूत एव, कृञ एव, क्विबेवेति त्रिविधोऽत्र नियमः काशिकायाम्। तेन मन्त्रं करोति, करिष्यति वेत्यत्र मन्त्रमधीतवान्मन्त्राध्याय इत्यत्र च न क्विप्। कर्म कृतवानित्यत्राण्न। ६. चतुर्विधोऽत्र नियमो धातुकालोपपदप्रत्ययविषयकः।

९१. अग्नौ चेः[1] । अग्निचित् ।

९२. कर्मण्यग्न्याख्यायाम् । श्येन इव चितः, श्येनचित् । कङ्कचित् ।

९३. कर्मणीनि विक्रियः । * कुत्सितग्रहणं कर्त्तव्यम् * सोमविक्रयी । घृतविक्रयी । नेह :— धान्यविक्रायः ।

९४. दृशेः क्वनिप् । पारं दृष्टवान्, पारदृश्वा । मेरुदृश्वा ।

९५. राजनि युधिकृञः । राजानं योधितवान्, राजयुध्वा[2] । राजकृत्वा ।

९६. सहे च । सहयुध्वा । सहकृत्वा ।

९७. सप्तम्यां जनेर्डः । सरसिजम् । मन्दुरजः[3] ।

९८. पञ्चम्यामजातौ । संस्कारजः । अदृष्टजः ।

९९. उपसर्गे च संज्ञायाम् । प्रजा स्यात्सन्ततौ जने ।

१००. अनौ कर्मणि । पुमांसमनुरुध्य जाता, पुमनुजा ।

१०१. अन्येष्वपि दृश्यते । अजः । अनुजः । ब्राह्मणजः । अपिशब्दः सर्वोपाधिव्यभिचारार्थः । परितः खाता, परिखा ।

१०२. निष्ठा । स्नातं मया । स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् ।

१०३. सुयजोर्ङ्वनिप् । सुत्वा, सुत्वानौ । यज्वा, यज्वानौ ।

१०४. जीर्यतेरतृन् । जरन्, जरन्तौ, जरन्तः । वा सरूपविधिना जीर्णः, जीर्णवान् ।

१०५. छन्दसि लिट् । अहं द्यावापृथिवी आततान । सूर्यमुभयतो ददर्श ।

१०६. लिटः कानज्वा । अग्निं चिक्यानः । चक्राणा वृष्णिम् ।

१०७. क्वसुश्च[4] । यो नो अग्ने अरिरिवां अघायुः । ददिवान् । पपिवान् ।

१०८. भाषायां सदवसश्रुवः । निषेदुषीमासनबन्धधीरः । अध्यूषुषस्तामभवज्जनस्य । शुश्रुवान् ।

१०९. उपेयिवाननाश्वाननूचानश्च । उपेयिवान्, उपेयुषी । उपेत्यविवक्षितम् । ईयिवान् । समीयिवान् । अनाश्वान्[5] । अनूचानः[6] ।

११०. लुङ् । अभूत् । अकार्षीत् ।

---

१. अत्रापि पूर्ववन्नियमः । २. युधिरिहान्तर्भावितण्यर्थः । ३. मन्दुरायां जात इति । ङ्यापोरिति ह्रस्वः । ४. योगविभाग उत्तरार्थः । ५. नाश्नान्-इत्यर्थः । ६. अन्ववोचत्-इत्यर्थः ।

१११. अनद्यतने लङ्। अभवत्। अकरोत्।

११२. अभिज्ञावचने[1] लृट्। स्मरसि, बुध्यसे, चेतयसे वा कृष्ण गोकुले वत्स्यामः।

११३. न यदि। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि।

११४. विभाषा साकाङ्क्षे[2]। स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः[3]। पक्षे लङ्।

११५. परोक्षे लिट्। बभूव। चकार।

११६. हशश्वतोर्लङ् च। इति हाकरोत्, चकार वा। शश्वदकरोत्, चकार वा।

११७. प्रश्ने चासन्नकाले। अगच्छत्किम्? जगाम किम्? अनासन्ने तु किं कंसं जघान?

११८. लट् स्मे। यजति स्म युधिष्ठिरः।

११९. अपरोक्षे च। एवं स्म पिता ब्रवीति।

१२०. ननौ पृष्टप्रतिवचने[4]। अकार्षीः किम्? ननु करोमि भोः।

१२१. नन्वोर्विभाषा। अकार्षीः किम्? न करोमि, नाकार्षम्। अहं नु करोमि, अहं न्वकार्षम्।

१२२. पुरि लुङ् चास्मे। वसन्तीह पुराच्छात्राः। अवात्सुः, अवसन्, ऊषुर्वा। स्मयोगे तु यजति स्म पुरा।

१२३. वर्त्तमाने लट्। भवति, भवतः, भवन्ति। पठति, पठतः, पठन्ति।

१२४. लटः शतृशानचावप्रथमासमानाधिकरणे पचन्तं चैत्रं पश्य। पचमानं चैत्रं पश्य। प्रथमा[5]सामानाधिकरण्येऽपि क्वचित्। सन् ब्राह्मणः। * माङ्याक्रोश इति वाच्यम् * मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति।

१२५. संबोधने च। पचन्, हे पचमान।

---

१. वचनग्रहणं पर्यायार्थम्। २. लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थ इत्यर्थः। ३. अत्र वासो लक्षणं चारणं लक्ष्यम्। यच्छब्दयोगेऽपि न यदीति बाधित्वा परत्वाद्विकल्पः। ४. अनद्यतनपरोक्ष इति निवृत्तम्। ५. अनुवृत्त्या सिद्धे पुनर्लड्ग्रहणात्।

१२६. लक्षणहेत्वोः[1] क्रियायाः । शयाना भुञ्जते यवनाः । अर्जयन्वसति । हरिं पश्यन्मुच्यते ।

१२७. तौ सत्[2] । ब्राह्मणस्य[3] कुर्वन्, कुर्वाणो वा । करिष्यन्, करिष्यमाणो वा ।

१२८. पूङ्यजोः शानन् । पवमानः । यजमानः ।

१२९. ताच्छील्यवयोवचनशक्तिषु चानश् । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रून् निघ्नानः ।

१३०. इङ्धार्योः शत्रकृच्छ्रिणि । अधीयन् पारायणम् । धारयन् । कृच्छ्रे तु अधीते कष्टेन । धारयति भारम् ।

१३१. द्विषोऽमित्रे । द्विषन् शत्रुः ।

१३२. सुञो यज्ञसंयोगे । सर्वे सुन्वन्तः सर्वे यजमानाः सत्रिणः ।

१३३. अर्हः प्रशंसायाम् । अर्हन् ।

१३४. आ[4] क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । अधिकारोऽयम्परिभाषा वा ।

१३५. तृन् । कर्त्ता कटान् ।

१३६. अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । अलंकरिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्त्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ।

१३७. णेश्छन्दसि । वीरुधः पारयिष्णवः । दृषदं धारयिष्णवः ।

१३८. भुवश्च[5] । भविष्णुः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुः । क्षयिष्णुरित्यादि[6] ।

१३९. ग्लाजिस्थश्च ग्स्नुः । ग्लास्नुः । जिष्णुः । स्थास्नुः[7] । चाक्षुवः । भूष्णुः[8] । * दंशेश्छन्दस्युपसंख्यानम् * दंक्ष्णवः पशवः ।

---

१. हेतुः फलं कारणं च । २. संज्ञासूत्रमिदम्परिभाषा वा । ३. पूरणगुणेति समासनिषेधः । ४. अभिविधावाङ् । तेन क्विपोऽप्ययमर्थनिर्देशः । ५. योगविभाग उत्तरार्थः । ६. इदं वृत्तिरीत्या । नैतद्भाष्ये दृष्टम् । ७. कित्त्वाभावान्नेत्त्वम् । ८. श्र्युकः कितीत्यत्र गकारप्रश्लेषान्नेट् ।

१४०. त्रसिगृधिधृषिक्षिपेः क्नुः । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

१४१. शमित्यष्टाभ्यो घिनुण् । शमी । तमी । दमी । श्रमी । भ्रमी । क्लमी । प्रमादी । उन्मादी । वा सरूपविधिना[१] उन्मदिष्णुः ।

१४२. संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च । सम्पर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ।

१४३. वौ कषलसकत्थस्रम्भः । विकाषी । विलासी । विकत्थी । विस्रम्भी ।

१४४. अपे च लषः । अपलाषी । विलाषी ।

१४५. प्रे लपसृद्रुमथवदवसः । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ।

१४६. निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ् । निन्दकः । हिंसकः । क्लेशकः । खादकः । विनाशकः । परिक्षेपकः । परिराटकः । परिवादकः । व्याभाषकः । असूयकः[२] ।

१४७. देविक्रुशोश्चोपसर्गे । आदेवकः । आक्रोशकः । अनुपसर्गे तु देवयिता । क्रोष्टा ।

१४८. चलनशब्दार्थादकर्मकाद्युच् । चलनः, चोपनः, कम्पनः । शब्दनः, रवणः । सकर्मकात्तु पठिता विद्याम् ।

१४९. अनुदात्तेतश्च हलादेः । वर्त्तनः । वर्धनः ।

१५०. जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । जवनः[३] । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः[४] ।

१५१. क्रुधमण्डार्थेभ्यश्च । क्रोधनः, रोषणः । मण्डनः, भूषणः ।

---

१. ताच्छीलिकेषु वा सरूपविधिर्नास्तीति प्रायिकम् । २. कण्ड्वादिभ्यो यक् । ३. जु-इति सौत्रो धातुर्गतौ वेगे च । ४. पूर्वेण सिद्धे पदिग्रहणं लषपतपदेत्युकञा बाधा मा भूदिति । तेन ताच्छीलिकेषु वा सरूपविधिर्नास्तीति । तेनालंकृञस्तृन् न ।

१५२. न यः । क्नूयिता । क्ष्मायिता ।

१५३. सूददीपदीक्षश्च । सूदिता । दीपिता । दीक्षिता ।

१५४. लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् । लाषुकः । पातुकः । पादुकः । स्थायुकः । भावुकः । वर्षुकः । आघातुकः । कामुकः । आगामुक । शारुकः ।

१५५. जल्पभिक्षकुट्टलुण्टवृङः षाकन् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः, वराकी ।

१५६. प्रजोरिनिः । प्रजवी । प्रजविनौ ।

१५७. जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ।

१५८. स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तन्द्रालुः[१] । श्रद्धालुः । * शीङो वाच्यः * शयालुः ।

१५९. दाधेट्सिशदसदो रुः । दारुः । धारुर्वत्सो मातरम्[२] । सेरुः । शद्रुः । सद्रुः ।

१६०. सृघस्यदः क्मरच् । सृमरः । घस्मरः । अद्मरः ।

१६१. भञ्जभासमिदो घुरच् । भङ्गुरः । भासुरः । मेदुरः ।

१६२. विदिभिदिच्छिदेः कुरच् । विदुरः पण्डितः । भिदुरं[३] काष्ठम् । छिदुरम् ।

१६३. इण्नशजिसर्त्तिभ्यः क्वरप् । इत्वरः, इत्वरी । नश्वरः । जित्वरः । सृत्वरः ।

१६४. गत्वरश्च । गत्वरः[४] ।

१६५. जागरूकः । जागरूकः[५] कर्मणि ।

१६६. यजजपदशां यङः । यायजूकः । जञ्जपूकः । दन्दशूकः ।

१६७. नमिकम्पिस्म्यजसकमहिंसदीपो रः । नम्रः । कम्प्रः । स्मेरः । अजस्रम्[६] । कम्रः । हिंस्रः । दीप्रः ।

---

१. तत्पूर्वो द्राधातुः । दस्य नश्च निपातनात् । २. न लोकेति षष्ठीनिषेधः । ३. कर्मकर्त्तरि । ४. अनुनासिकलोपश्च निपात्यते । ५. जागर्त्तेरूकः । ६. जसिर्नञ्पूर्वः क्रियासातत्ये ।

१६८. सनाशंसभिक्ष उः। चिकीर्षुः। आशंसुः[1]। भिक्षुः।

१६९. विन्दुरिच्छुः। वेत्ति तच्छीलो विन्दुः। इच्छति तच्छील इच्छुः।

१७०. क्याच्छन्दसि। अघायुः।

१७१. आदृगमहनजनः किकिनौ लिट् च। पपिः सोमम्[2], ददिर्गाः। बभ्रिर्वज्रम्। जग्मिर्युवा। जघ्निर्वृत्रममित्रियम्। जज्ञिः। * भाषायां धाञ्कृसृगमिजनिनमिभ्यः * दधिः। चक्रिः। सस्रिः। जग्मिः। जज्ञिः। नेमिः। * सासहिवावहिचाचलिपापतीनामुपसंख्यानम् * सासहिः। वावहिः। चाचलिः। पापतिः।

१७२. स्वपितृषोर्नजिङ्। स्वप्नक्। तृष्णक्। * धृषेश्चेति काशिका * धृष्णक्।

१७३. शॄवन्द्योरारुः। शरारुः। वन्दारुः।

१७४. भियः क्रुक्लुकनौ। भीरुः। भीलुकः। * क्रुकन्नपि वाच्यः * भीरुकः।

१७५. स्थेशभासपिसकसो वरच्। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः।

१७६. यश्च यङः। यायावरः।

१७७. भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्। विभ्राट्। भाः, भासौ। धूः, धुरौ। विद्युत्। ऊर्क्। पूः, पुरौ। जूः[3], जुवौ। ग्रावस्तुत्।

१७८. अन्येभ्योऽपि दृश्यते। छित्। भित्। युक्। दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्। तथा च वार्त्तिकम् * क्विब्वचिप्रच्छ्ययायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणञ्च * वक्तीति वाक्। पृच्छतीति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते, कटप्रूः। श्रयति हरिं श्रीः। * द्युतिगमिजुहोतीनां द्वे च * दिद्युत्[4]। जगत्। * जुहोतेर्दीर्घश्च * जुहूः। * दॄ भये, अस्य ह्रस्वश्च * ददृत्। * ध्यायतेः सम्प्रसारणं च * धीः।

१७९. भुवः सञ्ज्ञान्तरयोः। मित्रभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे यस्तिष्ठति स प्रतिभूः।

---

१. इच्छार्थस्याशंसेर्ग्रहणम्। २. लिड्वद्भावान्न लोकेति षष्ठीनिषेधः। ३. दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः। ४. दृशिग्रहणादभ्याससंज्ञापि।

१८०. विप्रसंभ्यो ड्वसंज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । संभुर्जनिता । संज्ञायान्तु विभुर्नाम कश्चित् । * मितद्र्वादीनामुपसंख्यानम् * मितं द्रवतीति मितद्रुः । शतद्रुः । शंभुः[1] ।

१८१. ध्यः कर्मणि ष्ट्रन् । धात्री जनन्यामलकीवसुमत्युपमातृषु ।

१८२. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । दान्त्यनेन, दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा[2] । नध्री ।

१८३. हलसूकरयोः पुवः । हलस्य सूकरस्य वा पोत्रम् ।

१८४. अर्त्तिलूधूसूखनसहचर इत्रः । अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

१८५. पुवः संज्ञायाम् । पवित्रम्[3] ।

१८६. कर्त्तरि चर्षिदेवतयोः[4] । पूयतेऽनेनेति पवित्रं वेदमन्त्रः । अग्निः पवित्रं स मां पुनातु ।

१८७. ञीतः क्तः । ञिक्ष्विदा क्ष्विण्णः । ञिइन्धी इद्धः ।

१८८. मतिबुद्धिपूजार्थेभ्यश्च । राज्ञां मतः, इष्टः । बुद्धः, विदितः । पूजितः, अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ।



१. अन्तर्भावितण्यर्थोऽत्र भवतिः । २. अजादित्वाट्टाप्, न ङीष् । ३. दर्भः । ४. ऋषिर्वेदमन्त्रः ।

# अथ तृतीयाध्यायस्य तृतीयपादः ।



१. उणादयो बहुलम्[1]। कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधुः । आशुः—इत्यादि ।

२. भूतेऽपि दृश्यन्ते । वृत्तं तदिति, वर्त्म । चरितं तदिति, चर्म । भसितं, भस्म ।

३. भविष्यति गम्यादयः । गमी[2] ग्रामम्, आगामी । भावी ।

४. यावत्पुरानिपातयोर्लट् । यावद्भुङ्क्ते । पुरा भुङ्क्ते ।

५. विभाषा कदाकर्ह्योः । कदा कर्हि वा भुङ्क्ते, भोक्ष्यते, भोक्ता वा ।

६. किंवृत्ते लिप्सायाम् । कं, कतरं, कतमं वा भोजयसि, भोजयिष्यसि, भोजयितासि वा । लिप्साभावे तु कः पाटलिपुत्रं गमिष्यति ।

७. लिप्स्यमानसिद्धौ च । योऽन्नं ददाति, दास्यति, दाता वा स स्वर्गं याति, यास्यति, याता वा ।

८. लोडर्थलक्षणे च । कृष्णश्चेद्भुङ्क्ते, भोक्ष्यते, भोक्ता वा, त्वं गाश्चारय ।

९. लिङ् चोर्ध्वमौहूर्त्तिके[3] । मुहूर्त्तादुपरि उपाध्यायश्चेदागच्छेत्, आगच्छति, आगमिष्यति, आगन्ता वा, अथ त्वं छन्दोऽधीष्व ।

१०. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । कृष्णं द्रष्टुं दर्शको[4] वा याति ।

११. भाववचनाश्च । यागाय याति । भूतये व्रजति ।

१२. अण् कर्मणि च । काण्डलावो व्रजति । कम्बलदायो याति ।

---

१. वर्त्तमान इति संज्ञायामिति च वर्त्तते । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्य्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ २. गमेरिनिः । आङि णित् । ३. ऊर्ध्वं मुहूर्त्ताद्भव ऊर्ध्वमौहूर्त्तिकः । निपातनात्समास उत्तरपदवृद्धिश्च । ४. अत्र वा सरूपन्यायेन तृजादयो न पुनर्ण्वुल्विधानात् ।

१३. लृट् शेषे च । करिष्यामीति व्रजति । भविष्यति । करिष्यति ।

१४. लृटः सद्वा । करिष्यन्तं करिष्यमाणं पश्य । करिष्यतोऽपत्यं कारिष्यतः । हे करिष्यन् । अर्जयिष्यन् वसति ।

१५. अनद्यतने लुट् । लृटोऽपवादः । श्वो भोक्ता । भविता ।

१६. पदरुजविशस्पृशो घञ् । पद्यतेऽसौ, पादः । रुजतीति, रोगः । विशतीति, वेशः । स्पृशतीति, स्पर्शः ।

१७. सृ स्थिरे । सरति कालान्तरमिति सारः । * व्याधिमत्स्यबलेषु चेति वक्तव्यम् । * अतिसारो[१] व्याधिः । विसारो मत्स्यः । सारो बलम् ।

१८. भावे[२] । पाकः, पाकौ । त्यागः । रागः ।

१९. अकर्त्तरि च कारके[३] संज्ञायाम् । रज्यत्यस्मिन्, रङ्गः । प्रास्यत इति, प्रासः । संज्ञायामिति प्रायिकम्[४] । को भवता लाभो लब्धः ।

२०. परिमाणाख्यायां सर्वेभ्यः[५] । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ[६] । * दारजारौ कर्त्तरि णिलुक् च * दारयन्तीति दाराः । जारयन्तीति जाराः ।

२१. इङश्च । अचोऽपवादः । अध्यायः । उपेत्यास्मादधीयते, उपाध्यायः । * अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् * उपाध्याया, उपाध्यायी । * शॄ वायुवर्णनिवृतेषु * शारो[७] वायुः । शारो[८] वर्णः । निशारो निवृतम्[९] ।

२२. उपसर्गे रुवः । अपोऽपवादः । संरावः । आरावः ।

२३. समि युद्रुदुवः । संयावः[१०] । संद्रावः । संदावः ।

२४. श्रिणीभुवोऽनुपसर्गे । श्रायः । नायः । भावः । उपसर्गे तु प्रश्रयः । प्रणयः । प्रभवः[११] ।

---

१. रुधिरादिकमतिशयेन सारयतीत्यर्थः । २. सिद्धावस्थापन्ने भाव इत्यर्थात् । साध्यावस्थापन्नस्य तस्य धातुनैव प्रतीतेः । ३. इत उत्तरमकर्त्तरि कारके भाव इति चानुवर्त्तते । ४. इदमनुक्तसमुच्चयार्थेन चकारेण लभ्यते । ५. अजपोर्बाधनार्थमिदम् । ६. कॄ विक्षेप इत्यस्य । ७. करणे घञ् । ८. चित्रीकरणमिह धात्वर्थः । ९. निवृतमावरणम् । आच्छादनमिति यावत् । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । १०. संयूयते मिश्रीक्रियते गुडादिभिरिति संयावोऽपूपविशेषः । ११. प्रभाव इत्यत्र तु प्रकृष्टो भाव इति प्रादिसमासः । राज्ञो नय इति तु बाहुलकात्समाधेयम् ।

२५. वौ क्षुश्रुवः । विक्षावः । विश्रावः । अन्यत्र क्षवः । श्रवः ।

२६. अवोदोर्नियः । अवनायः । उन्नायः । उन्नय उत्प्रेक्षेति तु बाहुलकादच् ।

२७. प्रे द्रुस्तुस्रुवः । प्रद्रावः । प्रस्तावः । प्रस्रावः ।

२८. निरभ्योः पूल्वोः । निष्पावः । अभिलावः । अन्यत्र पवः । लवः

२९. उन्न्योर्ग्रः । उद्गारः । निगारः । अन्यत्र गरः ।

३०. कॄ धान्ये । उत्कारो निकारो धान्यस्य । अन्यत्र उत्करः, निकरः ।

३१. यज्ञे समि स्तुवः । समेत्य स्तुवन्ति यस्मिन् छन्दोगाः, स देश संस्तावः । अन्यत्र संस्तवः परिचयः ।

३२. प्रे स्त्रोऽयज्ञे । प्रस्तारः । यज्ञे तु बर्हिषः प्रस्तरो मुष्टिविशेषः ।

३३. प्रथने वावशब्दे । पटस्य विस्तारः । अप्रथने तृणविस्तरः । शब्दे तु ग्रन्थविस्तरः ।

३४. छन्दोनाम्नि च । विष्टारपङ्क्तिश्छन्दः[1] ।

३५. उदि ग्रहः । उद्ग्राहः ।

३६. समि मुष्टौ[2] । मल्लस्य संग्राहः । अन्यत्र द्रव्यस्य संग्रहः ।

३७. परिन्योर्नीणोर्द्यूताभ्रेषयोः[3] । परिणायेन शारान् हन्ति । एषोऽत्र न्यायः ।

३८. परावनुपात्यय[4] इणः । तव पर्य्यायः । अतिपाते तु कालस्य पर्य्ययः

३९. व्युपयोः शेतेः पर्याये[5] । तव विशायः । ममोपशायः । अन्यत्र विशयः संशयः । उपशयः समीपशयनम् ।

४०. हस्तादाने चेरस्तेये । पुष्पप्रचायः । यष्ट्यादाने प्रचयः । स्तेये तु पुष्पप्रचयश्चौर्य्येण ।

४१. निवासचितिशरीरोपसमाधाने[6]ष्वादेश्च[7] कः । काशीनिकायः

---

१. विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः । २. दृढमुष्टिताख्यायते । ३. पदार्थानामनपचारो यथाप्राप्तकरणमभ्रेष उचितमित्यर्थः । ४. क्रमप्राप्तस्यानतिपातोऽनुपात्ययः । ५. शयनस्य पर्य्याय इत्यर्थः । ६. उपसमाधानं राशीकरणम् । ७. चः क इति वक्तव्य आदेरित्युक्तिर्यङ्लुक्यादेरेव यथा स्यात् । गोमयानां निकेचायः ।

आकायमग्निं चिन्वीत । चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । गोमयनिकायः । अन्यत्र तु चयः ।

४२. सङ्घे[1] चानौत्तराधर्ये । भिक्षुनिकायः । औत्तराधर्ये तु सूकरनिचयः[2] ।

४३. कर्मव्यतिहारे णच् स्त्रियाम् । व्यावक्रोशी[3] । व्यावहासी ।

४४. अभिविधौ भाव इनुण् । सांराविणं[4] वर्त्तते ।

४५. आक्रोशेऽवन्योर्ग्रहः । अवग्राहस्ते[5] भूयात् । निग्राहस्ते[6] भूयात् । अन्यत्र तु अवग्रहः पदस्य । निग्रहश्चोरस्य ।

४६. प्रे लिप्सायाम् । पात्रप्रग्राहेण चरति भिक्षुः । अन्यत्र प्रग्रहः ।

४७. परौ यज्ञे । उत्तरः परिग्राहः[7] ।

४८. नौ वृ धान्ये । नीवाराः । अन्यत्र निवरा[8] कन्या ।

४९. उदि श्रयतियौतिपूद्रुवः । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । समुच्छ्रय इति तु बाहुलकात् ।

५०. विभाषाङि रुप्लुवोः । आरावः, आरवः । आप्लावः, आप्लवः ।

५१. अवे ग्रहो वर्षप्रतिबन्धे । अवग्राहः, अवग्रहः[9] ।

५२ प्रे वणिजाम् । तुलाप्रग्राहेण प्रग्रहेण वा चरति वणिक् ।

५३. रश्मौ[10] च । प्रग्राहः, प्रग्रहः ।

५४. वृणोतेराच्छादने । प्रवारः । प्रवरः ।

५५. परौ भुवोऽवज्ञाने[11] । परिभावः, परिभवः ।

५६. एरच् । चयः । जयः । * भयादीनामुपसंख्यानम्[12] * भयम् । वर्षम् ।

५७. ॠदोरप् । करः, गरः, शरः । यवः, लवः, स्तवः, पवः ।

५८. ग्रहवृदृनिश्चिगमश्च । घञचोरपवादः । ग्रहः । वरः । दरः ।

---

१. प्राणिनां समूहः सङ्घः । २. स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते । ३. णचः स्त्रियामञ् । अञन्तत्वान्ङीप् । न कर्मव्यतिहार इत्यैज्न । ४. अणिनुणः । इनण्यनपत्ये । ५. अभिभव इत्यर्थः । ६. पीडनमित्यर्थः । ७. स्फेन वेदेः स्वीकरणम् । ८. बाहुलकात् क्तिन्विषयेऽप्यप् । ९. वर्षाभाव इत्यर्थः । १०. अश्वादीनां संयमनार्था रज्जुरिह रश्मिः । ११. अवज्ञानमनादरः । १२. नपुंसके क्तादिनिवृत्त्यर्थम् ।

निश्चयः । गमः । * वशिरण्योरुपसंख्यानम् * वशः । रणः । * घञर्थे कवि-
धानम् * । प्रस्थः । विघ्नः । चक्रम्[1] । चिक्किदम् । चक्नसः ।

५९. उपसर्गेऽदः । प्रघसः[2] । विघसः ।

६०. नौ ण च[3] । न्यादः । निघसः ।

६१. व्यधजपोरनुपसर्गे । घञोऽपवादः । व्यधः । जपः । उपसर्गे तु
आव्याधः । उपजापः ।

६२. स्वनहसोर्वा । स्वनः, स्वानः । हसः, हासः । अनुपसर्ग एव ।
प्रस्वानः । प्रहासः ।

६३. यमः समुपनिविषु च[4] । संयमः, संयामः । उपयमः, उपयामः ।
नियमः, नियामः । वियमः, वियामः । यमः, यामः ।

६४. नौ गदनदपठस्वनः । निगदः, निगादः । निनदः, निनादः । नि-
पठः, निपाठः । निस्वनः, निस्वानः ।

६५. क्वणो वीणायाञ्च । निक्वणः, निक्वाणः । क्वणः, क्वाणः । वीणायां
प्रक्वणः, प्रक्वाणः ।

६६. नित्यं पणः परिमाणे । मूलकपणः[5] । शाकपणः ।

६७. मदोऽनुपसर्गे । धनमदः । उपसर्गे तु प्रमादः ।

६८. प्रमदसंमदौ हर्षे । प्रमदः, संमदः । अन्यत्र प्रमादः, संमादः ।

६९. समुदोरजः पशुषु । समजः पशूनां सङ्घः । उदजस्तेषां प्रेरणम् ।
अन्यत्र समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् ।

७०. अक्षेषु[6] ग्लहः । अक्षस्य ग्लहः । अन्यत्र ग्रहः पादस्य ।

७१. प्रजने सर्त्तेः । गवामुपसरः[7] ।

७२. ह्वः सम्प्रसारणं न्यभ्युपविषु च । निहवः । अभिहवः । उप-
हवः । विहवः । अन्यत्र प्रह्वायः ।

---

१. द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् । २. घञपोश्चेति घस्लादेशः ।
३. चादप् । ४. चादनुपसर्गेऽपि । ५. व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते
सोऽस्य विषयः । ६. अक्षशब्देन देवनं लक्ष्यते । व्यात्युक्षीमभिसरणग्लहामदीव्यन् ।
७. अवसरः, प्रसर इत्यादि तु अधिकरणे पुंसि संज्ञायामिति घः ।

७३. आङि युद्धे । आहूयन्तेऽस्मिन्निति आहवः[1] । अन्यत्र आह्वायः ।

७४. निपानमाहावः । आहावस्तु निपानं स्यादुपकूपजलाशये ।

७५. भावेऽनुपसर्गस्य । हवः ।

७६. हनश्च वधः[2] । वधः । घातः ।

७७. मूर्त्तौ घनः । अभ्रघनः । दधिघनः[3] ।

७८. अन्तर्घनो देशे । अन्तर्घनः[4] ।

७९. आगारैकदेशे प्रघणः प्रघाणश्च । प्रघणः, प्रघाणः[5] ।

८०. उद्घनोऽत्याधानम् । उद्घन्यन्तेऽस्मिन्निति उद्घनः[6] ।

८१. अपघनोऽङ्गम्[7] । अपघनः पाणिः पादो वा ।

८२. करणेऽयोविद्रुषु । अयो हन्यतेऽनेनेति अयोघनः । विघनः । द्रुघनः । द्रुघण[8] इत्येके ।

८३. स्तम्बे क च[9] । स्तम्बघ्नः । स्तम्बघनः ।

८४. परौ घः । परिहन्यतेऽनेन परिघः । पलिघः[10] ।

८५. उपघ्न आश्रयः[11] । पर्वतेनोपहन्यते सामीप्येन गम्यते, पर्वतोपघ्नः ।

८६. सङ्घोद्घौ गणप्रशंसयोः । सङ्घः पशूनाम् । उद्घो[12] मनुष्यः ।

८७. निघो निमितम्[13] । निघा वृक्षाः ।

८८. ड्वितः क्त्रिः । पाकेन निर्वृत्तम् , पक्त्रिमम्[14] । उप्त्रिमम् । कृत्रिमम् ।

८९. ट्वितोऽथुच् । वेपथुः । श्वयथुः । क्षवथुः ।

---

१. युद्धम् । २. वाद्धल् । ३. सैन्धवघनमानयेति तु धर्म्मशब्देन धर्म्मिणो लक्षणात् । ४. वाहीकग्रामविशेषोऽयम् । अन्तर्घण इति पाठान्तरम् । ५. द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च । तत्र बाह्यप्रकोष्ठस्य संज्ञेयम् । प्रकर्षेण हन्यत इति विग्रहः । ६. यस्मिन्काष्ठेऽन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तत् । ७. अङ्गं शरीरावयवः । ८. पूर्वपदात्संज्ञायामिति णत्वम् । संज्ञैषा कुठारस्य । द्रुर्वृक्षः । ९. चादप् । १०. परेश्च घाङ्कयोरिति लत्वम् । ११. आश्रयशब्देन सामीप्यं लक्ष्यते । १२. उद्घन्यते उत्कृष्टो ज्ञायत इत्यर्थः । १३. समन्तान्मितं निमितम् । समारोहपरिणाहमित्यर्थः । १४. क्त्रेर्मब्नित्यम् । नित्यग्रहणात् क्त्रिर्मब्विषयः ।

९०. यजयाचयतविच्छप्रच्छरक्षो नङ्। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः[1]। रक्ष्णः।

९१. स्वपो नन्। स्वप्नः।

९२. उपसर्गे घोः किः। प्रधिः। अन्तर्धिः। उपाधिः।

९३. कर्मण्यधिकरणे च। जलानि धीयन्तेऽस्मिन्, जलधिः। शरधिः।

९४. स्त्रियां क्तिन्। घञजपामपवादः। कृतिः। चितिः। मतिः। स्तुतिः। स्फातिः[2]। * श्रुयजीषिस्तुभ्यः करणे * श्रूयतेऽनया श्रुतिः। इष्टिः[3]। स्तुतिः। कीर्णिः[4]। गीर्णिः। लूनिः। धूनिः। पूनिः। प्रह्लत्तिः[5]। चूर्त्तिः[6]। फुल्तिः। अपचितिः[7]। * सम्पदादिभ्यः क्विप् *। सम्पत्, विपत्। * क्तिन्नपीष्यते * संपत्तिः, विपत्तिः।

९५. स्थागापापचो भावे। अङोऽपवादः। प्रस्थितिः, उपस्थितिः। संगीतिः। संपीतिः। पक्तिः। व्यवस्थायामिति ज्ञापकात् अवस्था संस्थापि।

९६. मन्त्रे वृषेषपचमनविद्भूवीरा उदात्तः। वृष्टिं दिवः। सुम्नमिष्टये। पचात्पक्तीरुत। इयं ते नव्यसी मतिः। वित्तिः। भूतिः। अग्न आयाहि वीतये। रातौ स्यामोभयासः।

९७. ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च[8]। ऊतिः[9]। यूतिः[10]। जूतिः। सातिः[11]। हेतिः। कीर्त्तिः।

९८. व्रजयजोर्भावे क्यप्। व्रज्या। इज्या।

९९. संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः। समजन्त्यस्यामिति समज्या[12] सभा। निषीदन्त्यस्यामिति निषद्या आपणः। निपतन्त्यस्यां निपत्या पिच्छिला भूमिः। मन्यतेऽनया मन्या गलपार्श्वशिरा। विदन्त्यनया विद्या। सुत्याभिषवः। शय्या। भृत्या। ईयतेऽनया, इत्या शिबिका।

---

१. प्रश्ने चासन्नेति निर्देशान्न सम्प्रसारणम्। २. स्फायी धातुः। स्फीतिकाम इति तु प्रामादिकम्। स्फान्ताद्धात्वर्थे णिचि अच इरिति वा। ३. यजेरिषेश्चेदं रूपम्। ४. ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः। ५. ह्लादो निष्ठायामिति सूत्रे ह्लाद इति योगविभागाद्ध्रस्वः। ६. ति चेत्युत्वम्। ७. चायतेः क्तिनीति चिभावः। ८. उदात्त इति हि वर्त्तते। ९. ज्वरत्वरेत्यूठ्। स्वरार्थं वचनम्। १०. दीर्घत्वं निपात्यते। ११. द्यतिस्यतिमास्थेतीत्वं प्राप्तं निपातनाद्वार्यते। सनोतेर्वा जनसनेत्यात्वे कृते स्वरः फलम्। १२. अजेः क्यपि वीभावो नेति वाच्यम्।

१००. कृञः श च । कृञः[१]। कृत्या । श च । चात्क्तिन् । क्रिया । कृतिः ।

१०१. इच्छा । इच्छा । * परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् *[२] परिचर्या । परिसर्या । मृगया । अटाट्या । * जागर्तेरकारो वा * पक्षे शः । जागरा । जागर्या ।

१०२. अ प्रत्ययात् । चिकीर्षा । पुत्रकाम्या । लोलूया । कण्डूया ।

१०३. गुरोश्च[३] हलः । ईहा । ऊहा । * निष्ठायां सेट इति वक्तव्यम् * नेह :- आप्तिः । दीप्तिः[४] ।

१०४. षिद्भिदादिभ्योऽङ् । जॄष् जरा । त्रपूष् त्रपा । भिदा विदारण एव[५] । भित्तिरन्या । छिदा । मृजा । * कृपेः सम्प्रसारणं च * कृपा ।

१०५. चिन्तिपूजिकथिकुम्बिचर्चश्च । युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ।

१०६. आतश्चोपसर्गे । क्तिनोऽपवादः । प्रदा । उपदा । श्रद्धा । अन्तर्धा ।

१०७. ण्यासश्रन्थो युच् । अस्यापवादः । कारणा । हारणा । आसना । श्रन्थना । * घट्टिवन्दिविदिभ्यश्चेति वक्तव्यम् * घट्टना । वन्दना । वेदना । * इषेरनिच्छार्थस्य * अन्वेषणा । * परेर्वा * पर्येषणा । परीष्टिः ।

१०८. रोगाख्यायां ण्वुल् बहुलम् । प्रच्छर्दिका । प्रवाहिका । विचर्चिका । * क्वचिन्न * शिरोऽर्तिः । * धात्वर्थनिर्देशे ण्वुल्वक्तव्यः * आसिका । शायिका । * इक्श्तिपौ धातुनिर्देशे *[६] पचिः । पचतिः । * वर्णात्कारः * अकारः । ककारः । * रादिफः * रेफः । * मत्वर्थाच्छः *[७] मत्वर्थीयः । * इणजादिभ्यः * आजिः । आतिः । * इञ् वपादिभ्यः । वापिः । वासिः । * इक् कृष्यादिभ्यः * कृषिः । गिरिः ।

१०९. संज्ञायाम् । उद्दालकपुष्पभञ्जिका ।

११०. विभाषाख्यानपरिप्रश्नयोरिञ्च[८] । कां त्वं कारिं कारिकां क्रियां

१. इति योगो विभज्यते । कृञः क्यबित्यर्थः । २. शो यक् च निपात्यते । ३. गुरुमतो हलन्तादित्यर्थः । ४. तितुत्रेति नेट् । ५. तथैव गणे पाठात् । ६. निर्देश इत्येव । ७. अकारलोपश्च । ८. चात् ण्वुल् ।

कृत्यां कृतिं वाकार्षीः ? सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाकार्षम्। गणिं गणिकां गणनाम्। पाचिं पाचिकां पचां पक्तिम्।

१११. पर्य्यायार्हर्णोत्पत्तिषु ण्वुच्[1]। भवत आसिका, शायिका, अग्रगामिका। भवानिक्षुभक्षिकामर्हति। इक्षुभक्षिकां मे धारयति। इक्षुभक्षिका उदपादि।

११२. आक्रोशे नञ्यनिः[2]। अजीवनिस्ते शठ भूयात्। अप्रयाणिः।

११३. कृत्यल्युटो बहुलम्। स्नान्त्यनेनेति, स्नानीयं चूर्णम्। दानीयो ब्राह्मणः। राज्ञा भुज्यन्ते, राजभोजनाः शालयः। पादाभ्यां ह्रियते[3], पादहारकः।

११४. नपुंसके भावे क्तः। हसितम्। जल्पितम्।

११५. ल्युट् च। हसनं छात्रस्य।

११६. कर्मणि[4] च येन संस्पर्शात्कर्त्तुः शरीरसुखम्। पयःपानं सुखम्। ओदनभोजनं सुखम्। नेह :- गुरोः स्नापनं सुखम्।

११७. करणाधिकरणयोश्च। इध्मप्रव्रश्चनः कुठारः। गोदोहनी स्थाली।

११८. पुंसि संज्ञायां घः प्रायेण। दन्ताश्छाद्यन्तेऽनेन, दन्तच्छदः[5]। प्रच्छदः। आकुर्वन्त्यस्मिन्, आकरः। आलयः।

११९. गोचरसंचरवहव्रजव्यजापणनिगमाश्च। हलश्चेत्यस्यापवादः। गावश्चरन्त्यस्मिन्, गोचरो देशः। संचरन्तेऽनेन, संचरो मार्गः। वहन्त्यनेन, वहः स्कन्धः। व्रजः। व्यजस्तालवृन्तम्[6]। आपणः पण्यस्थानम्। निगच्छन्त्यनेन निगमश्छन्दः। चकारोऽनुक्तसमुच्चयार्थः। कषः। निकषः।

१२०. अवे तॄस्त्रोर्घञ्। अवतारः कूपादेः। अवस्तारो जवनिका।

१२१. हलश्च। घापवादः। रमन्ते योगिनोऽस्मिन्निति, रामः। अपमृज्यते व्याधिरनेन, अपामार्गः। विमार्गः समूहनी। वेदः। मार्गः।

१२२. अध्यायन्यायोद्यावसंहाराश्च। अध्यायः। न्यायः। उद्यावः। संहारः। * अवहाराधारावायानामुपसंख्यानम् * अवहारः। आधारः। आवायः।

---

१. पर्यायः परिपाटी, क्रमः। अर्हः, अर्हणं योग्यता। ऋणम्। उत्पत्तिश्च। २. आक्रोशः शपनम्। ३. बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम्। ४. पूर्वेण सिद्धे नित्यसमासार्थं वचनम्। ५. छादेरिति ह्रस्वः। ६. निपातनाद्वीभावो न।

१२३. उदङ्कोऽनुदके । घृतमुदच्यतेऽस्मिन्निति, घृतोदङ्कश्चर्ममयं भाण्डम् । उदके तु उदकोदञ्चनः ।

१२४. जालमानायः । आनीयन्ते मत्स्यादयोऽस्मिन्निति, आनायो जालम् ।

१२५. खनो घ च । चाड्डञ् । आखनः । आखानः । घित्करणमन्यतोऽपि ज्ञापनार्थम् । तेन भगः, पदमित्यादि । * खनेर्डडरेकेकवका वाच्याः * आखः, आखरः, आखनिकः, आखनिकवकः ।

१२६. ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्[१] । दुष्करः कटो भवता । ईषत्करः । सुकरः । ईषन्निमयः ।

१२७. कर्तृकर्मणोश्च भूकृञोः । * यथासंख्यं नेष्यते * * कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् * अनाढ्येन आढ्येन दुःखेन भूयते, दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । स्वाढ्यङ्करः । दुराढ्यङ्करः ।

१२८. आतो युच् । खलोऽपवादः । दुष्पानः । ईषत्पानः सोमो भवता । सुपानः ।

१२९. छन्दसि गत्यर्थेभ्यः । सूपसदनोऽग्निः ।

१३०. अन्येभ्योऽपि दृश्यते । सुवेदनामकृणोर्ब्रह्मणे गाम् । * भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः * दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः ।

१३१. वर्त्तमानसामीप्ये[३] वर्त्तमानवद्वा । कदागतोऽसि ? अयमागच्छाम्यागमं वा । कदा गमिष्यसि ? एष गच्छामि गमिष्यामि वा ।

१३२. आशंसायां भूतवच्च[४] । देवश्चेदवर्षीत्, वर्षति, वर्षिष्यति वा, धान्यमवाप्स्म[५], वपामो वप्स्यामो वा ।

१३३. क्षिप्रवचने लृट् । वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा यास्यति, शीघ्रं वप्स्यामः ।

१३४. आशंसावचने लिङ् । भूतवच्चेत्यस्यापवादः । गुरुश्चेदुपेयादाशंसेऽधीयीय । आशंसे क्षिप्रमधीयीय ।

---

१. करणाधिकरणयोरिति निवृत्तम् । २. निमिमीलियां खल्चोरात्वं नेत्यात्वनिषेधः । ३. समीपमेव सामीप्यम् । ४. वर्त्तमानसामीप्य इति नानुवर्त्तते । भविष्यति काल इत्यर्थाद्गम्यते । ५. सामान्यातिदेशे विशेषानतिदेश इति लङ्लिटौ न ।

१३५. नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः[1]। यावज्जीवमन्नमदात्, दास्यति वा। येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित, सोमेनायष्ट। येयममावास्यागामिनी तस्यामग्नीनाधास्यते, सोमेन यक्ष्यते।

१३६. भविष्यति मर्य्यादावचनेऽवरस्मिन्। योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून् पास्यामः।

१३७. कालविभागे चानहोरात्राणाम्[2]। योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे। अहोरात्रप्रविभागे तु, योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे।

१३८. परस्मिन्विभाषा[3]। योऽयं वत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे, अध्येतास्महे।

१३९. लिङ्निमित्ते[4] लृङ् क्रियातिपत्तौ। सुवृष्टिश्चेदभविष्यत्, सुभिक्षमभविष्यत्। अभोक्ष्यत भवान् घृतेन, यदि मत्समीपमागमिष्यत्।

१४०. भूते च[5]। सुवृष्टिश्चेदभविष्यत्, सुभिक्षमभविष्यत्।

१४१. वोताप्योः[6]। अधिकारोऽयम्।

१४२. गर्हायां लडपिजात्वोः। अपि जायां त्यजसि, जातु[7] गणिकामाधत्से गर्हितमेतत्।

१४३. विभाषा कथमि लिङ् च। कथं धर्मं त्यजेस्त्यजसि वा? पक्षे कालत्रये लकाराः। कथन्नाम भवान् धर्ममत्यक्ष्यत्[8], अत्याक्षीद्वा?

१४४. किंवृत्ते लिङ्लृटौ[9]। सर्वलकारापवादः। कः, कतरः, कतमो वा हरिं निन्देन्निन्दिष्यति वा? लृङ् प्राग्वत्।

---

१. प्रबन्धः सातत्येनानुष्ठानम्। सामीप्यं तुल्यजातीयेनाव्यवधानम्। २. पूर्वसूत्रं सर्वमनुवर्तते। अहोरात्रसम्बन्धिनि प्रविभागे प्रतिषेधार्थं सूत्रम्। योगविभागस्तूत्तरार्थः। ३. अवरस्मिन्वर्जं पूर्वसूत्रद्वयमनुवर्त्तते। ४. हेतुहेतुमतोर्लिङित्येवमादिकं लिङ्निमित्तम्। ५. पूर्वसूत्रं सर्वमनुवर्त्तते। ६. वा आ उताप्योरितिच्छेदः। लिङ्निमित्ते लृङ् वेत्यधिक्रियते उताप्योः समर्थयोर्लिङित्यतः प्राक्। ७. लिङ्निमित्ताभावादिह लृङ् न। लुङादीनयं परत्वाद् बाधते। ८. इह भविष्यति नित्यं लृङ्। भूते वा। ९. गर्हायामित्येव। विभाषा तु नानुवर्त्तते।

१४५. अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि[१] । न संभावयामि, मर्षये वा, भवान् हरिं निन्देन्निन्दिष्यति वा । लृङ् प्राग्वत् ।

१४६. किङ्किलास्त्यर्थेषु लृट्[२] । लिङोऽपवादः । न श्रद्दधे, न मर्षये वा, किङ्किल त्वं शूद्रान्नम्भोक्ष्यसे । अस्ति, भवति, विद्यते वा, शूद्रीं गमिष्यसि । अत्र लृङ्[३] न ।

१४७. जातुयदोर्लिङ् । लृटोऽपवादः । * यदायद्योरुपसंख्यानम् * जातु यद्यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि, न मर्षयामि । लृङ् प्राग्वत् ।

१४८. यच्चयत्रयोः । यच्च, यत्र वा त्वमेवं कुर्य्याः, न श्रद्दधे, न मर्षयामि ।

१४९. गर्हायाञ्च[४] । यच्च यत्र वा त्वं शूद्रं याजयेः, अन्याय्यं तत् ।

१५०. चित्रीकरणे च । यच्च, यत्र वा त्वं शूद्रं याजयेः, आश्चर्यमेतत् ।

१५१. शेषे[५] लृडयदौ । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति। यदौ तु, आश्चर्यं यदि सोऽधीयीत ।

१५२. उताप्योः समर्थयोर्लिङ्[६] । उत, अपि वा हन्यादघं हरिः ।

१५३. कामप्रवेदनेऽकच्चिति[७] । कामो मे भुञ्जीत भवान् । कच्चिति तु, कच्चिज्जीवति ते माता ?

१५४. संभावनेऽलमिति[८] चेत्सिद्धाप्रयोगे । अपि गिरिं शिरसा भिन्द्यात् । सिद्धप्रयोगेऽलमि तु, अलं कृष्णो हस्तिनं हनिष्यति ।

१५५. विभाषा धातौ सम्भावनवचनेऽयदि । सम्भावयामि भुञ्जीत, भोक्ष्यते वा भवान् । यदि तु, सम्भावयामि यद् भुञ्जीथास्त्वम् ।

१५६. हेतुहेतुमतोर्लिङ् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह :– हन्तीति पलायते ।

---

१. गर्हायामिति निवृत्तम् । अनवक्लृप्तिरसंभावना । अमर्षोऽक्षमा । २. अनवक्लृप्त्यमर्षयोरिति गर्हायाञ्चेति यावदनुवर्तते । किङ्किलेति समुदायः क्रोधद्योतकः । अस्त्यर्था अस्तिभवतिविद्यतयः । ३. लिङो निमित्तत्वाभावादित्यर्थः । ४. अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । ५. यच्चयत्राभ्यामन्यत्र चित्रीकरणं शेषः । ६. समोऽर्थो ययोस्तयोरित्यर्थः । शकन्ध्वादित्वात्पररूपम् । बाढमित्यस्मिन्नर्थेऽनयोस्तुल्यार्थता । इतः प्रभृति भूतेऽपि लिङ्निमित्ते क्रियातिपत्तौ नित्यं लृङ् । ७. कामप्रवेदनं स्वाभिप्रायाविष्करणम् । ८. अलमर्थोऽत्र प्रौढिः ।

१५७. **इच्छार्थेषु लिङ्लोटौ ।** इच्छामि भुञ्जीत, भुङ्क्तां वा भवान्। कामये, प्रार्थये वा, भुञ्जीत, भुङ्क्तां वा । * कामप्रवेदन इति वक्तव्यम् * नेह :- इच्छन्करोति ।

१५८. **समानकर्तृकेषु तुमुन् ।** इच्छति भोक्तुम् , वष्टि, वाञ्छति वा ।

१५९. **लिङ् च ।** भुञ्जीयेतीच्छति ।

१६०. **इच्छार्थेभ्यो विभाषा वर्त्तमाने ।** इच्छेत् , इच्छति । कामयेत, कामयते ।

१६१. **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्[1] ।** यजेत । इह भुञ्जीत भवान् । इहासीत । पुत्रमध्यापयेद्भवान् । किं भो वेदमधीयीय उत तर्कम् ? भोजनं लभेय ।

१६२. **लोट् च ।** कटं भवान् करोतु । तत्र भवान् भुङ्क्ताम् । इहास्ताम् । माणवकं भवानध्यापयतु । किन्नु खलु भो व्याकरणमध्ययै ? व्याकरणं पठानि ।

१६३. **प्रैषातिसर्गप्राप्तकालेषु[2] कृत्याश्च ।** चाल्लोट् । त्वया कटः कर्त्तव्यः, करणीयः, कृत्यः, कार्यो वा । त्वं कटं कुरु । भवता यष्टव्यम् । भवान् यजताम् ।

१६४. **लिङ् चोर्ध्वमौहूर्त्तिके[3] ।** मुहूर्त्तादूर्ध्वं यजेत यजतां यष्टव्यं वा ।

१६५ **स्मे लोट् ।** ऊर्ध्वं मुहूर्त्ताद् यजतां स्म ।

१६६. **अधीष्टे च ।** त्वं स्म अध्यापय ।

१६७. **कालसमयवेलासु तुमुन् ।** कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमनुवर्त्तते । नेह :- भूतानि कालः पचतीति वार्त्ता ।

१६८. **लिङ् यदि ।** कालः समयो वेला वा यद् भुञ्जीत भवान् ।

१६९. **अर्हे कृत्यतृचश्च ।** चाल्लिङ् । भवता कन्या वोढव्या, वहनीया, वाह्या । त्वं कन्यां वोढा, कन्यां वहेः ।

१७०. **आवश्यकाधमर्ण्ययोर्णिनिः[4] ।** अवश्यङ्कारी[5] । शतं दायी ।

---

१. विधिः प्रेरणं भृत्यादेर्निकृष्टस्य । निमन्त्रणं नियोगकरणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । प्रवर्त्तनायां लिङ् इत्येव सुवचम् । २. प्रैषः प्रेषणम् । अतिसर्गः कामचारानुज्ञा । ३. प्रैषादयोऽनुवर्त्तन्ते । ४. अनयोरर्थयोर्नोपपदयोः । ५. मयूरव्यंसकादित्वात्समासः ।

१७१. कृत्याश्च। अवश्यं हरिः सेव्यः। शतं देयम्।

१७२. शक्ति लिङ् च[1]। त्वं भारं वहेः। त्वया भारो वोढव्यः, वहनीयः, वाह्यः।

१७३. आशिषि लिङ्लोटौ। भूयात, भवतात्। चिरं जीव्यात, जीवताद्वा।

१७४. क्तिच्क्तौ च संज्ञायाम्। भवतात्, भूतिः। यन्तिः। रन्तिः। तन्तिः। देवा एनं देयासुर्देवदत्तः।

१७५. माङि लुङ्। मा भवान् भूत्[2]। मा कार्षीत्।

१७६. स्मोत्तरे लङ् च[3]। मा स्म भवद् भूद्वा। मा स्म करोत् कार्षीद्वा।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
तृतीयाध्यायस्य तृतीयपादः समाप्तः।



१. चात्कृत्याश्च। २. मा भवतु मा भविष्यतीति तु अङ्न्माशब्दयोगे। ३. चाल्लुङ्।

# अथ तृतीयाध्यायस्य चतुर्थपादः ।



१. धातुसम्बन्धे प्रत्ययाः[1] । वसन् ददर्श[2] । सोमयाज्यस्य पुत्रो भविता[3] । कृतः कटः श्वो भविता । भावि कृत्यमासीत् । गोमानासीद्भविता वा ।

२. क्रियासमभिहारे[4] लोट् लोटो हिस्वौ वा च तध्वमोः । याहियाहीति[5] याति, यातः, यान्तीत्यादि । ययौ, यास्यति, अयासीत्-इत्यादि । लुनीहिलुनीहीति लुनाति, लुनीतः, लुनन्तीत्यादि । लुलाव, लविता, अलावीदित्यादि । याहियाहीति, यातयातेति वा यूयं याथ । लुनीहिलुनीहीति, लुनीतलुनीतेति वा यूयं लुनीथ । अधीष्वाधीष्वेत्यधीते, अधीयाते, अधीयत इत्यादि । अधीष्वाधीष्वेति, अधीध्वमधीध्वमिति वा यूयमधीध्वे-इत्यादि ।

३. समुच्चये[6]ऽन्यतरस्याम् । सक्तून् पिब, धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व, दाधिकमास्वादयस्वेत्यभ्यवहरते । तध्वमोर्विषये तु, पिबत खादतेति वाभ्यवहरथ । भुङ्ध्वमास्वादयध्वमिति वाभ्यवहरध्वे । पक्षे सक्तून् पिबति । धानाः खादति–इत्यादि ।

४. यथाविध्यनुप्रयोगः पूर्वस्मिन्[7] । प्रोक्तान्युदाहरणानि ।

५. समुच्चये सामान्यवचनस्य । प्रोक्तान्युदाहरणानि ।

६. छन्दसि लुङ्लङ्लिटः[8] । पक्षे यथास्वं प्रत्ययाः । देवो देवेभिरागमत्[9] । इदं तेभ्योऽकरं नमः । अग्निमद्य होतारमवृणीता[10]यं यजमानः । अद्य ममार[11] ।

---

१. धात्वर्थानां सम्बन्धे यत्रोक्तास्ततोऽन्यत्रापि काले प्रत्यया भवन्तीत्यर्थः । २. अतीतवासकर्तृकर्तृकं दर्शनमर्थः । वासदर्शनरूपधात्वर्थयोरेककर्तृत्वं विशेष्यविशेषणभावश्चेह सम्बन्धौ । ३. सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनमर्थः । इह यजनभवनयोः सम्बन्धौ । ४. पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । ५. पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एककर्तृकं वर्त्तमानं यानं यातीत्यस्य । इतिशब्दस्त्वनयोरभेदान्वये तात्पर्यं ग्राहयति । एवमन्यत्र । ६. अनेकक्रियासमुच्चय इत्यर्थः । ७. पूर्वस्मिन् लोड्विधाने क्रियासमभिहार इति विहित इत्यर्थः । ८. धातुसम्बन्ध इत्येव । ९. लोडर्थे लुङ् । १०. इह लङ् । ११. म्रियत इत्यर्थः ।

७. लिङर्थे लेट्। जोषिषत्। तारिषत्। मन्दिषत्। पताति विद्युत्।

८. उपसंवादाशङ्कयोश्च। अहमेव पशूनामीशै। नेज्जिह्मायन्तो नरकं पताम।

९. तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः। वक्षे[1] रायः। ता वामेषे[2]। शरदो जीवसे[3] धाः। प्रेषे[4]। गवामिव श्रियसे[5]। जठरं पृणध्यै[6]। आहुवध्यै[7]। राधसः सह मादयध्यै[8]। वायवे पिबध्यै[9]। दातवा[10] उ। सूतवे[11]। कर्त्तवे[12]।

१०. प्रयै रोहिष्यै अव्यथिष्यै। प्रयै[13]। रोहिष्यै[14]। अव्यथिष्यै[15]।

११. दृशे विख्ये च। दृशे[16]। विख्ये[17]।

१२. शकि णमुल्कमुलौ। विभाजं[18] नाशकत्। अपलुपं[19] नाशकत्।

१३. ईश्वरे तोसुन्कसुनौ। ईश्वरो विचरितोः विलिखो वा[20]।

१४. कृत्यार्थे तवैकेन्केन्यत्वनः। न म्लेच्छितवै[21]। अवगाहे। दिदृक्षेण्यः। भूर्यस्पष्ट कर्त्वम्।

१५. अवचक्षे च। रिपुणा नावचक्षे[22]।

१६. भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्। आसंस्थातोः[23] सीदन्ति। उदेतोः। अपकर्त्तोः। प्रवदितोः। प्रचरितोः। आतमितोः। काममाविजनितोः।

१७. सृपितृदोः कसुन्। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जतृभ्य आतृदः।

१८. अलंखल्वोः प्रतिषेधयोः प्राचां[24] क्त्वा। अलं दत्त्वा। पीत्वा खलु।

१९. उदीचां माङो व्यतीहारे[25]। अपमित्य याचते। याचित्वा अपमयते।

---

१. इह सेप्रत्ययः। २. सेन्। ३. असे। असेन्-इत्याद्युदात्तः। ४. क्से। ५. कसेन्। ६. अध्यै, अध्यैन्। पक्षे आद्युदात्तम्। ७. कध्यै, कध्यैन्। ८. शध्यै। ९. शध्यैन्। १०. तवै। ११. तवेङ्। १२. तवेन्। १३. प्रयातुमित्यर्थः। १४. रोढुमित्यर्थः। १५. अव्यथितुम्। १६. द्रष्टुम्। १७. विख्यातुमित्यर्थः। १८. विभक्तुम्। १९. अपलोप्तुम्। २०. विचरितुं विलिखितुमित्यर्थः। २१. म्लेच्छितव्यम्। २२. अवख्यातव्यम्। २३. आ समाप्तेः। २४. प्राचां ग्रहणं पूजार्थम्। २५. अपूर्वकालार्थमिदम्।

२०. परावरयोगे च । अप्राप्य[1] नदीं पर्वतः । अतिक्रम्य पर्वतं स्थिता नदी[2] ।

२१. समानकर्तृकयोः पूर्वकाले[3] । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा, भुक्त्वा, पीत्वा व्रजति । विष्णुं नत्वा स्तौति । मुखं व्यादाय स्वपिति[4]। नेत्रे निमील्य हसति ।

२२. आभीक्ष्ण्ये णमुल् च । स्मारं स्मारं स्मृत्वा स्मृत्वा वा नमति शिवम् । पायं पायम् । भोजं भोजम् । श्रावं श्रावम् । गामं गामम्, गमं गमम् । लम्भं लम्भम्, लाभं लाभम् । जागरं जागरम् ।

२३. न यद्यनाकाङ्क्षे । यदयं भुङ्क्ते, ततः पठति । साकाङ्क्षे तु, यदयं भुक्त्वा व्रजति ततोऽधीते ।

२४. विभाषाग्रेप्रथमपूर्वेषु । अग्रेभोजम् , अग्रे भुक्त्वा । प्रथमं भोजम् , प्रथमं भुक्त्वा । पूर्वं भोजं पूर्वं भुक्त्वा । पक्षे लडादयः । अग्रे भुङ्क्ते ततो व्रजति । आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव । अग्रे भोजं भोजं भुक्त्वा भुक्त्वा व्रजति ।

२५. कर्मण्याक्रोशे कृञः खमुञ् । चौरङ्कारमाक्रोशति[5] ।

२६. स्वादुमि[6] णमुल् । स्वादुङ्कारं, संपन्नङ्कारं, लवणङ्कारं वा भुङ्क्ते । वा सरूपेण क्त्वापि । स्वादुं कृत्वा भुङ्क्ते ।

२७. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् । अन्यथाकारं भुङ्क्ते । एवङ्कारं कथङ्कारमित्थङ्कारम्भुङ्क्ते[7] ।

२८. यथातथयोरसूयाप्रतिवचने[8] । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन ?

२९. कर्मणि दृशिविदोः साकल्ये । कन्यादर्शं[9] वरयति। ब्राह्मणवेदं[10] भोजयति ।

३०. यावति विन्दजीवोः । यावद्वेदं[11] भुङ्क्ते । यावज्जीवमधीते विप्रः ।

---

१. परनदीयोगोऽत्र पर्वतस्य । २. अवरपर्वतयोगोऽत्र नद्याः । ३. क्त्वा तु अव्ययकृतो भावे । ४. इत्यादौ व्यादानसम्मीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया । ५. चौरशब्दमुच्चार्येत्यर्थः । ६. अर्थग्रहणं व्याख्यानात् । मान्तत्वञ्च निपात्यते । ७. अन्यथा एवं कथमित्थं वा भुङ्क्त इत्यर्थः । ८. कृञः सिद्धाप्रयोग इत्येव । ९. सर्वाः कन्या इत्यर्थः । १०. यं यं ब्राह्मणं जानाति, लभते, विचारयति वा, तं सर्वमित्यर्थः । ११. यावल्लभते तावदित्यर्थः ।

३१. चर्मोदरयोः पूरेः । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ।

३२. वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् । गोष्पदप्रं गोष्पदपूरं वा वृष्टो देवः । मूषिकाबिलप्रं मूषिकाबिलपूरं वा ।

३३. चेले क्नोपेः[1] । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् ।

३४. निमूलसमूलयोः कषः । निमूलकाषं समूलकाषं[2] वा कषति ।

३५. शुष्कचूर्णरूक्षेषु पिषः । शुष्कपेषं[3] पिनष्टि । चूर्णपेषम् । रूक्षपेषम् ।

३६. समूलाकृतजीवेषु हन्कृञ्ग्रहः । समूलघातं हन्ति[4] । अकृतकारं करोति । जीवग्राहं गृह्णाति ।

३७. करणे हनः । पादघातं[5] हन्ति । असिघातम् । शरघातम् ।

३८. स्नेहने पिषः । उदपेषं पिनष्टि । तैलपेषम् ।

३९. हस्ते वर्त्तिग्रहोः । हस्तवर्त्तं करवर्त्तं वा वर्त्तयति । हस्तग्राहं करग्राहं पाणिग्राहं वा गृह्णाति ।

४०. स्वे[6] पुषः । स्वपोषं धनपोषं गोपोषं वा पुष्णाति ।

४१. अधिकरणे बन्धः । चक्रबन्धं[7] बध्नाति ।

४२. संज्ञायाम् । मयूरिकाबन्धमट्टालिकाबन्धं[8] वा बध्नाति ।

४३. कर्त्रोर्जीवपुरुषयोर्नशिवहोः । जीवनाशं नश्यति[9] । पुरुषवाहं वहति[10] ।

४४. ऊर्ध्वे शुषिपूरोः । ऊर्ध्वशोषं शुष्यति[11] । ऊर्ध्वपूरं पूर्यते[12] ।

४५. उपमाने कर्मणि च । घृतनिधायं निहितं[13] जलम् । अजकनाशं नष्टः[14] ।

४६. कषादिषु[15] यथाविध्यनुप्रयोगः पूर्वस्मिन् । तथैवोदाहृतानि ।

---

१. क्नूयी शब्दे उन्दे चेत्यतो ण्यन्तादित्यर्थः । २. निमूलं समूलं वेत्यर्थः । ३. शुष्कं पिनष्टीत्यर्थः । ४. समूलं हन्तीत्यर्थः । ५ पादेन हन्तीत्यर्थः । ६. स्वशब्देन स्वरूपस्य पर्यायस्य विशेषस्य च ग्रहणम् । ७. चक्रे बध्नाति । ८. बन्धविशेषाणामेताः संज्ञाः । ९. जीवो नश्यतीत्यर्थः । १०. पुरुषो वहतीत्यर्थः । ११. ऊर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । १२. ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः । १३. घृतमिव सुरक्षितमित्यर्थः । १४. अजक इव नष्ट इत्यर्थः । १५. निमूलसमूलयोः कष इत्यादिषु ।

४७. उपदंशस्तृतीयायाम्[1]। मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशम्।

४८. हिंसार्थानां च समानकर्मकाणाम्। दण्डोपघातं गाः कालयति। दण्डेनोपघातम्। दण्डताडम्। दण्डेन ताडम्। विभिन्नकर्मत्वे तु, दण्डेन चौरमाहत्य गाः कालयति।

४९. सप्तम्यां चोपपीडरुधकर्षः। पार्श्वोपपीडं शेते। पार्श्वाभ्यां पार्श्वयोर्वा उपपीडम्। व्रजोपरोधं गाः स्थापयति। व्रजेन, व्रजे वोपरोधम्। पाण्युपकर्षं धानाः संगृह्णाति। पाणिना, पाणौ वोपकर्षम्।

५०. समासत्तौ[2]। केशग्राहं युध्यन्ते। केशेषु, केशैर्वा ग्राहम्। हस्तग्राहं हस्तेषु, हस्तैर्वा ग्राहं युध्यन्ते।

५१. प्रमाणे च। द्व्यङ्गुलोत्कर्षं द्व्यङ्गुलेन, द्व्यङ्गुले वोत्कर्षं खण्डिकां छिनत्ति।

५२. अपादाने परीप्सायाम्[3]। शय्योत्थायं शय्याया उत्थायं वा धावति।

५३. द्वितीयायां च[4]। यष्टिग्राहं, यष्टिं ग्राहं वा युध्यन्ते। लोष्टग्राहम्, लोष्टं ग्राहम्। अस्यपगारमस्यपगोरम्[5]। असिमपगारम्, असिमपगोरम्।

५४. स्वाङ्गेऽध्रुवे[6]। भ्रूविक्षेपं भ्रुवं विक्षेपं वा कथयति।

५५. परिक्लिश्यमाने[7] च। उरःप्रतिपेषमुरः प्रतिपेषं वा युध्यन्ते। उरोविदारं प्रतिचस्करे नखैः।

५६. विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः[8]। गेहानुप्रवेशम्[9], गेहं गेहमनुप्रवेशम्, गेहमनुप्रवेशमनुप्रवेशं वास्ते। गेहानुप्रपातम्। गेहानुप्रपादम्। गेहानुस्कन्दम्।

---

१. दश्यमानस्य मूलकस्य भुजिक्रियां प्रति करणत्वात्तृतीया। उपदंशिना सम्बन्धस्त्वार्थः। तावतापि सामर्थ्येन प्रत्ययः समासश्च। तृतीयायामिति ज्ञापकात्। २. समासत्तिः सन्निकर्षः। ३. परीप्सा त्वरा। ४. परीप्सायामित्येव। ५. अपगुरो णमुलीत्यात्वं वा। ६. यस्मिन्नङ्गे छिन्नेऽपि प्राणी न म्रियते तदध्रुवम्। ७. परिक्लेशः सर्वतो बाधनम्। ८. गेहादिद्रव्याणां विश्यादिक्रियाभिः सह साकल्येन सम्बन्धो व्याप्तिः। आसेवनन्तु पौनःपुन्यम्। ९. इह वीप्सायां द्वित्वं तु न समासेनैव तस्या उक्तत्वात्।

५७. अस्यतितृषोः क्रियान्तरे[1]षु कालेषु । द्व्यहात्यासं द्व्यहमत्यासं वा गाः पाययति । द्व्यहतर्षम्, द्व्यहं तर्षम् ।

५८. नाम्न्यादिशिग्रहोः । नामादेशमाचष्टे । नामग्राहमाह्वयति ।

५९. अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ । उच्चैःकृत्य, उच्चैः कृत्वा, उच्चैःकारमप्रियमाचष्टे । नीचैःकृत्य, नीचैःकृत्वा, नीचैःकारं वा प्रियं ब्रूते ।

६०. तिर्यच्यपवर्गे । तिर्यक्कृत्य, तिर्यक्कृत्वा, तिर्यक्कारं वा गतः ।

६१. स्वाङ्गे तस्प्रत्यये कृभ्वोः । मुखतःकृत्य, मुखतः कृत्वा, मुखतः-कारं वा गतः । मुखतोभूय, मुखतो भूत्वा, मुखतोभावम् ।

६२. नाधार्थप्रत्यये च्व्यर्थे । अनाना नाना कृत्वा, नानाकृत्य, नाना कृत्वा, नानाकारम् । विनाकृत्य, विनाकृत्वा, विनाकारम् । नानाभूय, नाना भूत्वा, नानाभावम् । अनेकमेकं भूत्वा, एकधाभूय, एकधा भूत्वा, एकधाभावम् । एकधाकृत्य, एकधा कृत्वा, एकधाकारम् ।

६३. तूष्णीमि भुवः[2] । तूष्णीम्भूय, तूष्णीम्भूत्वा, तूष्णीम्भावम् ।

६४. अन्वच्यानुलोम्ये । अन्वग्भूय, अन्वग्भूत्वा, अन्वग्भावम् ।

६५. शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । शक्नोति, जानाति, ग्लायति, घटते, आरभते, लभते, प्रक्रमते, सहते, अर्हति वा भोक्तुम् ।

६६. पर्य्याप्तिवचनेष्वलमर्थेषु । पर्य्याप्तोऽलं वा भोक्तुम् । भोक्तुं पारयति ।

६७. कर्त्तरि कृत्[3] । कारकः, कर्त्ता । नन्दनः । ग्राही । पचः ।

६८. भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । भवतीति, भव्यः । भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा । प्रवचनीयो गुरुः स्वाध्यायस्य । प्रवचनीयो गुरुणा स्वाध्यायो वा । उपस्थानीयोऽन्तेवासी गुरोः । उपस्थानीयः शिष्येण वा गुरुः । जायतेऽसौ, जन्यः । जन्यमनेन वा । आप्लवतेऽसावाप्लाव्यः । आप्लाव्यमनेन वा । आपतत्यसावापात्यः । आपात्यमनेन वा ।

---

१. क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः । २. भूग्रहणं कृञो निवृत्त्यर्थम् । ३. यत्रार्थादेशो नास्ति तत्रायमुपतिष्ठते । अर्थाकाङ्क्षित्वात् ।

६९. लः कर्मणि च[1] भावे चाकर्मकेभ्यः । लः कर्मणि च । आनन्दोऽनुभूयते चैत्रेण, त्वया, मया च । आनन्दमनुभवति चैत्रः । आनन्दमनुभवसि त्वम् । अनुभवाम्यहम् । भावे[2] चाकर्मकेभ्यः । त्वया मयान्यैश्च भूयते । त्वं भवसि । अहं भवामि । स भवति ।

७०. तयोरेव कृत्यक्तखलर्थाः । एधितव्यम्, एधनीयम्, त्वया मयान्यैश्च । चेतव्यश्चनीयो वा धर्मस्त्वया, मया, चैत्रेण च । स्नातं त्वया, मया, चैत्रेण च । स्तुतस्त्वया मयान्यैश्च विष्णुः । ईषत्करः, सुकरः, दुष्करो वा कटस्त्वया मयान्यैश्च । ईषदाढ्यम्भवम्, स्वाढ्यम्भवं भवता ।

७१. आदिकर्मणि क्तः कर्त्तरि च[4] । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । प्रकृतः कटं देवदत्तः । प्रकृतः कटस्तेन । प्रभुक्त ओदनं देवदत्तः । प्रभुक्त ओदनस्तेन ।

७२. गत्यर्थाकर्मकश्लिष[5]शीङ्स्थासवसजनरुहजीर्यतिभ्यश्च । गङ्गां गतः, गङ्गाम्प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे यथाप्राप्तम् ।

७३. दाशगोघ्नौ सम्प्रदाने । दाशन्त्यस्मै दाशः[6] । गां हन्त्यस्मै गोघ्नो[7]ऽतिथिः ।

७४. भीमादयोऽपादाने । भीमः, भीष्मः, भयानकः । प्रस्कन्दनः । प्ररक्षः । मूर्खः । खलतिः ।

७५. ताभ्यामन्यत्रोणादयः । ततोऽसौ भवति, तन्तुः । वृत्तं तदिति, वर्त्म । चरितं तदिति, चर्म ।

७६. क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । मुकुन्दस्यासितमिदमिदं यातं रमापतेः । भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥

७७. लस्य[8] । अधिकारोऽयम् ।

---

१. अत्र योगद्वयम् । २. सकर्मकेभ्यो धातुभ्य इत्यर्थाद्बोध्यम् । चात्कर्त्तरि । ३. चादिहापि कर्त्तरीत्यनुकृष्यते । ४. चाद्यथाप्राप्तम् । ५. श्लिषादयः सर्वे सोपसर्गाः सकर्मका भवन्तीति पुनरेषामुपादानम् । ६. दाशृ दाने पचाद्यच् । ७. टगत्र निपात्यते । ८. लस्येति सामान्यग्रहणं लट्-लिट्-लुट्-लृट्-लेट्-लोट्-लङ्-लिङ्-लुङ्-लृङां ग्रहणार्थम् ।

७८. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् । भवति, भवतः, भवन्ति । भवसि, भवथः,[१] भवथ । भवामि, भवावः, भवामः । एधते, एधेते, एधन्ते । एधसे, एधेथे, एधध्वे । एधे, एधावहे, एधामहे । एवमन्येषु लकारेषूह्यम् ।

७९. टित आत्मनेपदानां टेरे । एधते-इत्यादि पूर्वमुदाहृतम् ।

८०. थासः से । एधसे । पचसे । पेचिषे । पक्तासे । पक्ष्यसे । एधांचकृषे । इत्यादि ।

८१. लिटस्तझयोरेशिरेच् । पेचे, पेचिरे । लेभे, लेभिरे । एधांचक्रे, एधांचक्रिरे ।

८२. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । बभूव, बभूवतुः, बभूवुः । बभूविथ, बभूवथुः, बभूव । बभूव, बभूविव, बभूविम ।

८३. विदो लटो वा । वेद, विदतुः, विदुः । वेत्थ, विदथुः, विद । वेद, विद्व, विद्म । पक्षे, वेत्ति, वित्तः, विदन्ति । वेत्सि, वित्थः, वित्थ । वेद्मि, विद्वः, विद्मः ।

८४. ब्रुवः पञ्चानामादित आहो ब्रुवः । आह, आहतुः, आहुः । आत्थ, आहथुः । पक्षे, ब्रवीति, ब्रूतः, ब्रुवन्ति । ब्रवीषि, ब्रूथः ।

८५. लोटो लङ्वत्[२] । भवताम्, भवतम् , भवत, भवाव, भवाम ।

८६. एरुः[३] । भवतु । भवन्तु ।

८७. सेर्ह्यपिच्च । लुनीहि । पुनीहि ।

८८. वा छन्दसि[४] । प्रीणीहि । प्रीणाहि ।

८९. मेर्निः । उत्वलोपयोरपवादः । भवानि । पचानि ।

९०. आमेतः । एधताम् , एधेताम् , एधन्ताम् । पचताम् , पचेताम् , पचन्ताम् ।

---

१. तिबादिभिरात्मनेपदानि विशेष्यन्ते तेनेह न, पचमानः । यजमानः । २. तेन तामादयः सलोपश्च । अडाटौ तु न, लङस्तुल्यं लङ्वदिति षष्ठ्यन्ताद्वतेरङ्गीकारात् । विदो लटो वेत्यतो वा-पदमनुवर्त्य व्यवस्थितविभाषाश्रयणाद्वा । ३. हिन्योरुत्वन्तूच्चारणसामर्थ्यान्न । देहि, भवानि । ४. अपित्त्वं विकल्प्यते ।

९१. सवाभ्यां वामौ। आमोऽपवादः। एधस्व, एधध्वम्। पचस्व, पचध्वम्।

९२. आडुत्तमस्य पिच्च। भवानि, भवाव, भवाम। एधै, एधावहै, एधामहै। करवाणि, करवाव, करवाम। करवै, करवावहै, करवामहै।

९३. एत ऐ। एधै, एधावहै, एधामहै।

९४. लेटोऽडाटौ। जोषिषत्। तारिषत्। मन्दिषत्। पताति।

९५. आत ऐ। मादयैते। मन्त्रयैते। करवैते।

९६. वैतोऽन्यत्र[1]। पशूनामीशै। ग्रहा गृह्यान्तै।

९७. इतश्च लोपः परस्मैपदेषु। जोषिषत्। पताति।

९८. स उत्तमस्य। करवाव। करवावः।

९९. नित्यं ङितः। अभवाव, अभवाम। भवेव, भवेम। अभूव, अभूम।

१००. इतश्च। अभवत्। भवेत्। भूयात्। अभूत्। अभविष्यत्।

१०१. तस्थस्थमिपां तान्तन्तामः। अभवताम्, अभवतम्, अभवत, अभवम्। अपाक्ताम्, अपाक्तम्, अपाक्त, अपाक्षम्।

१०२. लिङः सीयुट्। एधेत, एधेयाताम्, एधेरन्। एधिषीष्ट, एधिषीयास्ताम्, एधिषीरन्।

१०३. यासुट् परस्मैपदेषूदात्तो ङिच्च[2]। भवेत्, भूयात्। कुर्यात्, क्रियात्।

१०४. किदाशिषि[3]। भूयात्। स्तुयात्। इज्यात्। जागर्यात्।

१०५. झस्य रन्। झोऽन्तापवादः। एधेरन्। एधिषीरन्। कृषीरन्।

१०६. इटोऽत्। एधेय। पचेय, कृषीय।

१०७. सुट् तिथोः। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्।

१०८. झेर्जुस्। झोऽन्तापवादः। भवेयुः। कुर्य्युः।

---

१. आत ऐ इत्यस्य विषयं वर्जयित्वा। २. ङित्त्वन्तु लिङ एव। तत्कार्याणां तत्रैव सम्भवात्। स्थानिवद्भावादेव ङित्त्वे सिद्धे पुनस्तद्वचनं ज्ञापनार्थम्। लाश्रयमनुबन्धकार्यं नादेशानाम्। तेन अचिनवम्। अकरवम्। वक्ष्यमाणा। ३. कित्त्वङित्त्वयोर्गुणवृद्धिप्रतिषेधस्तुल्यः। सम्प्रसारणे जागर्त्तेर्गुणे च विशेषः कित्त्वस्य।

१०६. **सिजभ्यस्तविदिभ्यश्च** । अकार्षुः, अहार्षुः । अबिभयुः, अजागरुः । अविदुः ।

११०. **आतः**[१] । अयुः । अदुः । अधुः ।

१११. **लङः शाकटायनस्यैव** । अयुः, अयान् । अवुः, अवान् ।

११२. **द्विषश्च** । अद्विषुः, अद्विषन् ।

११३. **तिङ्शित्सार्वधातुकम्** । भवति । नयति । स्वपिति । पचन् । पचमानः ।

११४. **आर्धधातुकं शेषः** । भविता, भवितुम् । लविता, लवितुम् ।

११५. **लिट् च** । बभूविथ । पेचिथ । जग्ले । मम्ले ।

११६. **लिङाशिषि** । एधिषीष्ट । लविषीष्ट ।

११७. **छन्दस्युभयथा** । वर्धन्तु[२] त्वा सुष्टुतयः । विश्रृण्विरे[३] ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
तृतीयाध्यायस्य चतुर्थः पादः समाप्तः ।



१. पूर्वेणैव सिद्धे नियमार्थं वचनम् । सिज्लुक्यादन्तादेव झेर्जुसिति । तेनेह न :– अभूवन् । २. आर्धधातुकत्वाण्णिलोपः । वर्धयन्तु-इत्यर्थः । ३. सार्वधातुकत्वात् श्नुः श्नभावश्च ।

# अथ चतुर्थाध्यायस्य प्रथमपादः ।



१. ङ्याप्प्रातिपदिकात् । अधिकारोऽयमापञ्चमाध्यायसमाप्तेः ।

२. स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् । कुमारी, कुमार्यौ, कुमार्यः । कुमारीम्, कुमार्यौ, कुमारीः । कुमार्या, कुमारीभ्याम्, कुमारीभिः । कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमार्योः, कुमारीणाम् । कुमार्याम्, कुमार्योः, कुमारीषु । एवं गौरी, शार्ङ्गरवी । रमा, रमे, रमाः । रमाम्, रमे, रमाः । रमया, रमाभ्याम्, रमाभिः । रमायै, रमाभ्याम्, रमाभ्यः । रमायाः, रमाभ्याम्, रमाभ्यः । रमायाः, रमयोः, रमाणाम् । रमायाम्, रमयोः, रमासु । एवं बहुराजा, कारीषगन्ध्या । दृषद्, दृषदौ, दृषदः । दृषदम्, दृषदौ, दृषदः । दृषदा, दृषद्भ्याम्, दृषद्भिः । दृषदे, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषदोः, दृषदाम् । दृषदि, दृषदोः, दृषत्सु । रामः, रामौ, रामाः–इत्यादि ।

३. स्त्रियाम् । अधिकारोऽयं समर्थानामिति यावत् ।

४. अजाद्यतष्टाप्[१] । अजा । एडका । अश्वा । चटका । मूषिका[२] । बाला । वत्सा । होडा । मन्दा । विलाता[३] । * संभस्त्राजिनशणपिण्डेभ्यः फलात् * संफला । भस्त्रफला[४] । अजिनफला । शणफला । पिण्डफला । * त्रिफला द्विगौ * त्रिफला । * सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् * पाककर्णेति ङीषोऽपवादः । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । * शूद्रा चामहत्पूर्वा जातिः * शूद्रा । पुंयोगे शूद्री । महत्पूर्वा तु महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि । कोकिला जातावपि । * मूलान्नञः * अमूला ।

५. ऋन्नेभ्यो ङीप् । कर्त्री । दण्डिनी । हस्तिनी ।

---

१. अजादीति लुप्तषष्ठ्यन्तम् । तस्य स्त्रियामन्वयः । अजादिवाच्ये स्त्रीत्व इत्यर्थः । तेन पञ्चानामजानां समाहारः, पञ्चाजीत्यादौ समासार्थसमाहारनिष्ठस्त्रीत्वे नेदम् । २. एषु जातिलक्षणो ङीष् प्राप्तः । ३. एषु वयसि प्रथम इति ङीप् प्राप्तः । ४. ङ्यापोरिति ह्रस्वः ।

६. **उगितश्च** । पचन्ती, भवन्ती । भवती । प्राची[1], प्रतीची, उदीची, अवाची ।

७. **वनो[2] र च** । इत्वरी, अतिइत्वरी[3] । धीवरी, अतिधीवरी । शर्वरी, पीवरी । * वनो न हस इति वक्तव्यम् * अवावा ब्राह्मणी । सहयुध्वा ।

८. **पादोऽन्यतरस्याम्** । द्विपात्, द्विपदी । त्रिपात्, त्रिपदी ।

९ **टाबृचि** । द्विपदा ऋक् । एकपदा ।

१०. **न षट्स्वस्रादिभ्यः** । पञ्च[4] । चतस्रः ।

११. **मनः** । दामा, दामानौ । सीमा, सीमानौ ।

१२. **अनो बहुव्रीहेः** । बहुयज्वा, बहुयज्वानौ ।

१३. **डाबुभाभ्यामन्यतरस्याम्** । सीमा । सीमे, सीमानौ । दामा । दामे, दामानौ । बहुयज्वा । बहुयज्वे, बहुयज्वानौ ।

१४. **अनुपसर्जनात्** । अधिकारोऽयं[5] यूनस्तिरिति यावत् ।

१५. **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** । टापोऽपवादः । कुरुचरी । अनुपसर्जनादित्येव । नेह :– बहुकुरुचरा । नदट्-नदी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी । * ताच्छीलिके णेऽपि * चौरी । * नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् * स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यङ्करणी । तरुणी । तलुनी ।

१६. **यञश्च** । गार्गी । वात्सी । * अनपत्याधिकारस्थान्न ङीप् * द्वैप्या । दैव्या ।

१७. **प्राचां ष्फ तद्धितः** । गार्ग्यायणी[6] । वात्स्यायनी । अन्येषां गार्गी । वात्सी ।

---

१. उगिदचामिति सूत्रेऽज्ग्रहणं धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमार्थम् । तेनेह न :–उखास्रत्, पर्णध्वत् ब्राह्मणीति । २. प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् । वन्निति ङ्वनिप्क्वनिप्वनिपां सामान्यग्रहणम् । ३. प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते । ४. नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वात्षट्संज्ञा । ५. अयमेव स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापयति । ६. आयनेति फस्यायनादेशः । प्रत्ययद्वयेनेह स्त्रीत्वप्रतीतिः ।

१८. सर्वत्र लोहितादिकतन्तेभ्यः। लौहित्यायनी। कात्यायनी।

१९. कौरव्यमाण्डूकाभ्यां च। टाप्ङीषोरपवादः। कौरव्यायणी। माण्डूकायनी। * आसुरेरुपसंख्यानम् * आसुरायणी।

२०. वयसि प्रथमे। कुमारी। * वयस्यचरम इति वाच्यम् * वधूटी। चिरण्टी[1]। कन्याया न। कन्यायाः कनीन चेति निर्देशात्। कन्या।

२१. द्विगोः। त्रिलोकी। पञ्चपूली।

२२. अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि[2]। पञ्चभिरश्वैः क्रीता, पञ्चाश्वा[3], दशाश्वा। द्विवर्षा[4]। द्विशता[5]। द्वौ बिस्तौ पचति, द्विबिस्ता। द्व्याचिता। द्विकम्बल्या। परिमाणान्तात्तु, द्व्याढकी।

२३. काण्डान्तात्क्षेत्रे। द्वे काण्डे प्रमाणमस्याः, द्विकाण्डा क्षेत्रभक्तिः। त्रिकाण्डा। अन्यत्र द्विकाण्डी रज्जुः।

२४. पुरुषात्प्रमाणेऽन्यतरस्याम्। द्वौ पुरुषौ प्रमाणमस्याः, द्विपुरुषी, द्विपुरुषा वा परिखा। त्रिपुरुषी, त्रिपुरुषा।

२५. बहुव्रीहेरूधसो ङीष्[6]। कुण्डोध्नी। घटोध्नी।

२६. संख्याव्ययादेर्ङीप्। ङीषोऽपवादः। द्व्यूध्नी। अत्यूध्नी। बहुव्रीहेरित्येव। नेह :- ऊधोऽतिक्रान्ता, अत्यूधाः।

२७. दामहायनान्ताच्च[7]। द्विदाम्नी। द्विहायनी बाला। * त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् * वयोवाचकस्यैव हायनस्य ङीप् णत्वं चेष्यते। त्रिहायणी, चतुर्हायणी बाला। अन्यत्र तु द्विहायना, त्रिहायना, चतुर्हायना शाला।

२८. अन उपधालोपिनोऽन्यतरस्याम्[8]। बहुराज्ञी। बहुराज्ञ्यौ, बहुराजे, बहुराजानौ।

२९. नित्यं संज्ञाच्छन्दसोः। सुराज्ञी नाम नगरी। वेदे तु, शतमूर्ध्नी।

---

१. वधूटचिरण्टशब्दौ यौवनवयोवाचिनौ। २. अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोरित्यर्थः। ३. आर्हीयस्य ठकोऽध्यर्धेति लुक्। ४. कालः संख्या च न परिमाणम्। ५. द्वाभ्यां शताभ्यां क्रीता। ६. ऊधसोऽनङित्यनङि कृते डाब्ङीब्निषेधेषु प्राप्तेष्विदं वचनम्। ७. दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम्। इह पूर्वसूत्रात्संख्यादेरित्येवानुवर्तते न त्वव्ययादेरिति। तेनोद्दामा वडवेत्यत्र डाब्निषेधावपि पक्षे स्तः।] ८. ङीप् स्यात्। ङीपा मुक्ते डाप्प्रतिषेधौ भवतः।

३०. केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च[1] । अथोत इन्द्रः केवलीर्विशः । मामकी । भागधेयी । पापी । अपरी । समानी । आर्यकृती । सुमङ्गली । भेषजी । अन्यत्र तु, केवला । मामिका । भागधेया । पापा । अपरा । समाना । आर्यकृता । सुमङ्गला । भेषजा ।

३१. रात्रेश्चाजसौ । रात्री व्यख्यदायती । लोके तु कृदिकारादिति ङीष्यन्तोदात्तः ।

३२. अन्तर्वत्पतिवतोर्नुक् । अन्तर्वत्नी[2] । पतिवत्नी[3] ।

३३. पत्युर्नो यज्ञसंयोगे । वसिष्ठस्य पत्नी[4] ।

३४. विभाषा सपूर्वस्य । गृहस्य पतिः, गृहपत्नी, गृहपतिः ।

३५. नित्यं सपत्न्यादिषु । समानः पतिरस्याः सा, सपत्नी । एकपत्नी । वीरपत्नी । भ्रातृपत्नी । पुत्रपत्नी ।

३६. पूतक्रतोरै च । इयं त्रिसूत्री पुंयोग एवेष्यते । पूतक्रतोः स्त्री पूतक्रतायी । यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा ।

३७. वृषाकप्यग्निकुसितकुसिदानामुदात्तः । वृषाकपेः[5] स्त्री, वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी ।

३८. मनोरौ वा । मनोः स्त्री, मनावी, मनायी, मनुः ।

३९. वर्णादनुदात्तात्तोपधात्तो नः । एनी, एता । रोहिणी, रोहिता । श्येनी, श्येता[6] । * पिशङ्गादुपसंख्यानम् * पिशङ्गी, पिशङ्गा । * असितपलितयोर्न * असिता । पलिता । * छन्दसि क्नमेके * असिक्नी । पलिक्नी । अवदात्तशब्दो विशुद्धवाची न वर्णवाचीति, अवदाता इत्येव ।

४०. अन्यतो ङीष् । कल्माषी । सारङ्गी[7] ।

४१. षिद्गौरादिभ्यश्च । नर्त्तकी, खनकी । गौरी । * अनडुहः स्त्रि-

---

१. संज्ञाच्छन्दसोरित्येव । २. ऋन्नेभ्यो ङीप् । अन्तरस्त्यस्यां गर्भ इति विग्रहेऽन्तःशब्दस्याधिकरणप्रधानतयास्तिसामानाधिकरण्याभावादप्राप्तो मतुन्निपात्यते । ३. अत्र वत्वं निपात्यते । ४. तत्कृतयज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः सहाधिकारात् । ५. हरविष्णू वृषाकपी इत्यमरः । वृषाकपायी श्रीगौर्योरिति च । ६. वर्णानां तणितिनितान्तानामित्याद्युदात्ताः सर्व एते । ७. लघावन्ते द्वयोश्च बह्वचो गुरुरिति मध्योदात्तावेतौ ।

यामाम् वा वाच्यः * अनडुही, अनड्वाही । * पिप्पल्यादयश्च * पिप्पली । हरीतकीत्यादि ।

४२. जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु । जानपदी, वृत्तिश्चेत्[1] । अन्या तु जानपदी । कुण्डी, अमत्रं चेत्[2] । कुण्डान्या । गोणी, आवपनं चेत् । गोणान्या । स्थली, अकृत्रिमा भूमिः । स्थलान्या । भाजी, श्राणा । भाजान्या । नागी[3], स्थूला । नागान्या[4] । काली, वर्णः । कालान्या । नीली, अनाच्छादनं चेत्[5] । नीलाऽन्या । * नीलादोषधौ * नीली ओषधिः । * प्राणिनि च * नीली गौः । * संज्ञायां वा * नीली , नीला । कुशी, अयोविकारः । कुशान्या । कामुकी, मैथुनेच्छा चेत् । कामुकान्या । कबरी, केशवेशविशेषः[6] । कबरान्या ।

४३. शोणात्प्राचाम् । शोणी, शोणा ।

४४. वोतो गुणवचनात् । मृद्वी, मृदुः । पट्वी, पटुः । * खरुसंयोगोपधान्न * खरुः पतिवरा कन्या । पाण्डुः ।

४५. बह्वादिभ्यश्च[7] । बह्वी । बहुः । * कृदिकारादक्तिनः * रात्री, रात्रिः । * सर्वतोऽक्तिन्नर्थादित्येके * शकटी । शकटिः, क्तिन्नर्थात्तु, अजननिः । पद्धती[8], पद्धतिः ।

४६. नित्यं छन्दसि । बह्वीषु हित्वा प्रपिबन् ।

४७. भुवश्च । विभ्वी च प्रभ्वी च ।

४८. पुंयोगादाख्यायाम् । गोपस्य स्त्री, गोपी । * पालकान्तान्न * गोपालिका । अश्वपालिका । * सूर्याद्देवतायां चाब्वाच्यः * सूर्यस्य स्त्री देवता, सूर्या । सूरी कुन्ती[9] ।

---

१. उत्सादित्वादञन्तत्वे टिड्ढेति ङीप्याद्युदात्तः । २. स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते न तु नियम्यते । अमत्रे जारजः कुण्ड इति मनुष्यजातिवचनात्तु जातिलक्षणो ङीष् भवत्येव । ३. गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम् । ४. सर्पवाच्ययं दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् । ५. नील्या रक्ता शाटीत्यर्थः । ६. चित्रेत्यर्थः । ७. बहुशब्दो गुणवचन एव । तस्येह पाठ उत्तरार्थः । ८. क्तिन्नन्तत्वादप्राप्ते पद्धतिशब्दो गणे पठ्यते । ९. मानुषीयम् ।

४९. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्[1] । इन्द्राणी । वरुणानी । भवानी । शर्वाणी । मृडानि । * हिमारण्ययोर्महत्त्वे * महद्धिमं हिमानी । महदरण्यमरण्यानी । * यवाद्दोषे * दुष्टो यवो यवानी । * यवनाल्लिप्याम् * यवनानां लिपिर्यवनानी । * मातुलोपाध्याययोरानुग्वा * मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी[2] । * आचार्यादणत्वं च * आचार्यानी[3] । * अर्यक्षत्रियाभ्यां वा स्वार्थे * अर्याणी[4], अर्या । क्षत्रियाणी, क्षत्रिया, पुंयोगे तु, अर्यी । क्षत्रियी । * मुद्गलाच्छन्दसि लिच्च * रथीरभून्मुद्गलानी ।

५०. क्रीतात्करणपूर्वात् । वस्त्रेण क्रीता, वस्त्रक्रीती । क्वचिन्न, धनक्रीता ।

५१. क्तादल्पाख्यायाम् । अभ्रलिप्ती द्यौः ।

५२. बहुव्रीहेश्चान्तोदात्तात् । * जातिपूर्वादिति वक्तव्यम् * ऊरुभिन्नी । नेह :– बहुकृता । * जातान्तान्न * दन्तजाता । * पाणिगृहीती भार्यायाम् * पाणिगृहीतान्या ।

५३. अस्वाङ्गपूर्वपदाद्वा[5] । सुरापीती, सुरापीता ।

५४. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । अतिकेशी, अतिकेशा । चन्द्रमुखी, चन्द्रमुखा । संयोगोपधात्तु, सुगुल्फा । स्वाङ्गं त्रिधा :– * अद्रवं मूर्त्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् * नेह :– सुस्वेदा । सुज्ञाना । सुमुखा शाला । सुशोफा[6] । * अतत्स्थं तत्र दृष्टं च * सुकेशी, सुकेशा[7] वा रथ्या । * तेन चेत्तत्तथायुतम् * सुस्तनी, सुस्तना[8] वा प्रतिमा ।

५५. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च । तुङ्गनासिकी, तुङ्गनासिका । तिलोदरी, तिलोदरा । बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा । समदन्ती,

---

१. येषामिन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोगे एवेष्यते तेषामानुगागममात्रं विधीयते । ङीष् तु पूर्वेण सिद्धः । अन्येषामुभयम् । २. या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः । उपाध्यायी, उपाध्याया । नेदं भाष्ये दृश्यते । ३. स्वयं व्याख्यात्री तु आचार्या । ४. स्वामिनी वश्या वा । इह वार्त्तिके स्वार्थे इति भाष्ये नास्ति । कैयटरीत्या प्रक्षिप्तं तत् । ब्रह्माणीति तु ब्रह्माणमानयति जीवयतीति कर्मण्यण् । ५. पूर्वेण नित्यं प्राप्ते विकल्पोऽयम् । ६. शोफस्य विकारजत्वात् । ७. अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । ८. प्राणिवत्प्राणिसदृशे स्थितत्वात् ।

समदन्ता। चारुकर्णी, चारुकर्णा। तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा। * पुच्छाच्च * सुपुच्छी, सुपुच्छा। * कबरमणिविषशरेभ्यो नित्यम् * कबरपुच्छी मयूरी। मणिपुच्छी। विषपुच्छी। शरपुच्छी। * उपमानात्पक्षाच्च पुच्छाच्च * उलूकपक्षी शाला। उलूकपुच्छी सेना।

५६. न क्रोडादिबह्वचः। कल्याणक्रोडा[१], कल्याणखुरा। सुभगा। सुजघना[२]।

५७. सहनञ्विद्यमानपूर्वाच्च। सकेशा। विद्यमाननासिका।

५८. नखमुखात्संज्ञायाम्। शूर्पणखा। गौरमुखा। संज्ञाभावे ताम्रमुखी, चन्द्रमुखी कन्या।

५९. दीर्घजिह्वी चच्छन्दसि। आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट्।

६०. दिक्पूर्वपदान्ङीप्[३]। प्राङ्मुखी, प्राङ्नासिकी। प्राङ्मुखा, प्राङ्नासिका।

६१. वाहः[४]। दित्यवाट् च मे दित्यौही च मे।

६२. सख्यशिश्वीति भाषायाम्। सखी। अशिश्वी। आधेनवो धुनयन्तामशिश्वीः।

६३. जातेरस्त्रीविषयादयोपधात्। * आकृतिग्रहणा[५] जातिः * तटी। कुक्कुटी। सूकरी। * लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या[६] * वृषली। * गोत्रं च चरणैः[७] सह * औपगवी। कठी। बह्वृची। ब्राह्मणीत्यत्र तु शार्ङ्गरवादित्वान् ङीन्। * योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः * हयी। गवयी। मुकयी। मनुषी[८]। मत्सी[९]।

६४. पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च। ओदनपाकी[१०]। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली।

---

१. अश्वानामुरः क्रोडा। क्रोडादिराकृतिगणः। २. इह बह्वच्कत्वात्। ३. ङीषो ङीबादेश इत्यर्थः। ४. ङीषेव स्वर्यते न ङीप्। ५. अनुगतसंस्थानव्यङ्ग्येत्यर्थः। ६. असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्। ७. अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः। ८. हलस्तद्धितस्येति यलोपः। ९. मत्स्यस्य ङ्याम्। १०. स्त्रीविषयत्वात्पूर्वेणाप्राप्तौ वचनम्। ओषधिविशेषे रूढा एते।

६५. इतो मनुष्यजातेः। दाक्षी। औदमेयी[1]।

६६. ऊङुतः। कुरूः[2]। ब्रह्मबन्धूः[3]। नेह :- अध्वर्युः। * अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् * अलाबूः। कर्कन्धूः। अलाब्वा[4]। कर्कन्ध्वा। प्राणिजातेस्तु, कृकवाकुः। नेह :- रज्जुः। हनुः।

६७. बाह्वन्तात्संज्ञायाम्। भद्रबाहूः। असंज्ञायान्तु, वृत्तबाहुः।

६८. पङ्गोश्च। पङ्गूः। * श्वशुरस्योकाराकारलोपश्च[5] * श्वश्रूः[6]।

६९. ऊरूत्तरपदादौपम्ये। करभोरूः। नागनासोरूः।

७०. संहितशफलक्षणवामादेश्च[7]। संहितोरूः। शफोरूः[8]। लक्ष्मणोरूः। वामोरूः। * सहितसहाभ्यां चेति वक्तव्यम् * सहितोरूः। सहोरूः[9]।

७१. कद्रुकमण्डल्वोश्छन्दसि। कद्रूश्च वै कमण्डलूः। * गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् * गुग्गुलूः। मधूः। जतूः। पतयालूः।

७२. संज्ञायाम्[10]। कद्रूः। कमण्डलूः।

७३. शार्ङ्गरवाद्यञो ङीन्। शार्ङ्गरवी। बैदी। जातेरित्यनुवृत्तेः पुंयोगे ङीषेव। * नृनरयोर्वृद्धिश्च * नारी।

७४. यङश्चाप्[11]। आम्बष्ठ्या। कारीषगन्ध्या। * षाद्यञश्चाप् वाच्यः * पौतिमाष्या[12]।

७५. आवट्याच्च। आवट्या[13]।

७६. तद्धिताः। अधिकारोऽयमापञ्चमाध्यायपरिसमाप्तेः।

७७. यूनस्तिः। युवतिः। युवतीति तु, यौतेः शत्रन्तान्ङीपि।

७८. अणिञोरनार्षयोर्गुरूपोत्तमयोः[14] ष्यङ् गोत्रे। कुमुदगन्धेरपत्यं स्त्री, कौमुदगन्ध्या। वाराह्या। आर्षयोस्तु, वासिष्ठी। वैश्वामित्री।

---

१. इह जातेरिति वर्त्तमाने पुनर्जातिग्रहणाद्योपधादपि। २. कुरुनादिभ्यो ण्यः। तस्य स्त्रियामवन्तीत्यादिना लुक्। ३. अयोपधादिति वर्त्तते। ४. अनयोर्दीर्घान्तत्वेऽपि नोङ्धात्वोरिति प्रतिषेधः फलम्। ५. चादूङ्। ६. पुंयोगलक्षणङीषोऽपवादः। ६. लिङ्गविशिष्टपरिभाषया स्वादयः। ७. अनौपम्यार्थं सूत्रम्। ८. शफौ खुराविव संश्लिष्टावूरू यस्याः सा। ९. सहेते इति सहौ ऊरू यस्याः सा। १०. अच्छन्दोऽर्थं वचनम्। ११. ञ्यङः ष्यङश्च सामान्यग्रहणमेतत्। १२. पूतिमाषशब्दो गर्गादौ। १३. अवटशब्दोऽपि तथा। १४. निर्दिश्यमानस्यादेशा भवन्तीत्यणिञोरेव ष्यङ्।

७९. गोत्रावयवात्[1]। पौणिक्या। भौणिक्या।

८०. क्रौड्यादिभ्यश्च। क्रौड्या। व्याड्या। * सूत युवत्याम् * सूत्या। * भोज क्षत्रिये * भोज्या।

८१. दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्[2]। दैवयज्ञ्या, दैवयज्ञी। शौचिवृक्ष्या, शौचिवृक्षी। सात्यमुग्र्या, सात्यमुग्री। काण्ठेविद्ध्या, काण्ठेविद्धी।

८२. समर्थानां[3] प्रथमाद्वा। इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत्।

८३. प्राग्दीव्यतोऽण्। तेन दीव्यतीत्यतः प्रागणधिक्रियते।

८४. अश्वपत्यादिभ्यश्च। वक्ष्यमाणस्य ण्यस्यापवादः। अश्वपतेरपत्यादि, आश्वपतम्। गाणपतम्[4]।

८५. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। दैत्यः। अदितेरादित्यस्य वादित्यः। प्राजापत्यः। * यमाच्चेति काशिकायाम् * याम्यः। * पृथिव्या ञाञौ * पार्थिवा, पार्थिवी। * देवाद्यञञौ * दैव्यम्, दैवम्। * बहिषष्टिलोपो यञ्च * बाह्यः। * ईकक् च * बाहीकः। * स्थाम्नोऽकारः। अश्वत्थामः[5]। * लोम्नोऽपत्येषु बहुष्वकारः * बाह्वादीञोऽपवादः। उडुलोमाः, उडुलोमान्। द्वित्वैकत्वयोस्तु, औडुलोमिः, औडुलोमी। * गोरजादिप्रसङ्गे यत् * गव्यम्। अनजादिप्रत्ययप्रसङ्गे तु, गोरूप्यम्। गोमयम्।

८६. उत्सादिभ्योऽञ्। औत्सः। * अग्निकलिभ्यां ढग् वक्तव्यः * अग्नेरपत्यादि, आग्नेयम्। कालेयम्।

८७. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्[6]। स्त्रैणः। पौंस्नः। वत्यर्थे तु न स्त्री पुंवच्चेति ज्ञापकात्। स्त्रीवत्। पुंवत्।

८८. द्विगोर्लुगनपत्ये[7]। पञ्चसु कपालेषु संस्कृतः पुरोडाशः, पञ्चकपालः। द्वौ वेदावधीते, द्विवेदः। त्रिवेदः। अपत्ये तु, द्वयोर्मित्रयोरपत्यं द्वैमित्रिः। अजादेरेव। नेह :– पञ्चगर्गरूप्यम्, पञ्चगर्गमयम्।

---

१. गोत्रावयवः कुलाख्यः। अगुरूपोत्तमार्थोऽनणिजर्थश्च आरम्भः। २. अगोत्रार्थमिदं गोत्रेऽपि परत्वात्। ३. सामर्थ्यं परिनिष्ठितत्वं कृतसन्धिकार्यत्वमिति यावत्। ४. गाणपत्यो मन्त्र इति तु प्रामादिकमेव। ५. पृषोदरादित्वात्सस्य तः। ६. धान्यानां भवन इत्यतः प्राग्येऽर्थास्तेष्वित्यर्थः। ७. द्विगोर्निमित्तस्याजादेस्तद्धितस्येत्यर्थो व्याख्यानाल्लभ्यते।

८९. गोत्रेऽलुगचि[1] । गर्गाणां छात्राः, गार्गीयाः[2] ।

९०. यूनि[3] लुक् । ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः । युवापत्यं ग्लौचुकायनः । तस्यच्छात्रोऽपि ग्लौचुकायनः[4] ।

९१. फक्फिञोरन्यतरस्याम्[5] । कात्यायनस्य छात्राः, कातीयाः, कात्यायनीयाः । यास्कीयाः, यास्कायनीयाः ।

९२. तस्यापत्यम् । उपगोरपत्यमौपगवः । भानोरपत्यं भानवः ।

९३. एको गोत्रे । उपगोर्गोत्रापत्यमौपगवः । गार्ग्यः । नाडायनः ।

९४. गोत्राद्यून्यस्त्रियाम्[6] । गर्गस्य युवापत्यं गार्ग्यायणः। स्त्रियां तु गोत्रत्वादेक एव प्रत्ययः । दाक्षी ।

९५. अत इञ् । दाक्षिः ।

९६. बाह्वादिभ्यश्च[7] । बाहविः । औडुलोमिः ।

९७. सुधातुरकङ् च । सुधातुरपत्यं सौधातकिः । * व्यासवरुडनिषादचण्डालबिम्बानाञ्चेति वक्तव्यम् * वैयासकिः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः ।

९८. गोत्रे[8] कुञ्जादिभ्यश्च्फञ् । कौञ्जायन्यः । ब्राध्नायन्यः ।

९९. नडादिभ्यः फक् । नाडायनः । गोत्र इत्येव । नाडिः ।

१००. हरितादिभ्योऽञः[9] । हारितायनः । कैन्दासायनः ।

१०१. यञिञोश्च[10] । गार्ग्यायणः, वात्स्यायनः । दाक्षायणः ।

१०२. शरद्वच्छुनकदर्भाद्[11] भृगुवत्साग्रायणेषु । अञिञोरपवादः । शारद्वतायनो भार्गवः । शारद्वतोऽन्यः । शौनकायनो वात्स्यः । शौनकोऽन्यः । दार्भायण आग्रायणश्चेत् । दार्भिरन्यः ।

---

१. अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुगित्यर्थः । २. इह गर्गादिभ्यो यञिति यञोऽलुकि वृद्धाच्छः । ३. युवप्रत्ययस्य पूर्वविषये इत्यर्थः । ४. युवप्रत्ययस्याणो लुकि वृद्धत्वाभावाच्छो न । ५. यूनि लुगिति नित्ये प्राप्ते वचनम् । ६. यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः । स्त्रियान्न युवसंज्ञा । ७. बाह्वादिराकृतिगणः । ८. गोत्राधिकारश्च शिवादिभ्योऽणिति यावत् । ९. यूनि फक् इत्यर्थः । बिदाद्यन्तर्गणो हरितादिः । १०. इहापि यूनि प्रत्ययः, वचनसामर्थ्यात् । ११. शरद्वच्छुनकशब्दौ बिदादी ।

१०३. **द्रोणपर्वतजीवन्तादन्यतरस्याम्** । द्रौणायनः[1], द्रौणिः । पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः ।

१०४. **अनृष्यानन्तर्ये[2] बिदादिभ्योऽञ्** । बिदस्य गोत्रापत्यं बैदः । अनन्तरो बैदिः[3] । पुत्रस्यापत्यं पौत्रः । दौहित्रः ।

१०५. **गर्गादिभ्यो यञ्[4]** । गार्ग्यः । वात्स्यः ।

१०६. **मधुबभ्र्वोर्ब्राह्मणकौशिकयोः** । माधव्यो ब्राह्मणः । माधवोऽन्यः । बाभ्रव्यः कौशिक ऋषिः । बाभ्रवोऽन्यः । बभ्रुशब्दस्य गर्गादावपि पाठः । तत्फलं लोहितादिकार्यम् । बाभ्रव्यायणी ।

१०७. **कपिबोधादाङ्गिरसे** । काप्यः । बौध्यः । अन्यत्र कापेयः । बौधिः ।

१०८. **वतण्डाच्च[5]** । वातण्ड्यः । अनाङ्गिरसे तु, गर्गादौ शिवादौ च पाठाद्यञणौ । वातण्ड्यः । वातण्डः ।

१०९. **लुक् स्त्रियाम्** । वतण्डी[6] । अनाङ्गिरसे लोहितादित्वात् वातण्ड्यायनी । अणि तु वातण्डी ।

११०. **अश्वादिभ्यः फञ्[7]** । आश्वायनः । * पुंसि जाते * जातस्य गोत्रापत्यं जातायनः । जातायास्तु, जातेयः ।

१११. **भर्गात्त्रैगर्ते** । भार्गायणस्त्रैगर्त्तः । भार्गिरन्यः ।

११२. **शिवादिभ्योऽण्[8]** । शिवस्यापत्यं शैवः । गाङ्गः । तिकादौ शुभ्रादौ च पाठात् फिञ्ढकावपि । गाङ्गायनिः । गाङ्गेयः ।

११३. **अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः** । ढकोऽपवादः । यामुनः । नार्मदः । चिन्तिताया अपत्यं चैन्तितः । वृद्धाभ्यस्तु, वासवदत्तेयः ।

११४. **ऋष्यन्धकवृष्णिकुरुभ्यश्च[9]** । वासिष्ठः, वैश्वामित्रः । श्वाफल्कः[10] । वासुदेवः[11], आनिरुद्धः । नाकुलः[12], साहदेवः ।

---

१. अनादिरिह द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात्प्रयोगः । २. ये त्वत्रानृषयस्तेभ्योऽनन्तरापत्ये । स्वार्थे ष्यञ् । ३. बाह्वादेराकृतिगणत्वादिञ् । ४. गोत्र इत्येव । ५. आङ्गिरस इत्येव । ६. शार्ङ्गरवादित्वात् ङीन् । ७. गोत्र इत्येव । ८. गोत्र इति निवृत्तम् । ९. ऋषयो मन्त्रद्रष्टारः । १०. अन्धकोऽयम् । ११. वसुदेवानिरुद्धौ वृष्णी । १२. नकुलसहदेवौ कुरुकुले ।

११५. मातुरुत्संख्यासंभद्रपूर्वायाः[1]। द्वैमातुरः, षाण्मातुरः। सांमातुरः। भाद्रमातुरः। वैमात्रेयस्तु शुभ्रादित्वाड् ढकि।

११६. कन्यायाः कनीन च। कानीनो व्यासः, कर्णश्च।

११७. विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु। वैकर्णो वात्स्यः। वैकर्णिरन्यः। शौङ्गो भारद्वाजः। शौङ्गिरन्यः। छागल आत्रेयः। छागलिरन्यः।

११८. पीलाया वा। पीलाया अपत्यं पैलः। पैलेयः[2]।

११९. ढक् च मण्डूकात्[3]। माण्डूकेयः, माण्डूकः। माण्डूकिः।

१२०. स्त्रीभ्यो ढक्। वैनतेयः। बाह्वादित्वात्सौमित्रिः। शिवादित्वात्सापत्नः।

१२१. द्व्यचः। तन्नामिकाणोऽपवादः। दात्तेयः। पार्थ इत्यत्र तु तस्येदमित्यण्।

१२२. इतश्चानिञः। दौलेयः। नैधेयः।

१२३. शुभ्रादिभ्यश्च। शुभ्रस्यापत्यं शौभ्रेयः। प्रावाहणेयः[4]। प्रवाहणेयः। मार्कण्डेयः।

१२४. विकर्णकुषीतकात्काश्यपे। वैकर्णेयः। कौषीतकेयः। अन्यो वैकर्णिः। कौषीतकिः।

१२५. भ्रुवो वुक्च[5]। भ्रौवेयः।

१२६. कल्याण्यादीनामिनङ्। काल्याणिनेयः। बान्धकिनेयः।

१२७. कुलटाया वा[6]। कौलटिनेयः। कौलटेयः।

१२८. चटकाया ऐरक्। चाटकैरः। * चटकस्येति वाच्यम् * चटकस्य चाटकैरः। * स्त्रियामपत्ये लुग्वक्तव्यः * चटका।

१२९. गोधाया ढ्रक्। गौधेरः। शुभ्रादित्वात्पक्षे ढक्। गौधेयः।

१३०. आरगुदीचाम्। गौधारः। रका सिद्धे आकारविधानमन्यतोऽपि विधानार्थम्। जडस्य जाडारः। पाण्डारः।

---

१. आदेशार्थं वचनम्, प्रत्ययस्तूत्सर्गेण सिद्धः। स्त्रीलिङ्गनिर्देशाद्धान्यमातुर्न। २. पक्षे द्व्यच इति ढक्। ३. चादण्। पक्षे इञ्। ४. प्रवाहणस्येति वा वृद्धिः। ५. चाड् ढक्। ६. इनङ्मात्रं विकल्प्यते। ढक् तु नित्यः पूर्वेण। सती भिक्षुक्यत्र कुलटा। या तु व्यभिचारार्थं कुलान्यटति तस्याः क्षुद्राभ्यो वेति पक्षे ढ्रक्। कौलटेरः।

१३१. क्षुद्राभ्यो वा[१]। काणेरः, काणेयः। दासेरः, दासेयः।

१३२. पितृष्वसुश्छण्। अणोऽपवादः। पैतृष्वस्रीयः।

१३३. ढकि च लोपः[२]। पैतृष्वसेयः।

१३४. मातृष्वसुश्च। मातृष्वस्रीयः, मातृष्वसेयः।

१३५. चतुष्पाद्भ्यो ढञ्[३]। कामण्डलेयः। जाम्बेयः।

१३६. गृष्ट्यादिभ्यश्च। अण्ढकोरपवादः। गार्ष्टेयः। मित्रयोरपत्यं मैत्रेयः[४]।

१३७. राजश्वशुराद्यत्। * राज्ञो जातावेवेति वाच्यम् * राजन्यः क्षत्रियः। राजनोऽन्यः। श्वशुर्यः।

१३८. क्षत्राद्घः। क्षत्रियः। जातावित्येव। क्षात्रिरन्यः।

१३९. कुलात्खः। कुलीनः। उत्तरसूत्रेऽपूर्वपदादिति लिङ्गात्तदन्तादपि। आढयकुलीनः।

१४० अपूर्वपदादन्यतरस्यां यड्ढकञौ। कुल्यः, कौलेयकः।

१४१. महाकुलादञ्खञौ। माहाकुलः, माहाकुलीनः, महाकुलीनः।

१४२. दुष्कुलाड् ढक्। दौष्कुलेयः, दुष्कुलीनः।

१४३. स्वसुश्छः। स्वसुरपत्यं स्वस्रीयः।

१४४. भ्रातुर्व्यच्च। अणोऽपवादः। भ्रातृव्यः, भ्रात्रीयः।

१४५. व्यन्त्सपत्ने[५]। भ्रातृव्यः शत्रुः।

१४६. रेवत्यादिभ्यष्ठक्। रैवतिकः।

१४७. गोत्रास्त्रियाः कुत्सने ण च[६]। गार्ग्या अपत्यं गार्गो गार्गिको[७] वा जाल्मः।

१४८. वृद्धाट्ठक् सौवीरेषु बहुलम्। भागवित्तेर्भागवित्तिकः, भागवित्तायनः[८]।

१४९. फेश्छ च। यमुन्दस्यापत्यं यामुन्दायनिः[९]। तस्यापत्यं यामुन्दायनीयः, यामुन्दायनिकः।

---

१. अङ्गेन शीलेन च हीनाः क्षुद्राः। वा ढ्रक् पक्षे ढक्। २. अत एव ज्ञापकाड् ढक्। ३. चतुष्पाज्जातिविशेषोऽयम्। ४. दाण्डिनायनेति युलोपः। ५. स्वरे विशेषः। ६. सामर्थ्याद्यूनि। ७. भस्याढ इति पुंवद्भावे यस्येतिलोपः। आपत्यस्येति यलोपश्च। ८. पक्षे फक्। ९. तिकादित्वात् फिञ्।

१५०. फाण्टाहृतिमिमताभ्यां णफिञौ[1]। फाण्टाहृतः, फाण्टाहृतायनिः। मैमतः, मैमतायनिः।

१५१. कुर्वादिभ्यो ण्यः। कौरव्याः ब्राह्मणाः। वावदूक्याः। * सम्राजः क्षत्रिये * साम्राज्यः। साम्राजोऽन्यः।

१५२. सेनान्तलक्षणकारिभ्यश्च। हारिषेण्यः। लाक्षण्यः। तान्तुवाय्यः, कौम्भकार्यः, नापित्यः।

१५३. उदीचामिञ्। हारिषेणिः। लाक्षणिः। तान्तुवायिः। कौम्भकारिः। नापितात्तु उदीचां वृद्धादिति फिञ्। नापितायनिः।

१५४. तिकादिभ्यः फिञ्। तैकायनिः।

१५५. कौशल्यकार्मार्याभ्याञ्च[2]। इञोऽपवादः। कौशल्यायनिः। कार्मार्यायणिः। * परमप्रकृतेरेवायमिष्यते * कुशलस्य कर्मारस्यापत्यमिति विग्रहः। * छागवृषयोरपि * छाग्यायनिः। वार्ष्यायणिः।

१५६. अणो द्व्यचः। इञोऽपवादः। कार्त्रायणिः।

१५७. उदीचां वृद्धादगोत्रात्। आम्रगुप्तायनिः, आम्रगुप्तिः।

१५८. वाकिनादीनां कुक्च। वाकिनकायनिः, वाकिनिः।

१५९. पुत्रान्तादन्यतरस्याम्। गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः। गार्गीपुत्रिः।

१६०. प्राचामवृद्धात् फिन्बहुलम्। ग्लुचुकायनिः।

१६१. मनोर्जातावञ्यतौ षुक् च। मानुषः, मनुष्यः[3]।

१६२. अपत्यं[4] पौत्रप्रभृति गोत्रम्। गर्गस्यापत्यं पौत्रप्रभृति, गार्ग्यः। वात्स्यः।

१६३. जीवति[5] तु वंश्ये युवा। गर्गस्य यदपत्यं चतुर्थादि, गार्ग्यायणः।

१६४. भ्रातरि[6] च ज्यायसि। गार्ग्ये जीवति, गार्ग्यायणोऽस्य कनीयान् भ्राता। वात्स्यायनः।

---

१. नेह यथासंख्यम्। अल्पाच्तरस्य परनिपातालिङ्गात्, इति वृत्तिकृत्। भाष्ये तु यथासंख्यमेव। २. प्रत्ययसन्नियोगेन प्रकृतिरूपं निपात्यते। ३. जातिशब्दावेतौ। अपत्यविवक्षायान्तु औत्सर्गिकोऽण्। मानवः। मानवी प्रजा। ४. पौत्रप्रभृति यदपत्यं तद् गोत्रमित्यर्थः। ५. पूर्वतोऽनुवृत्तं पौत्रप्रभृतीति षष्ठ्या विपरिणम्यते। तेन पौत्रप्रभृतेर्यदपत्यं चतुर्थादि तद्युवसंज्ञम् इत्यर्थः। ६. पित्रादयः पूर्वजा वंश्या भ्राता तु न वंश्योऽकारणत्वात्तदर्थोऽयमारम्भः।

१६५. वान्यस्मिन् सपिण्डे[1] स्थविरतरे जीवति । पितृव्ये मातामहे वा वयसाधिके जीवति, गर्गस्यापत्यं गार्ग्यायणो गार्ग्यो वा ।

१६६. * वृद्धस्य[2] च पूजायामिति वाच्यम् * । तत्र भवान् गार्ग्यायणः ।

१६७. * यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् * । गार्ग्यो जाल्मः ।

१६८. जनपदशब्दात्क्षत्रियादञ् । पाञ्चालः । ऐक्ष्वाकः । वैदेहः । * क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्[3] * पञ्चालानां राजा, पाञ्चालः । वैदेहः । मागधः । * पुरोरण् वक्तव्यः * पौरवः । * पाण्डोर्ड्यण् * पाण्ड्यः ।

१६९. साल्वेयगान्धारिभ्यां च । वृद्धेदिति ञ्यङोऽपवादः । साल्वेयः । गान्धारः ।

१७०. द्व्यञ्मगधकलिङ्गसूरमसादण् । अञोऽपवादः । आङ्गः, वाङ्गः, सौह्मः । मागधः । कालिङ्गः । सौरमसः ।

१७१. वृद्धेत्कोसलाजादाञ् ञ्यङ् । आम्बष्ठ्यः, सौवीर्यः, आवन्त्यः । कौसल्यः । आजाद्यः ।

१७२. कुरुनादिभ्यो ण्यः । कौरव्यः । नैषध्यः । नैषध इत्यत्र तु शैषिकोऽण् ।

१७३. साल्वावयव[4]प्रत्यग्रथकलकूटाश्मकादिञ् । अञोऽपवादः । औदुम्बरिः, तैलखलिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः ।

१७४. ते[5] तद्राजाः । संज्ञासूत्रमिदम् ।

१७५. कम्बोजाल्लुक् । कम्बोजः । कम्बोजौ । * कम्बोजादिभ्य इति वक्तव्यम् * चोलः । शकः । केरलः । यवनः ।

१७६. स्त्रियामवन्तिकुन्तिकुरुभ्यश्च । अवन्ती[6] । कुन्ती । कुरूः ।

---

१. सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते । तरब्निर्देशात्स्थानेन वयसा चोत्कृष्ट इति, अन्यस्मिन् भ्रातृभिन्न इति चार्थः । प्रकृतं जीवतीति सप्तम्यन्तं सपिण्ड इत्यस्य, इहत्यन्तु संज्ञिनो विशेषणम् । २. गोत्रस्यैव वृद्धसंज्ञा प्राचाम् । ३. तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् । ४. साल्वो जनपदस्तस्यावयवा उदुम्बरादयः । उदुम्बर, तिलखिल, मद्रकार, युगन्धर, भुलिङ्ग, शरदण्डेति । ५. जनपदशब्दादित्यारभ्य विहिताः प्रत्ययास्ते इति पदेन परामृश्यन्ते । ६. इतो मनुष्यजातेरिति ङीष् ।

१७७. अतश्च[1] । शूरसेनी । मद्री[2] ।

१७८. न प्राच्यभर्गादियौधेयादिभ्यः । पाञ्चाली, वैदर्भी, आङ्गी, वाङ्गी, मागधी । एते प्राच्याः । भार्गी, कारूशी, कैकेयी[3] । यौधेयी[4], शौक्रेयी ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
चतुर्थाध्यायस्य प्रथमपादः समाप्तः ।



१. षष्ठ्यन्तमिदम् । तेनाकारप्रत्ययस्येत्यर्थः । २. माद्रीति तु भर्गादित्वकल्पनात् । ३. केकयीति तु जन्यजनकभावलक्षणे पुंयोगे ङीष् । ४. युधा-शुक्रा-आभ्यां द्व्यच इति ढक् । ततः स्वार्थे पार्श्वादियौधेयादिभ्य इत्यञि शार्ङ्गरवाद्यञ इति ङीन् । अतश्चेति लुकि तु ढगन्तत्वान्ङीप्स्यात् ।

# अथ चतुर्थाध्यायस्य द्वितीयपादः ।



१. तेन रक्तं रागात्[1] । कषायेण रक्तं वस्त्रं काषायम् ।

२. लाक्षारोचनाट्ठक् । लाक्षिकः । रौचनिकः । * शकलकर्दमाभ्यामुपसंख्यानम् * शाकलिकः । कार्दमिकः । आभ्यामणपीति वृत्तिः । शाकलः । कार्दमः । * नील्या अन् * नील्या रक्तं नीलम् । * पीतात्कन् * पीतकम् । * हरिद्रामहारजनाभ्यामञ् * हारिद्रम् । माहारजनम् ।

३. नक्षत्रेण युक्तः कालः । पुष्येण युक्तं पौषमहः । पौषी रात्रिः ।

४. लुबविशेषे[2] । अद्य पुष्यः । विभाषा फाल्गुनीश्रवणाचैत्रीभ्य इति निर्देशात्पौर्णमास्यामयं लुङ् नेति ज्ञापनात्पौषी पूर्णिमेत्यादि ।

५. संज्ञायां श्रवणाश्वत्थाभ्याम्[3] । श्रवणा रात्रिः । अश्वत्थो मुहूर्त्तः ।

६. द्वन्द्वाच्छः[4] । तिष्यपुनर्वसवीयमहः । राधानुराधीया रात्रिः ।

७. दृष्टं साम । वसिष्ठेन दृष्टं वासिष्ठं साम । वैश्वामित्रम् । * अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः * औशनम् । औशनसम् ।

८. कलेर्ढक् । कालेयम् ।

९. वामदेवाड् ड्यड्ड्यौ[5] । वामदेव्यम् ।

१०. परिवृतो रथः । वस्त्रैः परिवृतो[6] वास्त्रो रथः । काम्बलः ।

११. पाण्डुकम्बलादिनिः[7] । पाण्डुकम्बली ।

१२. द्वैपवैयाघ्रादञ् । अणोऽपवादः । द्वैपेन परिवृतो रथो द्वैपः । वैयाघ्रः ।

---

१. रज्यतेऽनेनेति रागः । २. षष्टिदण्डात्मकस्य कालस्यावान्तरभेदश्चेन्न गम्यते । ३. विशेषार्थोऽयमारम्भः । ४. नक्षत्रद्वन्द्वादित्यर्थात् । ५. सिद्धे यस्येतिलोपेन किमर्थं ययतौ डितौ । ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥ ६. समन्ताद्वेष्टितः परिवृत उच्यते । नेह :– छात्रैः परिवृतो रथः । ७. पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः । मत्वर्थीयेनैव सिद्धेऽणो निवृत्त्यर्थं वचनम् ।

१३. कौमारापूर्ववचने[1]। अपूर्वपतिं कुमारीं पतिरुपपन्नः, कौमारः पतिः। यद्वा अपूर्वपतिः कुमारी पतिमुपपन्ना, कौमारी भार्या।

१४. तत्रोद्धृतममत्रेभ्यः। शराव उद्धृतः[2], शाराव ओदनः।

१५. स्थण्डिलाच्छयितरि व्रते। स्थण्डिले शेते, स्थाण्डिलो भिक्षुः।

१६. संस्कृतं[3] भक्षाः। भ्राष्ट्रे संस्कृताः, भ्राष्ट्रा यवाः। अष्टासु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपालः।

१७. शूलोखाद्यत्। अणोऽपवादः। शूले संस्कृतम्, शूल्यं मांसम्। उख्यम्[4]।

१८. दध्नष्ठक्। दाधिकम्।

१९. उदश्वितोऽन्यतरस्याम्। औदश्वित्कः[5], औदश्वितः।

२०. क्षीराड्ढञ्। क्षैरेयी यवागूः।

२१. सास्मिन् पौर्णमासीति[6]। पौषी पौर्णमासी अस्मिन्, पौषो मासः। माघः।

२२. आग्रहायण्यश्वत्थाट्ठक्। अणोऽपवादः। अग्रे हायनमस्या आग्रहायणी[7], सास्मिन् पौर्णमासीति, आग्रहायणिको मासः। अश्वत्थेन युक्ता पौर्णमासी, अश्वत्थोऽस्मिन्[8], आश्वत्थिको मासः।

२३. विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः। पक्षेऽण्। फाल्गुनिकः, फाल्गुनः। श्रावणिकः, श्रावणः। कार्त्तिकिकः, कार्त्तिकः। चैत्रिकः, चैत्रः।

२४. सास्य देवता। इन्द्रो देवतास्य, ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्। ऐन्द्रो मन्त्रः।

२५. कस्येत्[9]। को ब्रह्मा देवतास्य, कायम्[10]। श्रायम्।

---

१. कौमारेत्यविभक्तिको निर्देशस्तेन स्त्रियां पुंसि च निपात्यते। २. उद्धृत्य निहित इत्यर्थः। तेन सप्तमी। ३. तत्रेति वर्त्तते। यत्संस्कृतं भक्षाश्चेत्ते स्युः। ४. उखा पात्रविशेषः। ५. उदकेन श्वयति वर्धत इत्युदश्वित्तक्रम्। ६. इतिशब्दात्संज्ञायामिति लभ्यते। ७. प्रज्ञादेराकृतिगणत्वादण्। पूर्वपदादिति णत्वम्। ८. निपातनादणो लुप्। ९. प्रत्ययसन्नियोगेनेति गम्यते। १०. यस्येति लोपात्परत्वादादिवृद्धिः।

२६. शुक्राद्धन्। अणोऽपवादः। शुक्रियम।

२७. अपोनप्त्रपान्नप्तृभ्यां घः। अपोनप्त्रियम्[1]। अपान्नप्त्रियम्।

२८. छ[2] च। अपोनप्त्रीयम्। अपान्नप्त्रीयम्। * शतरुद्राद्घश्च * शतं रुद्रा देवतास्य, शतरुद्रियम्, शतरुद्रीयम्[3]।

२९. महेन्द्राद्घाणौ च। चाच्छः। महेन्द्रियम्, माहेन्द्रम्, महेन्द्रीयम्।

३०. सोमाट् ट्यण्। सौम्यम्। सौमी ऋक्।

३१. वाय्वृतुपित्रुषसो यत्। वायव्यम्। ऋतव्यम्। पित्र्यम्। उषस्यम्।

३२. द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च। चाद्यत्। द्यावापृथिवीयम्, द्यावापृथिव्यम्। शुनासीरीयम्, शुनासीर्यम्। मरुत्वतीयम्, मरुत्वत्यम्। अग्नीषोमीयम्, अग्नीषोम्यम्। वास्तोष्पतीयम्। वास्तोष्पत्यम्। गृहमेधीयम्, गृहमेध्यम्।

३३. अग्नेर्ढक्। अणोऽपवादः। आग्नेयोऽष्टाकपालः।

३४. कालेभ्यो भववत्। मासिकम्। प्रावृषेण्यम्।

३५. महाराजप्रोष्ठपदाट् ठञ्। माहाराजिकम्। प्रौष्ठपदिकम्। * तदस्मिन्वर्त्तत इति नवयज्ञादिभ्य उपसंख्यानम्। नावयज्ञिकः कालः। पाकयज्ञिकः। * पूर्णमासादण् वक्तव्यः * पूर्णो मासोऽस्यां वर्त्तते पौर्णमासी तिथिः।

३६. पितृव्यमातुलमातामहपितामहाः। * पितुर्भ्रातरि व्यत् * पितुर्भ्राता, पितृव्यः। * मातुर्डुलच् * मातुर्भ्राता, मातुलः। * मातृपितृभ्यां पितरि डामहच् * मातुः पिता, मातामहः। पितुः पिता, पितामहः। * मातरि षिच्च * मातामही। पितामही। * अवेर्दुग्धे सोढदूसमरीसचो वक्तव्या च * अवेर्दुग्धम्, अविसोढम्। अविदूसम्। अविमरीसम्। * तिलान्निष्फलात्पिञ्जपेजौ * तिलपिञ्जः[4]। तिलपेजः। * पिञ्जश्छन्दसि डिच्च * तिल्पिञ्जः।

३७. तस्य समूहः। काकानां समूहः, काकम्। वाकम्।

३८. भिक्षादिभ्योऽण्[5]। भैक्षम्। गर्भिणीनां गार्भिणम्[6]। युवतीनां यौवनम्। शत्रन्तात्[7]तु, यौवतम्।

---

१. अपोनपात् अपान्नपाच्च देवता। प्रत्ययसन्नियोगेन तूक्तं रूपं निपात्यते। २. योगविभागो यथासंख्यनिवृत्त्यर्थः। ३. विधानसामर्थ्याद् द्विगोर्लुगनपत्य इति न लुक्। ४. वन्ध्यस्तिल इत्यर्थः। ५. बाधकबाधनार्थमण्ग्रहणम्। ६. इद्धानुदात्तादित्वादञ् प्राप्तः। इनण्यनपत्य इति प्रकृतिभावः। ७. अनुदात्तादित्वादञि।

३९. गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्[1]। ग्लुचुकायनीनां समूहो ग्लौचुकायनकम्, औपगवकम्। औक्षकम्। औष्ट्रकम्। औरभ्रकम्। राजकम्। राजन्यकम्। राजपुत्रकम्। वात्सकम्। मानुष्यकम्। आजकम्। * वृद्धाच्चेति वक्तव्यम् * वार्धकम्।

४०. केदाराद्यञ्च। कैदार्यम्, कैदारकम्। * गणिकाया यञिति वक्तव्यम् * गाणिक्यम्।

४१. ठञ्कवचिनश्च। चात्केदारादपि। कावचिकम्। कैदारिकम्।

४२. ब्राह्मणमाणववाडवाद्यत्। ब्राह्मण्यम्। माणव्यम्। वाडव्यम्। * पृष्ठादुपसंख्यानम् * पृष्ठ्यम्।

४३. ग्रामजनबन्धुभ्यस्तल्। ग्रामता। जनता। बन्धुता। * गजसहायाभ्यां चेति वक्तव्यम् * गजता। सहायता। * अह्नः खः क्रतौ * अहीनः[2]। आह्नोऽन्यः[3]। * पर्श्वा णस् वक्तव्यः * पर्शूनां समूहः, पार्श्वम्।

४४. अनुदात्तादेरञ्। कापोतम्। मायूरम्।

४५. खण्डिकादिभ्यश्च। खाण्डिकम्।

४६. चरणेभ्यो धर्मवत्[4]। काठकम्। छान्दोग्यम्।

४७. अचित्तहस्तिधेनोष्ठक्। साक्तुकम्। धैनुकम्।

४८. केशाश्वाभ्यां यञ्छावन्यतरस्याम्। पक्षे ठगणौ। कैश्यम्, कैशिकम्। अश्वीयम्, आश्वम्।

४९. पाशादिभ्यो यः। पाश्या। तृण्या। धूम्या। वन्या। वात्या।

५०. खलगोरथात्। खल्या। गव्या। रथ्या।

५१. इनित्रकट्यचश्च। खलिनी। गोत्रा। रथकट्या। * खलादिभ्य इनिर्वक्तव्यः * डाकिनी। कुटुम्बिनी।

५२. विषयो देशे[5]। शिबीनां विषयो देशः, शैबः।

५३. राजन्यादिभ्यो वुञ्। राजन्यकः। त्रैगर्त्तकः।

---

१. लौकिकमिह गोत्रम्, तच्चापत्यमात्रम्। २. अहर्गणसाध्यस्तुत्याकः क्रतुरित्यर्थः। ३. इह खण्डिकादित्वादञ्। अह्नष्टखोरेवेति नियमाट्टिलोपो न। ४. चरणाद्धर्माम्नाययोरित्यतिदेशः। ५. विषयोऽत्यन्तपरिशीलितः। स चेद्देशः।

५४. भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ । भौरिकीणां विषयो देशः, भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् ।

५५. सोऽस्यादिरिति छन्दसः प्रगाथेषु । पङ्क्तिरादिरस्य, पाङ्क्तः प्रगाथः । * स्वार्थ उपसंख्यानम् * त्रिष्टुबेव, त्रैष्टुभम् ।

५६. संग्रामे प्रयोजनयोद्धृभ्यः । सुभद्रा प्रयोजनमस्य, सौभद्रः संग्रामः। भरता योद्धारोऽस्य, भारतः संग्रामः ।

५७. तदस्य प्रहरणमिति क्रीडायां णः । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा ।

५८. घञः साऽस्यां क्रियेति ञः । श्येनपातोऽस्यां वर्त्तते, श्यैनम्पाता[1] मृगया । तैलम्पाता स्वधा ।

५९. तदधीते तद्वेद । व्याकरणमधीते, वेद वा, वैयाकरणः ।

६०. क्रतूक्थादिसूत्रान्ताट्[2] ठक् । आग्निष्टोमिकः, वाजपेयिकः । औक्थिकः, न्यायं नैयायिकः, वृत्तिं वार्त्तिकः, लोकायतं लौकायतिकः । * सूत्रान्तादकल्पादेरेवेष्यते * सांग्रहसूत्रिकः । कल्पादेस्तु, काल्पसूत्रः । * विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् * वायसविद्यिकः । गौलक्षणिकः । पाराशरकल्पिकः । * अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम् * आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रैविद्यः[3] । * आख्यानाख्यायिकेतिहासपुराणेभ्यश्च * यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतं तदधीते, वेत्ति वा, यावक्रीतिकः । वासवदत्तिकः । ऐतिहासिकः । पौराणिकः । * सर्वादेः सादेश्च लुग्वक्तव्यः * सर्ववेदः । सर्वतन्त्रः । सवार्त्तिकः । द्वितन्त्रः[4] । * इकन्पदोत्तरपदात् शतषष्टेः षिकन् पथः * पूर्वपदिकः । उत्तरपदिकः । शतपथिकः । शतपथिकी । षष्टिपथिकी ।

६१. क्रमादिभ्यो वुन् । क्रमकः । पदकः । शिक्षकः । मीमांसकः ।

६२ अनुब्राह्मणादिनिः[5] । ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं तदधीतेऽनुब्राह्मणी ।

---

१. श्येनतिलस्येति मुम् । २. क्रतुविशेषवाचिनामिह ग्रहणम् । उक्थं सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम् । मुख्यार्थात्तूक्थशब्दात् ठगणौ नेष्येते । ३. त्रिविधा विद्या, त्रिविद्या, तामधीते, वेद, वा । ४. द्विगोर्लुगिति लुक् । ५. मत्वर्थीयेन सिद्धेऽण्बाधनार्थम् ।

६३. **वसन्तादिभ्यष्ठक्।** वासन्तिकः। अथर्वाणमधीते, आथर्वणिकः[1]।

६४. **प्रोक्ताल्लुक्[2]।** पाणिनीयः[3]। पाणिनीया।

६५. **सूत्राच्च कोपधात्।** अष्टावध्यायाः परिमाणमस्य, अष्टकं पाणिनेः सूत्रम्, तदधीते, वेद वा, अष्टकः। अष्टकौ। अष्टकाः।

६६. **छन्दोब्राह्मणानि च तद्विषयाणि[4]।** कठेन प्रोक्तमधीयते, कठाः[5]।

६७. **तदस्मिन्नस्तीति देशे तन्नाम्नि।** उदुम्बराः सन्त्यस्मिन्देशे, औदुम्बरः।

६८. **तेन निर्वृत्तम्।** कुशाम्बेन निर्वृत्ता, कौशाम्बी नगरी।

६९. **तस्य निवासः।** शिबीनां निवासो देशः, शैबः।

७०. **अदूरभवश्च[6]।** विदिशाया अदूरभवं नगरं वैदिशम्।

७१. **ओरञ्।** अणोऽपवादः। कक्षतु–काक्षतवम्। अरडु-आरडवम्। नद्यां तु, इक्षुमती[7]।

७२. **मतोश्च बह्वजङ्गात्[8]।** सैध्रकावतम्। ऐषुकावतम्।

७३. **बह्वचः कूपेषु।** अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः।

७४. **उदक्च विपाशः[9]।** दत्तेन निर्वृत्तो दात्तः कूपः।

७५. **सङ्कलादिभ्यश्च[10]।** सङ्कलेन निर्वृत्तं साङ्कलम्। पौष्कलम्।

७६. **स्त्रीषु सौवीरसाल्वप्राक्षु।** सौवीरे, दात्तामित्री नगरी। साल्वे, वैधूमाग्नी। प्राचि, माकन्दी।

---

१. दाण्डिनायनेति निपातनान्न टिलोपः। २. अध्येतृवेदितृप्रत्ययस्येति उपस्थितत्वादर्थः। ३. स्वरे विशेषः। पणनं पणः। सोऽस्यास्तीति पणी। तस्य गोत्रापत्यं पाणिनः। युवापत्यं पाणिनिः। तेन प्रोक्तं पाणिनीयम्। वृद्धाच्छः। तदधीते, वेद वा, पाणिनीयः। ४. अध्येतृवेदितृ-प्रत्ययं विना न प्रयोज्यानीत्यर्थः। ५. अत्र वैशम्पायनान्तेवासित्वाण्णिनिः। तस्य कठचरकादिति लुक्। ततोऽणः प्रोक्ताल्लुक्। ६. चकारेण प्रागुक्तास्त्रयोऽर्थाः सन्निधाप्यन्ते। तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वम्। ७. नद्यां मतुबिति परत्वान्मतुप्। ८. अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं मा भूत्। नेह :–मालावतम्। ९. विपाश उत्तरे ये कूपास्तेषु। अबह्वजर्थ आरम्भः। १०. कूपेष्विति निवृत्तम्।

७७. सुवास्त्वादिभ्योऽण्[1]। अञोऽपवादः। सुवास्तोरदूरभवं सौवास्तवम्। वर्णु–वार्णवम्। सौवास्तवी नदी।

७८. रोणी[2]। रौणः। आजकरोणः।

७९. कोपधाच्च। कार्णच्छिद्रकः कूपः। कार्कवाकवम्। त्रैशङ्कवम्।

८०. वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः[3]। अरीहणेन निर्वृत्तमारीहणकम्। कार्शाश्वीयम्। ऋश्यकम्। कुमुदिकम्। काशिलः। तृणसम्। प्रेक्षी। अश्मरः। साखेयम्। साङ्काश्यम्। बल्यम्। पाक्षायणः। * पथः पन्थ च * पान्थायनः। कार्णायनिः। सौतङ्गमिः। प्रागद्यः। वाराहकः। कौमुदिकः।

८१. जनपदे लुप्। पञ्चालानां निवासो जनपदः, पञ्चालाः। कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः।

८२. वरणादिभ्यश्च[4]। वरणानामदूरभवं नगरं वरणाः।

८३. शर्कराया वा। शर्करा, शार्करम्।

८४. ठक्छौ च। कुमुदादौ वराहादौ च पाठात्ठच्छकौ। शार्करिकम्, शर्करीयम्, शर्करिकम्, शार्करकम्।

८५. नद्यां मतुप्। इक्षुमती।

८६. मध्वादिभ्यश्च[5]। मधुमान्।

८७. कुमुदनडवेतसेभ्यो ड्मतुप्। कुमुद्वान्। नड्वान्। वेतस्वान्[6]। * महिषाच्चेति वक्तव्यम्। * महिष्मान् देशः।

८८. नडशादाड्ड्वलच्। नड्वलः। शाद्वलः।

८९. शिखाया वलच्। शिखावलं नगरम्।

९०. उत्करादिभ्यश्छः। उत्करीयः।

---

१. अण्ग्रहणं नद्यां मतुपो बाधनार्थम्। २. रोणीति प्रथमान्तनिर्देशाद्रोणीशब्दः केवलस्तदन्तश्चाणं लभत इत्यर्थः। ३. इह सप्तदशभ्यो गणेभ्यः सप्तदश प्रत्यया यथासंख्यम्। ४. अजनपदार्थ आरम्भः। ५. अनद्यर्थ आरम्भः। ६. आद्ययोर्झय इति अन्त्ये मादुपधाया इति मस्य वः।

९१. **नडादीनां कुक् च** । नडकीयम् । * क्रुञ्चा ह्रस्वत्वं च * क्रुञ्चकीयः । * तक्ष्णन्नलोपश्च * तक्षकीयः । बिल्वकीया[1] । वेत्रकीया ।

९२. **शेषे** । अयमधिकारो[2] विधिश्च । चक्षुषा गृह्यते, चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टाः, दार्षदाः सक्तवः । उलूखले क्षुण्णः, औलूखलो यावकः । अश्वैरुह्यते, आश्वो रथः । चातुरं शकटम् । चतुर्दश्यां दृश्यते, चातुर्दशं रक्षः ।

९३. **राष्ट्रावारपाराद्घखौ**[3] । राष्ट्रियः । अवारपारीणः । * अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् * अवारीणः । पारीणः । पारावारीणः ।

९४. **ग्रामाद्यखञौ** । ग्राम्यः । ग्रामीणः ।

९५. **कत्त्र्यादिभ्यो ढकञ्** । कुत्सितास्त्रयः, कत्त्रयः, तत्र जातादिः, कात्त्रेयकः । नागरेयकः । ग्रामेयकः ।

९६. **कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** । कौलेयकः श्वा । कौलोऽन्यः । कौक्षेयकोऽसिः । कौक्षोऽन्यः । ग्रैवेयकोऽलङ्कारः । ग्रैवोऽन्यः ।

९७. **नद्यादिभ्यो ढक्** । नादेयम् । माहेयम् । वाराणसेयम् ।

९८. **दक्षिणापश्चात्पुरसस्त्यक्**[4] । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

९९. **कापिश्याः ष्फक्** । कापिश्यां जातादि, कापिशायनं मधु । कापिशायनी द्राक्षा ।

१००. **रङ्कोरमनुष्येऽण् च**[5] । राङ्कवो गौः । राङ्कवायणः । मनुष्यस्तु, राङ्कवकः[6] ।

१०१. **द्युप्रागपागुदक्प्रतीचो यत्** । दिव्यम् । प्राच्यम् । उदीच्यम् । प्रतीच्यम् ।

१०२. **कन्थायाष्ठक्** । कान्थिकः ।

१०३. **वर्णौ**[7] **वुक्** । यथा हि जातं हिमवत्सु कान्थकम् ।

---

१. बिल्वाः सन्ति यस्यां सेति विग्रहः । इति चातुरर्थिकप्रत्ययाः । २. तस्य विकार इति यावत् । अथ शैषिकप्रत्ययाः । ३. इत आरभ्य प्रकृतिविशेषेभ्यः प्रत्ययविशेषाष्ट्युट्युलन्ता उच्यन्ते । तेषां जातादयोऽर्थाः समर्थविभक्तयश्चाग्रे वक्ष्यन्ते । ४. दक्षिणेत्याजन्तमव्ययम् । ५. चात् ष्फक् । ६. मनुष्यतत्स्थयोरिति वुञ् । रङ्कुः कच्छादिः । ७. वर्णुर्नदस्तत्समीपदेशो वर्णुस्तद्विषयार्थवाचिनः कन्थाशब्दादित्यर्थः ।

१०४. अव्ययात्त्यप्। * अमेहक्वतसित्रेभ्य एव * अमात्यः[1]। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। * त्यब्नेर्ध्रुव इति वक्तव्यम् * नित्यः। * निसो गते * निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः[2]। * अरण्याण्णः * आरण्याः सुमनसः। * दूरादेत्यः * दूरेत्यः। * उत्तरादाहञ् * औत्तराहः।

१०५. ऐषमोह्यःश्वसोऽन्यतरस्याम्। पक्षे वक्ष्यमाणौ ट्युट्युलौ। ऐषमस्त्यम्, ऐषमस्तनम्। ह्यस्त्यम्, ह्यस्तनम्। श्वस्त्यम्। श्वस्तनम्। पक्षे शौवस्तिकं वक्ष्यते।

१०६. तीररूप्योत्तरपदादञ्ञौ। काकतीरम्, पाल्वलतीरम्। शैवरूप्यम्।

१०७ दिक्पूर्वपदादसंज्ञायां ञः। अणोऽपवादः। पौर्वशालः। पूर्वेषुकामशमः[3]।

१०८. मद्रेभ्योऽञ्[4]। पौर्वमद्रः। आपरमद्रः।

१०९. उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्। शैवपुरम्।

११०. प्रस्थोत्तरपदपलद्यादिकोपधादण्। माहिकिप्रस्थः। पालदः। नैलीनकः।

१११. कण्वादिभ्यो गोत्रे[5]। काण्व्यस्य छात्राः, काण्वाः।

११२. इञश्च। दाक्षाः। गोत्रमिह शास्त्रीयं न तु लौकिकम्। तेनेह न :— पाणिनीयम्। सौतङ्गमीयम्।

११३. न द्व्यचः प्राच्यभरतेषु[6]। प्राष्ठीयाः। काशीयाः।

११४. वृद्धाच्छः[7]। शालीयः। मालीयः। तदीयः।

११५. भवतष्ठक्छसौ[8]। भावत्कः, भवदीयः। शत्रन्तात्तु, भावतः।

११६. काश्यादिभ्यष्ठञ्ञिठौ[9]। काशिकी, काशिका। बैदिकी, बैदिका। * आपदादिपूर्वपदात्कालान्तात्[10] * आपत्कालिकी, आपत्कालिका।

---

१. असान्तिकसहार्थयोः। २. ह्रस्वात्तादाविति षत्वम्। ३. प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः। ४. दिक्पूर्वपदादित्येव। ५. कण्वो गर्गादिः। ६. भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे तेषामग्रहणस्य ज्ञापकम्। ७. गोत्र इति नानुवर्तते। सामान्येन विधानम्। अणोऽपवादः। ८. वृद्धादिति वर्तते विभाषोशीनरेष्विति यावत्। ९. इकार उच्चारणार्थः। १०. आपदादिराकृतिगणः।

११७. वाहीकग्रामेभ्यश्च। छस्यापवादः। कास्तीरिकी[1], कास्तीरिका। शाकलिकी, शाकलिका।

११८. विभाषोशीनरेषु। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया।

११९. ओर्देशे[2] ठञ्। नैषादकर्षुकः[3]। दाक्षिकर्षुकः[4]।

१२०. वृद्धात्प्राचाम्। आढकजम्बुकः। शाकजम्बुकः। अन्येषान्तु, मल्लवास्तु–माल्लवास्तवः।

१२१. धन्वयोपधाद्[5] वुञ्। ऐरावतकः। सांकाश्यकः। काम्पिल्यकः।

१२२. प्रस्थपुरवहान्ताच्च[6]। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। पैलुवहकः।

१२३. रोपधेतोः प्राचाम्। पाटलिपुत्रकः। काकन्दी–काकन्दकः।

१२४. जनपदतदवध्योश्च। आदर्शकः। त्रैगर्त्तकः।

१२५. अवृद्धादपि बहुवचनविषयात्। आङ्गकः। आजमीढकः[7]। दार्व–दार्वकः। कालञ्जरा–कालञ्जरकः[7]। नेह :– वर्त्तनी च, वर्त्तनी च, वर्त्तनी च, वर्त्तन्यः, तासु भवो वार्त्तनः।

१२६. कच्छाग्निवक्त्रवर्त्तोत्तरपदात्। दारुकच्छकः। काण्डाग्नकः। सैन्धुवक्त्रकः। बाहुवर्त्तकः।

१२७. धूमादिभ्यश्च। धौमकः। तैर्थकः।

१२८. नगरात्कुत्सनप्रावीण्ययोः। नागरकश्चौरः, शिल्पी वा। अन्यत्र नागराः।

१२९. अरण्यान्मनुष्ये। णस्यापवादः। * पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् * आरण्यकः पन्थाः, अध्यायः, न्यायः, विहारः, मनुष्यः, हस्ती वा। * वा गोमयेषु * आरण्यकाः, आरण्या वा गोमयाः।

१३०. विभाषा कुरुयुगन्धराभ्याम्। कौरवकः। कौरवः, यौगन्धरकः, यौगन्धरः।

१३१. मद्रवृज्योः कन्। जनपदवुञोऽपवादः। मद्रेषु जातादिः, मद्रकः। वृजिकः।

---

१. कास्तीरं नाम वाहीकग्रामः। २. ञिठं व्यावर्त्तयितुं ठञ्ग्रहणम्। ३. निषादकर्षूः कश्चिद्देशः। ४. वृद्धाच्छं परत्वादयं बाधते। ५. धन्वशब्दो मरुदेशवचनः। ६. पुरग्रहणमप्रागर्थम्। प्राचां तूत्तरेण सिद्धम्। ७. जनपदावधिरयम्।

१३२. कोपधादण्। माहिषिकः।

१३३. कच्छादिभ्यश्च। वुञादेरपवादः। काच्छः। सैन्धवः।

१३४. मनुष्यतत्स्थयोर्वुञ्। कच्छाद्यणोऽपवादः। कच्छे जातादिः, काच्छको मनुष्यः। काच्छकं हसितम्। अन्यत्र काच्छो गौः।

१३५. अपदातौ साल्वात्। कच्छादित्वात्सिद्धे नियमार्थम्, अपदातावेवेति। साल्वको ब्राह्मणः। पदातौ तु, साल्वः पदातिर्व्रजति।

१३६. गोयवाग्वोश्च। कच्छाद्यणोऽपवादः। साल्वको गौः। साल्विका यवागूः। साल्वमन्यत्।

१३७. गर्त्तोत्तरपदाच्छः। अणोऽपवादः। वृकगर्त्तीयम्।

१३८. गहादिभ्यश्छः। गहीयः। * मुखपार्श्वतसोर्लोपश्च * मुखतीयम्। पार्श्वतीयम्। * कुग्जनस्य परस्य च * जनकीयम्। परकीयम्। * देवस्य च * देवकीयम्। * स्वस्य च * स्वकीयम्[1]। * वेणुकादिभ्यश्छण् वाच्यः * वैणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्।

१३९. प्राचां कटादेः। कटनगरीयम्। कटघोषीयम्। कटपल्वलीयम्।

१४०. राज्ञः क च। राजकीयम्।

१४१. वृद्धादकेकान्तखोपधात्। ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनस्तत्र जातो ब्राह्मणकीयः। शाल्मलिकीयः। आयोमुखीयः।

१४२. कन्थापलदनगरग्रामह्रदोत्तरपदात्। ठञ्ञिठादेरपवादः। दाक्षिकन्थीयम्। दाक्षिपलदीयम्। दाक्षिनगरीयम्। दाक्षिग्रामीयम्। दाक्षिह्रदीयम्।

१४३. पर्वताच्च। पर्वतीयः।

१४४. विभाषा मनुष्ये। पर्वतीयानि, पार्वतानि वा फलानि। मनुष्ये तु, पर्वतीयः।

१४५. कृकणपर्णाद्भारद्वाजे[2]। कृकणीयम्। पर्णीयम्। अन्यत्र कार्कणम्। पार्णम्।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते

चतुर्थाध्यायस्य द्वितीयपादः समाप्तः।



---

१. स्वीयमित्यपि प्रयोगदर्शनात्कुग्वेति चिन्त्यम्। २. भरद्वाजदेशवाचिभ्यामित्यर्थः।

# अथ चतुर्थाध्यायस्य तृतीयपादः ।



१. युष्मदस्मदोरन्यतरस्यां[1] खञ्च । चाच्छः । पक्षेऽण् । युष्मदीयः । अस्मदीयः ।

२. तस्मिन्नणि च युष्माकास्माकौ । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ।

३. तवकममकावेकवचने । तावकीनः, तावकः । मामकीनः, मामकः । त्वदीयः । मदीयः ।

४. अर्धाद्यत् । अर्ध्यः ।

५. परावराधमोत्तमपूर्वाच्च । परार्ध्यम् । अवरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् ।

६. दिक्पूर्वपदाट्ठञ्च । चाद्यत् । पौर्वार्धिकम्, पूर्वार्ध्यम् ।

७. ग्रामजनपदैकदेशादञ्ठञौ । इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः[2], पौर्वार्धिकाः ।

८. मध्यान्मः । मध्यमः । * आदेश्च[3] * आदिमः । * अवोधसोर्लोपश्च * अवमः । अधमः ।

९. अ साम्प्रतिके । मध्यो[4] वैयाकरणः । मध्यं[5] दारु ।

१०. द्वीपादनुसमुद्रं[6] यञ् । द्वैप्यम्, द्वैप्या ।

११. कालाट्ठञ्[7] । मासिकम् । सांवत्सरिकम् । सायंप्रातिकः । पौनःपुनिकः ।

१२. श्राद्धे शरदः । ऋत्वणोऽपवादः । शारदिकं श्राद्धम् ।

---

१. देशाधिकारो निवृत्तः । २. पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे समासः । ठञ्ग्रहणं स्पष्टार्थम् । अञ्चेत्युक्ते यतोऽनुकर्षः सम्भाव्येत । ३. काशिकासंमतो वार्त्तिकद्वयपाठः । ४. समुचित इत्यर्थः । ५. नातिह्रस्वं नातिदीर्घमित्यर्थः । ६. समुद्रस्य समीपे यो द्वीपस्तद्विषयादित्यर्थः । ७. तत्र जात इति यावत्कालाधिकारः । शार्वरमौषसं प्राक्कालीनमित्यादि तु न साध्विति प्रामाणिकाः ।

१३. विभाषा रोगातपयोः। शारदिकः, शारदो वा रोग आतपो वा। अन्यत्र शारदं दधीत्येव।

१४. निशाप्रदोषाभ्याञ्च[1]। नैशिकम्, नैशम्। प्रादोषिकम्, प्रादोषम्।

१५. श्वसस्तुट् च। शौवस्तिकम्, श्वस्त्यम्, श्वस्तनम्।

१६. संधिवेलाद्यृतुनक्षत्रेभ्योऽण्। सन्धिवेलायां भवं सान्धिवेलम्। सान्ध्यम्। ग्रैष्मम्। तैषम्। पौषम्। * संवत्सरात्फलपर्वणोः * सांवत्सरं फलं पर्व वा। अन्यत्सांवत्सरिकम्।

१७. प्रावृष एण्यः। प्रावृषेण्यः।

१८. वर्षाभ्यष्ठक्। वर्षासु साधु, वार्षिकं वासः।

१९. छन्दसि ठञ्। ठकोऽपवादः। वार्षिकम्[2]।

२०. वसन्ताच्च। वासन्तिकम्।

२१. हेमन्ताच्च[3]। हैमन्तिकम्।

२२. सर्वत्राण् च तलोपश्च[4]। हैमनम्, हैमन्तम्।

२३. सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट्[5] च। सायन्तनम्। चिरन्तनम्। प्राह्णेतनम्[6]। प्रगेतनम्। दोषातनम्। दिवातनम्। * चिरपरुत्परारिभ्यस्त्नो वक्तव्यः। चिरत्नम्। परुत्नम्। परारित्नम्। * अग्रादिपश्चाड्डिमच् * अग्रिमम्। आदिमम्। पश्चिमम्। * अन्ताच्च * अन्तिमम्।

२४. विभाषा पूर्वाह्णापराह्णाभ्याम्[7]। पक्षे ठञ्। पूर्वाह्णेतनम्। अपराह्णेतनम्। पौर्वाह्णिकम्। आपराह्णिकम्। पूर्वाह्णः सोढोऽस्येति विग्रहे तु, पूर्वाह्णतनम्। अपराह्णतनम्।

२५. तत्र जातः। स्रुघ्ने जातः, स्रौघ्नः। औत्सः। राष्ट्रियः—इत्यादि।

२६. प्रावृषष्ठप्। एण्यस्यापवादः। प्रावृषि जातः, प्रावृषिकः।

२७. संज्ञायां शरदो वुञ्[8]। ऋत्वणोऽपवादः। शारदका दर्भविशेषा मुद्गविशेषाश्च। असंज्ञायान्तु, शारदं सस्यम्।

---

१. द्वारादीनाञ्चेति ऐजागमः। २. स्वरे भेदः। ३. योगविभाग उत्तरार्थः। ४. सर्वत्र वेदे लोके च। पक्षे ऋत्वण्। ५. तुटः प्रागन्तादेशः। अनद्यतन इत्यादिनिर्देशात्। ६. प्राह्णे प्रगे-इत्येदन्तत्वं च निपात्यते। ७. घकालतनेष्वित्यलुक्। ८. संज्ञायामिति कृतलब्धक्रीतकुशला इति यावत्केचिदनुवर्त्तयन्ति।

२८. पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन्। पूर्वाह्णकः। अपराह्णकः। आर्द्रकः। मूलकः। प्रदोषकः। अवस्करकः।

२९. पथः पन्थ च। पथि जातः, पन्थकः।

३०. अमावस्याया वा। अमावस्यकः। आमावस्यः।

३१. अ च। अमावस्यः।

३२. सिन्ध्वपकराभ्यां कन्। सिन्धुकः[१]। अपकरकः[२]।

३३. अणञौ च। सैन्धवः। आपकरः।

३४. श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्। श्रविष्ठासु जातः, श्रविष्ठः। फल्गुनः। अनुराधः। स्वातिः। तिष्यः। पुनर्वसुः। हस्तः। विशाखः। अषाढः। बहुलः। * चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् * चित्रायां जाता, चित्रा। रेवती[३]। रोहिणी। * फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ * फल्गुनी। अषाढा। * श्रविष्ठाषाढाभ्यां छण् वक्तव्यः * अस्त्रियामपि। श्राविष्ठीयः। आषाढीयः।

३५. स्थानान्तगोशालखरशालाच्च। गोस्थानः। गोशालः[४]। खरशालः।

३६. वत्सशालाभिजिदश्वयुक्शतभिषजो वा। वत्सशाले जातः, वत्सशालः, वात्सशालः। अभिजित्, आभिजितः। अश्वयुक्, आश्वयुजः * जातार्थे प्रतिप्रसूतोऽण्वा डिद्वक्तव्यः * शातभिषः, शातभिषजः, शतभिषक्।

३७. नक्षत्रेभ्यो बहुलम्। रोहिणः। रौहिणः।

३८. कृतलब्धक्रीतकुशलाः। स्रुघ्ने कृतः, लब्धः, क्रीतः, कुशलो वा स्रौघ्नः।

३९. प्रायभवः। स्रुघ्ने प्रायेण[५] भवति, स्रौघ्नः।

४०. उपजानूपकर्णोपनीवेष्ठक्। औपजानुकः। औपकर्णिकः। औपनीविकः।

४१. संभूते। स्रुघ्ने संभवति, स्रौघ्नः।

---

१. कच्छाद्यणि मनुष्यवुञि च प्राप्ते कन्। २. औत्सर्गिकेऽणि प्राप्ते। ३. रेवतीरोहिणीभ्यां लुक्तद्धितेति लुकि पिप्पल्यादेराकृतिगणत्वान्ङीष्। ४. विभाषा सेनेति ह्रस्वत्वम्। ५. बाहुल्येन।

४२. कोशाड्ढञ्।  कौशेयम्[1] वस्त्रम्।

४३. कालात्साधुपुष्प्यत्पच्यमानेषु। हेमन्ते साधुर्हैमन्तः प्राकारः। वसन्ते पुष्प्यन्ति, वासन्त्यः कुन्दलताः। शरदि पच्यन्ते, शारदाः शालयः।

४४. उप्ते च। हेमन्ते उप्यन्ते, हैमन्ता यवाः।

४५. आश्वयुज्या वुञ्। ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः।

४६. ग्रीष्मवसन्तादन्यतरस्याम्। पक्षे ऋत्वण्। ग्रैष्मकम्, ग्रैष्मम्। वासन्तकम्, वासन्तम्।

४७. देयमृणे[2]। मासे देयमृणं मासिकम्।

४८. कलाप्यश्वत्थयवबुसाद् वुन्। यस्मिन्काले मयूराः कलापिनो भवन्ति स कलापी तत्र देयमृणं कलापकम्। अश्वत्था यस्मिन् फलन्ति स कालोऽश्वत्थस्तत्र देयमृणमश्वत्थकम्। यस्मिन्यवबुसमुत्पद्यते तत्र देयं यवबुसकम्।

४९. ग्रीष्मावरसमाद् वुञ्। ग्रैष्मकम्। आवरसमकम्।

५०. संवत्सराग्रहायणीभ्यां ठञ्च। सांवत्सररिकम्, सांवत्सरकम्। आग्रहायणिकम्, आग्रहायणकम्।

५१. व्याहरति मृगः। निशायां व्याहरति, नैशो नैशिको वा मृगः।

५२. तदस्य सोढम्[3]। निशासहचरितमध्ययनं निशा, तत्सोढमस्य, नैशः। नैशिकः।

५३. तत्र भवः। स्रुघ्ने भवः, स्रौघ्नः। राष्ट्रियः।

५४. दिगादिभ्यो यत्। दिश्यम्। वर्ग्यम्।

५५. शरीरावयवाच्च। दन्त्यम्। कर्ण्यम्।

५६. दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्। दार्त्तेयम्। कौक्षेयम्। कालशेयम्। वास्तेयम्। आस्तेयम्। आहेयम्।

५७. ग्रीवाभ्योऽण् च। ग्रैवेयम्, ग्रैवम्।

५८. गम्भीराञ्ञ्यः। गाम्भीर्यम्।

५९. अव्ययीभावाच्च। परिमुखं भवं पारिमुख्यम्। * परिमुखादिभ्य एवेष्यते * नेह :—औपकूलः।

---

१. कोशे संभूतमिति विग्रहः। २. कालादित्येव। ३. कालादित्येव।

६०. **अन्तःपूर्वपदाट्ठञ्** । अन्तर्वेश्मं भवमान्तर्वेश्मिकम् । आन्तर्गणिकम् । * अध्यात्मादेष्ठञिष्यते * अध्यात्मं भवमाध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् ।

६१. **ग्रामात्पर्यनुपूर्वात्**[1] । पारिग्रामिकः । आनुग्रामिकः ।

६२. **जिह्वामूलाङ्गुलेश्छः** । जिह्वामूलीयम् । अङ्गुलीयम् ।

६३. **वर्गान्ताच्च** । कवर्गीयम् ।

६४. **अशब्दे यत्खावन्यतरस्याम्** । मद्वर्ग्यः । मद्वर्गीणः । शब्दे तु कवर्गीयो वर्णः ।

६५. **कर्णललाटात्कनलङ्कारे** । कर्णिका । ललाटिका ।

६६. **तस्य व्याख्यान इति च**[2] **व्याख्यातव्यनाम्नः** । सुपां व्याख्यानः, सौपो ग्रन्थः । तैङः । कार्त्तः । सुप्सु भवं सौपम् ।

६७. **बह्वचोऽन्तोदात्ताट्ठञ्** । षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वं तस्य व्याख्यानस्तत्र भवो वा, षात्वणत्विकः ।

६८. **क्रतुयज्ञेभ्यश्च**[3] । आग्निष्टोमिकः । वाजपेयिकः । पाकयज्ञिकः । नावयज्ञिकः ।

६९. **अध्यायेष्वेवर्षेः**[4] । वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा, वासिष्ठिकोऽध्यायः । अन्यत्र वासिष्ठी ऋक् ।

७०. **पौरोडाशपुरोडाशात्ष्ठन्** । पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः । पौरोडाशिकः ।

७१. **छन्दसो यदणौ** । छन्दस्यः । छान्दसः ।

७२. **द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्** । ऐष्टिकः । पाशुकः । चातुर्होतृकः । ब्राह्मणिकः । आर्चिकः । प्राथमिकः । आध्वरिकः । पौरश्चरणिकः । नामाख्यातग्रहणं संघातविगृहीतार्थम् । नामिकः । आख्यातिकः । नामाख्यातिकः ।

---

१. अव्ययीभावादिति वर्त्तते । २. चात्पूर्वोक्ते तत्र भव इत्यर्थे । ३. बहुवचनं स्वरूपविधिनिरासार्थम् । अन्यतरग्रहणेन सिद्धे उभयोपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अनन्तोदात्तार्थ आरम्भः । ४. ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्य इत्यर्थः ।

७३. अणृगयनादिभ्यः। ठञादेरपवादः। आर्गयनः। औपनिषदः। वैयाकरणः।

७४. तत आगतः। स्रुघ्नादागतः, स्रौघ्नः।

७५. ठगायस्थानेभ्यः। शुल्कशालाया आगतः, शौल्कशालिकः।

७६. शुण्डिकादिभ्योऽण्। आयस्थानठकश्छादीनां चापवादः। शुण्डिकादागतः, शौण्डिकः। कार्कणः। तैर्थः।

७७. विद्यायोनिसम्बन्धेभ्यो वुञ्। औपाध्यायकः। पैतामहकः।

७८. ऋतष्ठञ्। वुञोऽपवादः। हौतृकम्। भ्रातृकम्।

७९. पितुर्यच्च। चाट्ठञ्। पित्र्यम्[1]। पैतृकम्।

८०. गोत्रादङ्कवत्। बिदेभ्य आगतं बैदम्, गार्गम्। दाक्षम्, औपगवकम्।

८१. हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः। समरूप्यम्। विषमरूप्यम्। समीयम्[2]। विषमीयम्। देवदत्तरूप्यम्, देवदत्तीयम्, दैवदत्तम्।

८२. मयट् च। सममयम्। विषममयम्। देवदत्तमयम्।

८३. प्रभवति[3]। हिमवतः प्रभवति, हैमवती गङ्गा। दारदी सिन्धुः।

८४. विदूराञ्ञ्यः। अणोऽपवादः। विदूरात्प्रभवति, वैदूर्यो मणिः।

८५. तद्गच्छति पथिदूतयोः। स्रुघ्नं गच्छति, स्रौघ्नः पन्था दूतो वा।

८६. अभिनिष्क्रामति द्वारम्। स्रुघ्नमभिनिष्क्रामति, स्रौघ्नं कान्यकुब्जद्वारम्।

८७. अधिकृत्य[4] कृते ग्रन्थे। शारीरकमधिकृत्य कृतो ग्रन्थः, शारीरकीयः[5]।

८८. शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः। अणोऽपवादः। शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः, शिशुक्रन्दीयः। यमसभीयः। किरातार्जुनीयम्। इन्द्रजननीयम्। विरुद्धभोजनीयम्।

८९. सोऽस्य निवासः। स्रौघ्नः। माथुरः।

९०. अभिजनश्च[6]। स्रौघ्नः।

९१. आयुधजीविभ्यश्छः पर्वते। हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते हृद्गोलीयाः। अन्यत्र ऋक्षोदोऽभिजनो येषाम्, आर्क्षोदा द्विजाः।

---

१. रीङृतः। यस्येति लोपः। २. पक्षे गहादित्वाच्छः। ३. तत इत्येव। ४. तदित्येव। ५. शारीरकम्भाष्यमिति त्वभेदोपचारात्। ६. यत्र स्वयं वसति स निवासः। यत्र पूर्वैरुषितं सोऽभिजन इति विवेकः।

९२. शण्डिकादिभ्यो ञ्यः । शण्डिकोभिजनोऽस्य, शाण्डिक्यः ।

९३. सिन्धुतक्षशिलादिभ्योऽणञौ । सैन्धवः । ताक्षशिलः ।

९४. तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः । तूदी अभिजनोऽस्य, तौदेयः । शालातुरीयः । वार्मतेयः । कौचवार्यः ।

९५. भक्तिः[1] । स्रुघ्नो भक्तिरस्य, स्रौघ्नः ।

९६. अचित्ताददेशकालाट्ठक् । अपूपा भक्तिरस्यापूपिकः । पायसिकः ।

९७. महाराजाट्ठञ् । माहाराजिकः ।

९८. वासुदेवार्जुनाभ्यां वुन् । वासुदेवकः । अर्जुनकः ।

९९. गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् । अणोऽपवादः । ग्लुचुकायनिर्भक्तिरस्य, ग्लौचुकायनकः । नाकुलकः । बहुलग्रहणान्नेह :– पाणिनो भक्तिरस्य, पाणिनीयः ।

१००. जनपदिनां[2] जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने । अङ्गा जनपदः क्षत्रिया वा भक्तिरस्याङ्गकः ।

१०१. तेन प्रोक्तम् । पाणिनिना प्रोक्तं पाणिनीयम् । आपिशलम्, काशकृत्स्नम् ।

१०२. तित्तिरिवरतन्तुखण्डिकोखाच्छण् । अणोऽपवादः । तित्तिरिणा प्रोक्तमधीयते, तैत्तिरीयाः । वारतन्तवीयाः । खाण्डकीयाः । औखीयाः ।

१०३. काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । काश्यपिनः । कौशिकिनः ।

१०४. कलापिवैशम्पायनान्तेवासिभ्यश्च । हरिद्रुणा[3] प्रोक्तमधीयते, हारिद्रविणः । आलम्बिना[4], आलम्बिनः ।

१०५ पुराणप्रोक्तेषु[5] ब्राह्मणकल्पेषु । ब्राह्मणेषु भल्लु–भाल्लविनः । शाट्यायन-शाट्यायनिनः । पिङ्गेन प्रोक्तः, पैङ्गी कल्पः । नेह:– याज्ञवल्क्यानि[6] ब्राह्मणानि । आश्मरथः कल्पः ।

---

१. सोऽस्येत्यनुवर्त्तते । भज्यते सेव्यत इति, भक्तिः । कर्मणि क्तिन् । २. जनपदस्वामिनामित्यर्थः । ३. कलाप्यन्तेवास्ययम् । कलाप्यन्तेवासिनश्चत्वार :— हरिद्रु-छगली-तुम्बुरु–उलपेति । ४. वैशम्पायनान्तेवासिनो नव आलम्बि-पलङ्ग-कमल-ऋचाभ-आरुणि-ताण्ड्य–श्यामायमान–कठ–कलापीति । ५. पुराणेन चिरन्तनेन मुनिना प्रोक्ताश्चेद् ब्राह्मणकल्पास्तेषु वाच्येष्वित्यर्थः । ६. याज्ञवल्क्यादयोऽचिरकाला इत्याख्यानेषु वार्त्ता । कण्वादौ पाठादण् ।

१०६. शौनकादिभ्यश्छन्दसि। शौनकेन प्रोक्तमधीयते, शौनकिनः। वाजसनेयिनः।

१०७. कठचरकाल्लुक्। कठाः। चरकाः।

१०८. कलापिनोऽण्। कलापिना प्रोक्तमधीयते, कालापाः[1]।

१०९. छगलिनो ढिनुक्। छगलिना, छागलेयिनः।

११०. पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते, पाराशरिणो भिक्षवः। शैलालिनो नटाः।

१११. कर्मन्दकृशाश्वादिनिः[2]। कर्मन्देन, कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः।

११२. तेनैकदिक्। सुदाम्ना आद्रिणा एकदिक्, सौदामनी।

११३. तसिश्च। पीलुमूलेन एकदिक्, पीलुमूलतः।

११४. उरसो यच्च। उरसा एक दिक्, उरस्यः, उरस्तः।

११५. उपज्ञाते। पाणिनिनोपज्ञातम्, पाणिनीयम्।

११६. कृते ग्रन्थे। वररुचिना कृतो वाररुचो ग्रन्थः।

११७. संज्ञायाम्[3]। मक्षिकाभिः कृतं माक्षिकं मधु।

११८. कुलालादिभ्यो वुञ्। कौलालकम्, वारुडकम्।

११९. क्षुद्राभ्रमरवटरपादपादञ्। क्षुद्राभिः कृतं क्षौद्रम्। भ्रामरम्। वाटरम्। पादपम्।

१२०. तस्येदम्। उपगोरिदमौपगवम्। * वहेस्तुरणिट् च * संवोढुः स्वम्, सांवहित्रम्। * अग्नीधः शरणे रण् भं च * अग्नीधः स्थानमाग्नीध्रम्। तात्स्थ्यात्सोऽप्याग्नीध्रः। * समिधामाधाने षेण्यण् * सामिधेन्यो मन्त्रः। सामिधेनी ऋक्।

१२१. रथाद्यत्। रथ्यं चक्रम्।

१२२. पत्रपूर्वादञ्। आश्वरथम्।

१२३ पत्राध्वर्युपरिषदश्च। * पत्राद्वाह्ये * अश्वस्य वाह्यमाश्वम्। आध्वर्यवम्। पारिषदम्।

---

१. नान्तस्य टिलोपे सब्रह्मचारीत्यादिना टिलोपः। २. भिक्षुनटसूत्रयोरित्येव। ३. अग्रन्थार्थमिदम्।

१२४. हलसीराट्ठक्। हालिकम्। सैरिकम्।

१२५. द्वन्द्वाद् वुन् वैरमैथुनिकयोः। काकोलूकिका। कुत्सकुशिकिका[1]।

१२६. गोत्रचरणाद् वुञ्। औपगवकम्। * चरणाद्धर्माम्नाययोरिति वक्तव्यम् * काठकम्।

१२७. सङ्घाङ्कलक्षणेष्वञ्यञिञामण्[2]। * घोषग्रहणमपि कर्त्तव्यम् * बैदः सङ्घोऽङ्को घोषो वा। बैदं लक्षणम्। गार्गः। गार्गम्। दाक्षः। दाक्षम्।

१२८. शाकलाद्वा। पक्षे चरणाद् वुञ्। शाकलेन प्रोक्तमधीयते, शाकलाः। तेषां संघोऽङ्को घोषो वा, शाकलः। शाकलकः।

१२९. छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः। छन्दोगानां धर्म आम्नायो वा, छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। नाट्यम्[3]।

१३०. न दण्डमाणवान्तेवासिषु[4]। दाक्षा दण्डमाणवाः शिष्या वा।

१३१. रैवतिकादिभ्यश्छः। वुञोऽपवादः। रैवतिकीयः। बैजवापीयः।

१३२. कौपिञ्जलहास्तिपदादण्। कुपिञ्जलस्यापत्यं कौपिञ्जलः[5]। तस्यायं कौपिञ्जलः। हस्तिपादस्यापत्यं हास्तिपदस्तस्यायं हास्तिपदः।

१३३. आथर्वणिकस्येकलोपश्च[6]। आथर्वणिकस्यायमाथर्वणो धर्म आम्नायो वा।

१३४. तस्य विकारः। अश्मनो विकार आश्मः[7]। भास्मनः। मार्त्तिकः।

१३५. अवयवे च[8] प्राण्योषधिवृक्षेभ्यः। मयूरस्यावयवो विकारो वा, मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्।

१३६. बिल्वादिभ्योऽण्। अञ्मयटोरपवादः। बैल्वम्।

१३७. कोपधाच्च। अञोऽपवादः। तर्कु-तार्कवम्। तैत्तिडिकम्।

१३८. त्रपुजतुनोः षुक्। त्रापुषम्। जातुषम्।

१३९. ओरञ्। दैवदारवम्। भाद्रदारवम्।

---

१. मैथुनिकायाम्। २. परम्परासम्बधोऽङ्कः। साक्षात्तु लक्षणम्। ३. नटशब्दादपि साहचर्याद्धर्माम्नाययोरेव। ४. दण्डप्रधाना माणवा दण्डमाणवास्तेषु शिष्येषु चेत्यर्थः। ५. इहैव निपातनादण्। तदन्तात्पुनरण्। गोत्रवुञोऽपवादः। इदं वार्त्तिकमिति केचित्। ६. अण् स्यात्। इति शैषिकप्रत्ययाः। ७. अश्मनो विकारे टिलोप इति टिलोपः। ८. चाद्विकारेऽपि।

१४०. अनुदात्तादेश्च । दाधित्थम् । कापित्थम् ।

१४१. पलाशादिभ्यो वा । पालाशम् । कारीरम् ।

१४२. शम्याः ष्लञ् । शामीलं भस्म । शामीली स्रुक् ।

१४३. मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । अश्ममयम् । आश्मनम् । भक्ष्याच्छादनयोस्तु, मौद्गः सूपः । कार्पासमाच्छादनम् ।

१४४. नित्यं वृद्धशरादिभ्यः । आम्रमयम् । शरमयम् । * एकाचो नित्यम् * त्वङ्मयम् । वाङ्मयम् । अम्मयम्[१] ।

१४५. गोश्च पुरीषे । गोः पुरीषं गोमयम् ।

१४६. पिष्टाच्च । पिष्टमयं[२] भस्म ।

१४७. संज्ञायां कन् । पूपोऽपूपः पिष्टकः स्यात् ।

१४८. व्रीहेः पुरोडाशे । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ।

१४९. असंज्ञायां तिलयवाभ्याम् । तिलमयम् । यवमयम् । संज्ञायां तु, तैलम् । यावकः[३] ।

१५०. द्व्यचश्छन्दसि । शरमयं बर्हिः । यस्य पर्णमयी जुहूः ।

१५१. नोत्वद्वर्ध्रबिल्वात् । मौञ्जं शिक्यम् । वार्ध्री रज्जुः । बैल्वो यूपः ।

१५२. तालादिभ्योऽण् । अण्मयटोरपवादः । * तालाद्धनुषि * तालं धनुः । अन्यत्तालमयम् । ऐन्द्रायुधम् ।

१५३. जातरूपेभ्यः[४] परिमाणे । हाटकस्तापनीयः सौवर्णो वा निष्कः । अन्यत्र हाटकमयी यष्टिः ।

१५४. प्राणिरजतादिभ्योऽञ् । शौकम् । वाकम् । राजतम् ।

१५५. ञितश्च तत्प्रत्ययात् । शामीलस्य, शामीलम् । दाधित्थम् । कापित्थम् । ञिद्भिन्ने बैल्वमयम् ।

१५६. क्रीतवत्परिमाणात्[५] । अणादीनामपवादः । निष्केण क्रीतः, तस्य विकारो वा नैष्किकः । शत्यः । शतिकः ।

---

१. प्रत्यये भाषायां नित्यमित्यनुनासिकत्वम् । आप्यमिति तु तस्येदमित्यणन्तात्स्वार्थे ष्यञ् । २. पैष्टी सुरेति तु तस्येदमित्यणि । ३. यवस्य विकारो यावः । याव एव यावकः । यावादिभ्यः कन् । ४. बहुवचनात्पर्यायग्रहणम् । ५. क्रीतेऽर्थे ये प्रत्ययास्तेऽत्रातिदिश्यन्ते ।

१५७. उष्ट्राद् वुञ्। प्राण्यञोऽपवादः। औष्ट्रकः।

१५८. उमोर्णयोर्वा। औमकम्, औमम्। और्णकम्, और्णम्।

१५९. एण्या ढञ्। ऐणेयम्। एणस्य तु, ऐणम्।

१६०. गोपयसोर्यत्। गव्यम्। पयस्यम्।

१६१ द्रोश्च। द्रुर्वृक्षस्तस्य विकारोऽवयवो वा, द्रव्यम्।

१६२. माने वयः। द्रुवयम्[1]।

१६३. फले लुक्। आमलक्याः फलमामलकम्।

१६४. प्लक्षादिभ्योऽण्। विधानसामर्थ्यान्न लुक्। प्लाक्षम्। नैयग्रोधम्[2]।

१६५. जम्ब्वा वा। जाम्बवम्। जम्बु।

१६६. लुप् च। जम्बूः। * फलपाकशुषामुपसंख्यानम् * व्रीहयः। मुद्गाः। * पुष्पमूलेषु बहुलम् * मल्लिकायाः पुष्पं मल्लिका। जात्याः पुष्पं जाती। विदार्या मूलं विदारी। बहुलग्रहणान्नेह :– पाटलानि पुष्पाणि। साल्वानि मूलानि। क्वचिल्लुक्। अशोकम् करवीरम्।

१६७. हरीतक्यादिभ्यश्च। हरीतक्याः फलानि, हरीतक्यः।

१६८. कंसीयपरशव्ययोर्यञञौ लुक् च। कंसाय हितं कंसीयं तस्य विकारः, कांस्यम्। परशवे हितं परशव्यं तस्य विकारः, पारशवः।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
चतुर्थाध्यायस्य तृतीयपादः समाप्तः।



१. यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्। २. न्यग्रोधस्य च केवलस्येति न वृद्धिः। नैयग्रोधः।

# अथ चतुर्थाध्यायस्य चतुर्थपादः ।



१. प्राग्वहतेष्ठक् । तद्वहतीत्यतः प्रागधिकारोऽयम् * तदाहेति माशब्दादिभ्य उपसंख्यानम् * मा शब्दः कारीति य आह स माशब्दिकः। स्वागतमिति य आह स स्वागतिकः[1] । * आहौ प्रभूतादिभ्यः * प्रभूतमाह, प्राभूतिकः । पार्याप्तिकः । * पृच्छतौ सुस्नातादिभ्यः * सुस्नातं पृच्छति, सौस्नातिकः । सौखशायनिकः[2] । * गच्छतौ परदारादिभ्यः * पारदारिकः । गौरुतल्पिकः ।

२. तेन दीव्यति खनति जयति जितम् । अक्षैर्दीव्यति, आक्षिकः । अभ्र्या खनति, आभ्रिकः । अक्षैर्जयति, आक्षिकः । जितमाक्षिकम् ।

३. संस्कृतम् । दध्ना संस्कृतं दाधिकम् । मारीचिकम् ।

४. कुलत्थकोपधादण् । ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् । तैत्तिडीकम् ।

५. तरति । उडुपेन तरति, औडुपिकः ।

६. गोपुच्छाट्ठञ् । गौपुच्छिकः ।

७. नौद्व्यचष्ठन् । नावा तरति, नाविकः । घटिकः । प्लविकः । बाहुकः । बाहुका[3] ।

८. चरति[4] । हास्तिकः । शाकटिकः । दाधिकः ।

९. आकर्षात्ष्ठल्[5] । आकर्षिकः । आकर्षिकी ।

१०. पर्पादिभ्यः ष्ठन् । पर्पिकः[6] । पर्पिकी । अश्विक. । रथिकः ।

११. श्वगणाट्ठञ्च । चात्ष्ठन् । श्वागणिकः[7] । श्वगणिकः । श्वागणिकी[7] । श्वगणिकी ।

---

१. स्वागतादीनां चेति ऐजागमनिषेधः । २. अनुशतिकादिः । ३. संहिताप्रयुक्तः षकारो नानुबन्ध इति न ङीष् । ४. गच्छति भक्षयतीत्यर्थे च । ५. आकर्षो निकषोपलः । आकषादिति पाठान्तरम् । ६. येन पीठेन पङ्ग्वश्चरन्ति स पर्पः । ७. श्वादेरिञीति सूत्रे इकारादाविति वाच्यमिति नैच् ।

१२. वेतनादिभ्यो जीवति । वेतनेन जीवति, वैतनिकः । धानुष्कः ।

१३. वस्नक्रयविक्रयाट्ठन् । वस्निकः[1] । क्रयविक्रयग्रहणं संघातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ।

१४. आयुधाच्छ च । आयुधीयः । आयुधिकः ।

१५. हरत्युत्सङ्गादिभ्यः । उत्सङ्गेन हरति, औत्सङ्गिकः । औडुपिकः ।

१६. भस्त्रादिभ्यः ष्ठन् । भस्त्रया भस्त्रिकः । भस्त्रिकी ।

१७. विभाषा विवधात् । विवधिकः[2] । वैवधिकः । एकदेशविकृतस्यानन्यत्वाद्वीवधादपि । वीवधिकः । वीवधिकी ।

१८. अण् कुटिलिकायाः । कुटिलिकया[3] हरति, कौटिलिको व्याधः कर्मारश्च ।

१९. निर्वृत्तेऽक्षद्यूतादिभ्यः । अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् ।

२०. क्त्रेर्मम्नित्यम् । कृत्या निर्वृत्तं, कृत्रिमम् । पक्त्रिमम् । * भावप्रत्ययान्तादिमब्वक्तव्यः * पाकिमम् । त्यागिमम् ।

२१. अपमित्ययाचिताभ्यां कक्कनौ । अपमित्य निर्वृत्तमापमित्यकम् । याचितकम् ।

२२. संसृष्टे । दध्ना संसृष्टं दाधिकम् ।

२३. चूर्णादिनिः । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः ।

२४. लवणाल्लुक् । लवणः सूपः । लवणं शाकम् ।

२५. मुद्गादण् । मौद्ग ओदनः ।

२६. व्यञ्जनैरुपसिक्ते । दध्ना उपसिक्तम्, दाधिकम् ।

२७. ओजःसहोऽम्भसा वर्त्तते । ओजसा वर्त्तते, औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ।

२८. तत्प्रत्यनुपूर्वमीपलोमकूलम् । प्रतीपं वर्त्तते, प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः ।

२९. परिमुखं च । पारिमुखिकः । चात् पारिपार्श्विकः ।

---

१. वस्नेन मूल्येन जीवति । २. विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्त्तेते । ३. कुटिलिका व्याधानां गतिविशेषः कर्मारोपकरणं च ।

३० प्रयच्छति गर्ह्यम् । द्विगुणार्थं द्विगुणं प्रयच्छति, द्वैगुणिकः । त्रैगुणिकः । * वृद्धेर्वृधुषिभावो वक्तव्यः * वार्धुषिकः ।

३१. कुसीददशैकादशात् ष्ठन्ष्ठचौ । कुसीदार्थं द्रव्यं कुसीदं प्रयच्छति, कुसीदिकः । कुसीदिकी । दशैकादशिकः[1] । दशैकादशिकी ।

३२. उञ्छति । बदराण्युञ्छति, बादरिकः ।

३३. रक्षति । समाजं रक्षति, सामाजिकः ।

३४. शब्ददर्दुरं करोति । शब्दं करोति, शाब्दिकः । दार्दुरिकः ।

३५. पक्षिमत्स्यमृगान्[2] हन्ति । पक्षिणो हन्ति, पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः ।

३६. परिपन्थं[3] च तिष्ठति । पारिपन्थिकश्चौरः ।

३७. माथोत्तरपदपदव्यनुपदं धावति । दण्डमाथं[4] धावति, दाण्डमाथिकः । पादविकः । आनुपदिकः ।

३८. आक्रन्दाट्ठञ्च । आक्रन्दं दुःखिनां रोदनस्थानं धावति, आक्रन्दिकः ।

३९. पदोत्तरपदं गृह्णाति । पौर्वपदिकः । औत्तरपदिकः ।

४०. प्रतिकण्ठार्थललामञ्च । प्रातिकण्ठिकः । आर्थिकः । लालामिकः ।

४१. धर्मं चरति । धार्मिकः । * अधर्माच्चेति वक्तव्यम् * अधार्मिकः ।

४२. प्रतिपथमेति ठञ्च । प्रातिपथिकः ।

४३. समवायान्त्समवैति । सामवायिकः । सामूहिकः ।

४४. परिषदो ण्यः । परिषदं समवैति, पारिषद्यः ।

४५. सेनाया वा । सैन्याः, सैनिकाः ।

४६. संज्ञायां ललाटकुक्कुट्यौ पश्यति । ललाटं पश्यति, लालाटिकः सेवकः । कौक्कुटिको[5] भिक्षुः ।

---

१. एकादशार्थत्वादेकादश ते च वस्तुतो दश चेति विग्रहेऽकारः समासान्त इहैव निपात्यते । एकादशार्थं दश प्रयच्छतीत्यर्थः । २. स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्य्यायेषु मीनस्यैव । ३. चाद्धन्तीत्यर्थेऽपि । परिपन्थं हन्ति तिष्ठति वेत्यर्थः । परिपथपर्यायः परिपन्थशब्दोऽप्यस्तीति ज्ञाप्यते । ४. दण्डकारं माथं पन्थानमित्यर्थः । ५. कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते ।

४७. तस्य धर्म्यम् । आपणस्य धर्म्यम्, आपणिकम् ।

४८. अरण्महिष्यादिभ्यः । महिष्या माहिषम् । याजमानम् ।

४९. ऋतोऽञ् । यातुर्यात्रम् । * नराच्चेति वक्तव्यम् * नरस्य धर्म्या नारी । * विशसितुरिड्लोपश्चाञ्च वक्तव्यः * वैशस्त्रम् । * विभाजयितुर्णिलोपश्चाञ्च वक्तव्यः । वैभाजित्रम् ।

५०. अवक्रयः[1] । आपणस्य आपणिकः ।

५१. तदस्य पण्यम् । अपूपाः पण्यमस्यापूपिकः ।

५२. लवणाट्ठञ् । लावणिकः ।

५३. किसरादिभ्यः ष्ठन् । किसरिकः[2] । किसरिकी ।

५४. शलालुनोऽन्यतरस्याम् । शलालुकः[2] । शलालुकी । शालालुकः । शालालुकी ।

५५. शिल्पम् । मृदङ्गवादनं शिल्पमस्य, मार्दङ्गिकः ।

५६. मड्डुकझर्झरादणन्यतरस्याम् । माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ।

५७. प्रहरणम् । असिः प्रहरणमस्य, आसिकः । धानुष्कः ।

५८. परश्वधाच्च । पारश्वधिकः ।

५९. शक्तियष्ट्योरीकक् । शाक्तीकः । याष्टीकः ।

६०. अस्ति नास्ति दिष्टं मतिः । अस्ति परलोक इति मतिर्यस्य, आस्तिकः । नास्तिकः । दैष्टिकः[3] ।

६१. शीलम् । अपूपभक्षणं शीलमस्य, आपूपिकः ।

६२. छत्रादिभ्यो णः । छात्रः[4] ।

६३. कर्माध्ययने वृत्तम् । एकं कर्मान्यद् वृत्तं यस्य, ऐकान्यिकः[5] ।

६४. बह्वच्पूर्वाट्ठञ् । द्वादशान्यिकः[6] ।

६५. हितं भक्षाः । अपूपभक्षणं हितमस्मै, आपूपिकः ।

---

१. राजग्राह्यं द्रव्यमवक्रयः । २. शलालुः किसरश्च सुगन्धिद्रव्यविशेषः । ३. दिष्टं दैवम् । ४. गुरोर्दोषावरणं छत्रं शीलमस्य । ५. यस्याध्ययने प्रवृत्तस्य परीक्षाकाले एकं विपरीतं जातं स इत्यर्थः । ६. द्वादशापपाठा अस्य जाता इत्यर्थः ।

६६. तदस्मै दीयते नियुक्तम्। अग्रभोजनं नियतं दीयतेऽस्मै, आग्रभोजनिकः।

६७. श्राणामांसौदनाट्टिठन्[1]। श्राणिकः। मांसौदनिकः। मांसिकः। औदनिकः।

६८. भक्तादणन्यतरस्याम्। भाक्तः, भाक्तिकः।

६९. तत्र नियुक्तः। आकरिकः। आपणिकः।

७०. अगारान्ताट्ठन्। देवागारे नियुक्तो देवागारिकः।

७१. अध्यायिन्यदेशकालात्। श्मशानेऽधीते, श्माशानिकः। चातुर्दशिकः।

७२. कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति। वंशकठिने[2] देशे व्यवहरति, वांशकठिनिकः। प्रास्तारिकः। सांस्थानिकः।

७३. निकटे वसति। नैकटिको भिक्षुः।

७४. आवसथात् ष्ठल्। आवसथिकः। आवसथिकी[3]।

७५. प्राग्घिताद्यत्। तस्मै हितमित्यतः प्राग्यदधिक्रियते।

७६. तद्वहति रथयुगप्रासङ्गम्। रथं वहति, रथ्यः। युग्यः। प्रासङ्ग्यः[4]।

७७. धुरो यड्ढकौ। धुर्यः[5]। धौरेयः।

७८. खः सर्वधुरात्। सर्वधुरीणः।

७९. एकधुराल्लुक् च। एकधुरीणः। एकधुरः।

८०. शकटादण्। शाकटो गौः।

८१. हलसीराट्ठक्। हालिकः। सैरिकः।

८२. संज्ञायां जन्या। जनीं वधूं वहति, जन्या।

८३. विध्यत्यधनुषा। पादौ विध्यन्ति, पद्याः शर्कराः।

८४. धनगणं लब्धा। धनं लब्धा, धन्यः। गण्यः।

८५. अन्नाण्णः। आन्नः।

---

१. मांसौदनग्रहणं संघातविगृहीतार्थम्। २. वंशा वेणवः कठिना यस्मिन्देशे तस्मिन्देशे या क्रिया यथानुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः। ३. इति ठकोऽवधिः समाप्तः। ४. वत्सानां दमनार्थं स्कन्धे यत्काष्ठमासज्यते स प्रासङ्गः। ५. न भकुर्छुरामिति दीर्घनिषेधः।

८६. वशं गतः। वश्यः परेच्छानुचारी।

८७. पदमस्मिन्दृश्यम्। पद्यः कर्दमः[1]।

८८. मूलमस्यावर्हि[2]। मूल्या मुद्गाः।

८९. संज्ञायां धेनुष्या। धेनुष्या[3] बन्धके स्थिता।

९०. गृहपतिना संयुक्ते ञ्यः। गार्हपत्योऽग्निः।

९१. नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु। नावा तार्यं नाव्यम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। मूलेनानाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितं सीत्यं क्षेत्रम्। तुलया संमितं तुल्यम्।

९२. धर्मपथ्यर्थन्यायादनपेते। धर्मादनपेतं धर्म्यम्। पथ्यम्। अर्थ्यम्। न्याय्यम्।

९३. छन्दसो निर्मिते। छन्दसा निर्मितं छन्दस्यम्[4]।

९४. उरसोऽण् च। औरसः, उरस्यः पुत्रः।

९५. हृदयस्य प्रियः। हृद्यो देशः।

९६. बन्धने चर्षौ[5]। हृद्यो वशीकरणमन्त्रः।

९७. मतजनहलात्करणजल्पकर्षेषु। मतस्य करणं[6] मत्यम्। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः।

९८. तत्र साधुः। अग्रे साधुः, अग्र्यः। सामन्यः। कर्मण्यः। शरण्यः।

९९. प्रतिजनादिभ्यः खञ्। प्रतिजनं साधुः, प्रातिजनीनः। सांयुगीनः। सार्वजनीनः। वैश्वजनीनः।

१००. भक्ताण्णः। भक्ते साधवो भाक्ताः शालयः।

१०१. परिषदो ण्यः। पारिषद्यः।

१०२. कथादिभ्यष्ठक्। काथिकः।

१०३. गुडादिभ्यष्ठञ्। गौडिक इक्षुः। साक्तुका यवाः।

---

१. नातिशुष्क इत्यर्थः। २. आबर्ह उत्पाटनम्, तदस्यास्ति, आबर्हि। ३. धेनुशब्दस्य षुगागमो यत्प्रत्ययश्च निपात्यते। ४. इच्छया कृतमित्यर्थः। ५. ऋषिर्वेदमन्त्रः। ६. भावः साधनं वा।

१०४. पथ्यतिथिवसतिस्वपतेर्ढञ्। पाथेयम्। आतिथेयम्। वासतेयो रात्रिः। स्वापतेयं धनम्।

१०५. सभाया यः। सभ्यः।

१०६. ढश्छन्दसि। सभेयो युवा।

१०७. समानतीर्थे वासी[1]। समाने तीर्थे गुरौ वसतीति, सतीर्थ्यः।

१०८. समानोदरे शयित ओ चोदात्तः। समानोदर्यो भ्राता।

१०९. सोदराद्यः। सोदर्यः।

११०. भवे छन्दसि[2]। मेध्याय च विद्युत्याय च। आ पादसमाप्तेश्छन्दोधिकारः। मुञ्जवान्नाम पर्वतः, तत्र भवो मौञ्जवतः। सोमस्येव मौञ्जवतस्य भक्षः।

१११. पाथोनदीभ्यां ड्यण्। तमु त्वा पाथ्यो[3] वृषा। चनो दधीत नाद्यो[4] गिरो मे।

११२. वेशन्तहिमवद्भ्यामण्। वैशन्तीभ्यः स्वाहा। हैमवतीभ्यः स्वाहा।

११३. स्रोतसो विभाषा ड्यड्ड्यौ[5]। पक्षे यत्। स्रोतसि भवः, स्रोत्यः। स्रोतस्यः।

११४. सगर्भसयूथसनुताद्यन्[6]। यतोऽपवादः। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्य उत वा जिघत्नु।

११५. तुग्राद्घन्[7]। पक्षे यदपि। आ वः शर्म वृषभं तुग्र्यास्विति बह्वृचाः। तुग्रियास्विति शाखान्तरे।

११६. अग्राद्यत्। अग्र्यम्।

११७. घच्छौ च। चाद्यत्। अग्रियम्। अग्रीयम्।

---

१. साधुरिति निवृत्तम्। २. यथायथं शैषिकाणामणादीनां घादीनां चापवादोऽयम्। पक्षे तेऽपि भवन्ति। सर्वविधीनां छन्दसि वैकल्पिकत्वात्। ३. पाथसि भवः, पाथ्यः। ४. नद्यां भवो नाद्यः। ५. ड्यड्ड्ययोः स्वरे भेदः। ६. सगर्भादयस्त्रयोऽमी कर्मधारयाः। समानस्य छन्दसीति सः। नुतिर्नुतम्। ७. धनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः।

११८. समुद्राभ्राद्धः[1]। समुद्रिया अप्सरसो मनीषिणम्। नानदतो अभ्रियस्येव घोषाः।

११९. बर्हिषि दत्तम्[2]। बर्हिष्येषु निधिषु प्रियेषु।

१२०. दूतस्य भागकर्मणी[3]। दूत्यम्।

१२१. रक्षोयातूनां हननी। या ते अग्ने रक्षस्या[4] तनूः। यातव्या[5]।

१२२. रेवतीजगतीहविष्याभ्यः प्रशस्ये। रेवत्यादीनां प्रशंसनं रेवत्यम्। जगत्यम्। हविष्यम्।

१२३. असुरस्य स्वम्। असुर्यं देवेभिर्धायि विश्वम्।

१२४. मायायामण्। आसुरी माया।

१२५. तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः। वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्याः। ऋतव्याः।

१२६. अश्विमानण्। आश्विनीरुपदधाति।

१२७. वयस्यासु मूर्ध्नो[6] मतुप्। मूर्धन्वतीरुपदधाति[7]।

१२८. मत्वर्थे मासतन्वोः। नभोऽभ्रं तदस्मिन्नस्तीति नभस्यो मासः। ओजस्या तनूः।

१२९. मधोर्ञ च। माधवः। मधव्यः।

१३०. ओजसोऽहनि यत्खौ। ओजस्यमहः। ओजसीनं वा।

१३१–१३२. वेशोयशआदेर्भगाद्यल्खौ। यथासंख्यं नेष्यते। वेशोभग्यः, वेशोभगीनः। यशोभग्यः, यशोभगीनः।

१३३. पूर्वैः कृतमिनयौ च। गम्भीरेभिः पथिभिः पूर्विणेभिः। ये ते पन्थाः सवितः पूर्व्यासः।

१३४. अद्भिः संस्कृतम्। यस्येदमप्यं हविः।

१३५. सहस्रेण सम्मितौ घः[8]। सहस्रियासो अपां नोर्मयः।

---

१. इदं सूत्रं यावद् भव इत्यनुवर्त्तते। २. प्राग्घिताद्यदित्येव। ३. भागोंऽशः ४. रक्षसां हननी। ५. यातूनां हननी। ६. वयःशब्दवन्मन्त्रोपधेयास्वित्यर्थः। पूर्वसूत्रं सर्वमिहानुवर्त्तते। ७. मूर्धवयःशब्दौ यत्र स्तस्तन्मन्त्रोपधाना इष्टका इत्यर्थः। ८. सहस्रेण तुल्या इत्यर्थः।

१३६. मतौ[1] च । सहस्रमस्यास्तीति, सहस्रियः ।

१३७. सोमर्महति यः । सोम्यो ब्राह्मणः ।

१३८. मये[2] च । सोम्यं मधु ।

१३९. मधोः । मधव्यः[3] ।

१४०. वसोः समूहे च । वसव्यः । * अक्षरसमूहे छन्दस उपसंख्यानम् * एष सप्तदशाक्षरश्छन्दस्यः ।

१४१. नक्षत्राद्धः[4] । नक्षत्रियेभ्यः स्वाहा ।

१४२. सर्वदेवात्तातिल् । सविता नः सुवतु सर्वतातिम् । प्रदक्षिणिद्देवतातिमुराणः ।

१४३. शिवशमरिष्टस्य करे[5] । शिवं करोति, शिवतातिः । याभिः शन्ताती भवथो दाशुषे । अथो अरिष्टतातये ।

१४४. भावे च । शिवस्य भावः, शिवतातिः । शन्तातिः । अरिष्टतातिः ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
चतुर्थाध्यायस्य चतुर्थपादः समाप्तः ।



१. मतुबर्थ इत्यर्थः । २. मयडर्थे । ३. मधुमय इत्यर्थः । ४. स्वार्थे । ५. पचाद्यच् ।

# अथ पञ्चमाध्यायस्य प्रथमपादः ।



१. प्राक् क्रीताच्छः । तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ।

२. उगवादिभ्यो यत् । छस्यापवादः । शङ्कव्यं दारु । गव्यम् । हविष्यम् । * नाभि नभं च * नभ्योऽक्षः[1] । नभ्यमञ्जनम् । * शुनः सम्प्रसारणं वा च दीर्घत्वम् * शून्यम् । शुन्यम् । * ऊधसोऽनङ् च * ऊधन्यः ।

३. कम्बलाच्च संज्ञायाम् । कम्बल्यमूर्णापलशतम् । अन्यत्र कम्बलीया ऊर्णा ।

४. विभाषा हविरपूपादिभ्यः । आमिक्ष्यमामिक्षीयं वा दधि । पुरोडाश्याः, पुरोडाशीया वा तण्डुलाः । अपूप्यम् , अपूपीयम् ।

५. तस्मै हितम् । वत्सेभ्यो हितो वत्सीयो गोधुक् । शङ्कव्यम् । गव्यम् ।

६. शरीरावयवाद्यत् । दन्त्यम् । कण्ठ्यम् । नस्यम्[2] । नाभ्यम् । शीर्षण्यः[3] ।

७. खलयवमाषतिलवृषब्रह्मणश्च । खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चाद्रथ्या ।

८. अजाविभ्यां थ्यन् । अजथ्या यूथिः । अविथ्या ।

९. आत्मन्विश्वजनभोगोत्तरपदात्खः । आत्मने हितमात्मनीनम् । विश्वजनीनम् । * कर्मधारयादेवेष्यते * नेह :— विश्वजनीयम्[4] । * पञ्चजनादुपसंख्यानम् * पञ्चजनीनम् । * सर्वजनाट्ठञ् खश्च * सार्वजनिकः । सर्वजनीनः । * महाजनाट्ठञ् * माहाजनिकः । मातृभोगीणः । पितृभोगीणः । राजभोगीनः । * आचार्यादणत्वं च * आचार्यभोगीनः ।

१०. सर्वपुरुषाभ्यां णढञौ । * सर्वाण्णो वेति वाच्यम् * सर्वेभ्यो हितं सार्वम् , सर्वीयम् । * पुरुषाद्वधविकारसमूहतेनकृतेषु[5] * पुरुषस्य वधो विकारो वा, पौरुषेयः । पुरुषाणां समूहः, तेन कृतो वा, पौरुषेयः ।

---

१. रथनाभावेवेदम् । २. नस् नासिकायाः । ३. ये च तद्धित इति शीर्षन्नादेशः । ४. षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव । ५. भाष्यवचनात्तेनेत्यस्य द्वन्द्वमध्ये निवेशः ।

११. माणवचरकाभ्यां खञ्। माणवीनम्। चारकीणम्।

१२. तदर्थं विकृतेः प्रकृतौ। अङ्गारेभ्य एतानि, अङ्गारीयाणि काष्ठानि। ाकारीया इष्टकाः। शङ्कव्यम्।

१३. छदिरुपधिबलेर्ढञ्। छादिषेयाणि तृणानि। बालेयास्तण्डुलाः। उपधिशब्दात्स्वार्थ इष्यते * उपधिरेवौपधेयम्[1]।

१४. ऋषभोपानहोर्ञ्यः। छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो ञ्जः। औपानह्यं चर्म[2]।

१५. चर्मणोऽञ्। वध्र्यै इदं वाध्रं चर्म। वारत्रं चर्म।

१६. तदस्य तदस्मिन् स्यादिति[3]। प्राकार आसां स्यादिति, प्राका-या इष्टकाः। प्रासादीयं दारु। प्राकारीयो देशः।

१७. परिखाया ढञ्। पारिखेयी भूमिः।

१८. प्राग्वतेष्ठञ्। अधिक्रियते।

१९. आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्[4]। ठञोऽपवादः। नैष्किकम्। णिकम्। गोपुच्छसंख्यापरिमाणात्तु ठञेव। गौपुच्छिकम्। षाष्टिकम्। प्रास्थि-ः।

२०. असमासे निष्कादिभ्यः[5]। निष्केण क्रीतं नैष्किकम्। समासे तु ठञ्। नैष्किकः[6]। असमासग्रहणं ज्ञापकमितः प्राक् तदन्तविधिरिति। सुगव्यम्। यवा-म्। * इत उर्ध्वं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि * ायणिकः। द्वैपारायणिकः। लुकि तु, द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्[7], तेन क्रीतं र्पिकम्।

२१. शताच्च ठन्यतावशते। शतेन क्रीतम्, शत्यम्, शतिकम्। शते तु, ः सङ्घः। असमास इत्येव। द्विशतेन क्रीतं द्विशतकम्।

---

१. उपधीयत इत्युपधी रथाङ्गम्। २. चर्मण्यष्यमेव पूर्वविप्रतिषेधेन। ३. इति लौकिकीं विवक्षामनुसारयति। नेह :– प्रासादो देवदत्तस्य स्यादिति। ादगणनं संख्या एकत्वादिः। गुरुत्वमानमुन्मानं पलादिः। आयाम-ामाणं वितस्त्यादिः। आरोहपरिणाहमानं परिमाणं प्रस्थादिः। ६. आर्हा-ः। इत आरभ्य तेन क्रीतमिति यावत् सप्तदशसूत्र्यामार्हादित्येतदनुवर्त्तते। रेमाणान्तस्येत्युत्तरपदवृद्धिः। ७. इह शूर्पादञ् न भवति किन्तु ठञ्। परिमाणमस्येति सङ्घो न शताद्व्यतिरिच्यते। तेन ठन्यतौ न किन्तु कनेव।

२२. संख्याया अतिशदन्तायाः कन् । पञ्चभिः क्रीतः, पञ्चकः । बहुकः । तिशदन्तायास्तु, साप्ततिकः । चात्वारिंशत्कः ।

२३. वतोरिड्वा । तावतिकः, तावत्कः ।

२४. विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् । विंशतित्रिंशद्भ्यामित्येको योगः । विंशतिकः । त्रिंशत्कः । ततो ड्वुनसंज्ञायामिति । विंशकः । त्रिंशकः । संज्ञायान्तु कन् पूर्वेण ।

२५. कंसाट्टिठन्[1] । कंसिकः । कंसिकी । * अर्धाच्चेति वक्तव्यम् * अर्धिकः । अर्धिकी । * कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा * कार्षापणिकः । कार्षापणिकी । प्रतिकः । प्रतिकी ।

२६. शूर्पादञन्यतरस्याम् । शौर्पम् , शौर्पिकम् ।

२७. शतमानविंशतिकसहस्रवसनादण् । ठञ्ठकनामपवादः । शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ।

२८. अध्यर्धपूर्वाद् द्विगोर्लुगसंज्ञायाम् । अध्यर्धकंसम् । द्विकंसम् । संज्ञायान्तु, पाञ्चकलायिकम्[2] ।

२९. विभाषा कार्षापणसहस्राभ्याम् । अध्यर्धकार्षापणम् , अध्यर्धकार्षापणिकम् । द्विकार्षापणम् , द्विकार्षापणिकम् । अध्यर्धप्रतिकम् । द्विप्रतिकम् । अध्यर्धसहस्रम् , अध्यर्धसाहस्रम् । द्विसहस्रम् , द्विसाहस्रम् ।

३०. द्वित्रिपूर्वान्निष्कात् । द्विनिष्कम्, द्विनैष्किकम् । त्रिनिष्कम्, त्रिनैष्किकम् । * बहुपूर्वाच्च * बहुनिष्कम् , बहुनैष्किकम् ।

३१. विस्ताच्च । द्विविस्तम् , द्विवैस्तिकम् ।

३२. विंशतिकात्खः । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् ।

३३. खार्या ईकन् । अध्यर्धखारीकम् । द्विखारीकम् । * केवलायाश्चेति वक्तव्यम् * खारीकम् ।

३४. पणपादमाषशताद्यत् । अध्यर्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । द्विपाद्यम्[3] । अध्यर्धमाष्यम् । द्विमाष्यम् । अध्यर्धशत्यम् । द्विशत्यम् । त्रिशत्यम् ।

३५. शाणाद्वा[4] । अध्यर्धशाण्यम् । अध्यर्धशाणम् ।

---

१. टो ङीबर्थः । इकार उच्चारणार्थः । २. परिमाणविशेषः । ३. इह पादः पदिति न यस्येति लोपस्य स्थानिवद्भावात् । पद्यत्यतदर्थ इत्यपि न । प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् । ४. पक्षे ठञ् तस्य लुक् ।

३६. द्वित्रिपूर्वादण् च। चाद्यत्। द्वैशाणम् , द्विशाण्यम् , द्विशाणम्।

३७. तेन क्रीतम्। गौपुच्छिकम्। साप्ततिकम्। प्रास्थिकम्। नैष्किकम्।

३८. तस्य निमित्तं संयोगोत्पातौ[1]। शत्यः, शतिको वा धनपतिसंयोगः। शत्यं शतिकं वा दक्षिणाक्षिस्पन्दनम्। * वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् * वातस्य शमनं कोपनं वा, वातिकम्। पैत्तिकम्। श्लैष्मिकम्। * सन्निपाताच्चेति वक्तव्यम् * सान्निपातिकम्।

३९. गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्। गोर्निमित्तं संयोग उत्पातो वा, गव्यः। धन्यः। यशस्यः। स्वर्ग्यः। संख्याद्यादेस्तु, पञ्चकम्। प्रास्थिकम्। खारीकम्। आश्विकम्। आश्मिकम्। * ब्रह्मवर्चसादुपसंख्यानम् * ब्रह्मवर्चस्यम्।

४०. पुत्राच्छ च। चाद्यत्। पुत्रीयः, पुत्र्यः।

४१. सर्वभूमिपृथिवीभ्यामणञौ। सर्वभूमेर्निमित्तं संयोग उत्पातो वा, सार्वभौमः[2]। पार्थिवः।

४२. तस्येश्वरः। सर्वभूमेरीश्वरः, सार्वभौमः। पार्थिवः।

४३. तत्र विदित इति च। सार्वभौमः। पार्थिवः।

४४. लोकसर्वलोकाट्ठञ्। लौकिकः। सार्वलौकिकः[2]।

४५. तस्य वापः[3]। प्रास्थिकम्। द्रौणिकम्। खारीकम्।

४६. पात्रात् ष्ठन्। पात्रस्य वापः, पात्रिकं क्षेत्रम्। पात्रिकी क्षेत्रभक्तिः।

४७. तदस्मिन्वृद्ध्यायलाभशुल्कोपदा[4] दीयते। पञ्चास्मिन् वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा दीयते, पञ्चकः। शतिकः, शत्यः। साहस्रः। * चतुर्थ्यर्थ उपसंख्यानम् * पञ्चास्मै वृद्ध्यादि दीयते, पञ्चको देवदत्तः। अधिकरणत्वविवक्षया[5] वा।

४८. पूरणार्धाट्ठन्। ठक्टिठनोरपवादः। द्वितीयिकः। तृतीयिकः। अर्धिकः[6]।

---

१. संयोगः सम्बन्धः। उत्पातः शुभाशुभसूचकः। २. अनुशतिकादित्वादुभयपदवृद्धिः। ३. उप्यतेऽस्मिन्निति, वापः क्षेत्रम्। ४. उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भाग आयः। विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः। रक्षानिर्वेशो राजभागः शुल्कः। उत्कोच उपदा। ५. सममब्राह्मणे दानमितिवत्। ६. अर्धशब्दो रूपकस्यार्धे रूढः।

४९. भागाद्यच्च । भागो वृद्ध्यादिरस्मिन् दीयते, भाग्यं भागिकं शतम् । भाग्या, भागिका विंशतिः ।

५०. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः । वांशभारिकः । ऐक्षुभारिकः । वांशिकः[1] । ऐक्षुकः ।

५१. वस्नद्रव्याभ्यां ठन्कनौ । वस्नं हरति, वहत्यावहति वा, वस्निकः । द्रव्यकः ।

५२. सम्भवत्यवहरति पचति । प्रस्थं सम्भवति[2], प्रास्थिकः कटाहः । प्रास्थिकी ब्राह्मणी । * तत्पचतीति द्रोणादण् च * चाट्ठञ् । द्रोणं पचति, द्रौणी, द्रौणिकी ।

५३. आढकाचितपात्रात् खोऽन्यतरस्याम् । पक्षे ठञ् । आढकीना, आढकिकी । आचितीना, आचितिकी । पात्रीणा, पात्रिकी ।

५४. द्विगोः ष्ठंश्च[3] । द्व्याढकिकी, द्व्याढकीना, द्व्याढकी । द्व्याचितिकी, द्व्याचितीना, द्व्याचिता[4] । द्विपात्रिकी, द्विपात्रीणा, द्विपात्री ।

५५. कुलिजाल्लुक्खौ च[5] । द्विकुलिजी, द्वैकुलिजिकी । द्विकुलिजीना, द्विकुलिजिकी ।

५६. सोऽस्यांशवस्नभृतयः[6] । पञ्चांशो वस्नं भृतिर्वास्य, पञ्चकः ।

५७. तदस्य परिमाणम् । प्रस्थं परिमाणमस्य, प्रास्थिको राशिः ।

५८. संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु । पञ्चैव, पञ्चकाः शुकाः । पञ्च परिमाणमस्य, पञ्चकः सङ्घः । अष्टकं पाणिनीयं सूत्रम् । पञ्चकमध्ययनम् । * स्तोमे डविधिः * पञ्चदश मन्त्राः परिमाणमस्य, पञ्चदशः स्तोमः[7] ।

५९. पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । पङ्क्तिः । विंशतिः । त्रिंशत् । चत्वारिंशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः । शतम् ।

६०. पञ्चद्दशतौ वर्गे वा । पञ्च परिमाणमस्य, पञ्चद्वर्गः, पञ्चकः । दशत्, दशकः ।

---

१. भारभूतेभ्य इति व्याख्यान्तरम् । २. स्वस्मिन्समावेशयतीत्यर्थः । ३. चात्खः । पक्षे ठञ् तस्याध्यर्धेति लुक् । द्विगोरिति ङीप् । ४. अपरिमाणेति ङीब्निषेधः । ५. चाट्ष्ठन् । लुगभावे ठञः श्रवणम् । ६. वस्नं मूल्यम् । भृतिर्वेतनम् । ७. सोमयागेषुच्छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः ।

६१. सप्तनोऽञ्छन्दसि[1]। सप्त साप्तानि असृजत्। * शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः * पञ्चदशिनोऽर्धमासाः। त्रिंशिनो मासाः। * विंशतेश्चेति वाच्यम् * विंशिनोऽङ्गिरसः। * युष्मदस्मदोः सादृश्ये वतुब्वाच्यः * त्वावतः पुरूवसो। न त्वावाँ अन्यः। यज्ञं विप्रस्य मावतः।

६२. त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्। त्रिंशदध्यायाः परिमाणमेषां त्रैंशानि ब्राह्मणानि। चात्वारिंशानि।

६३. तदर्हति। श्वेतच्छत्रमर्हति, श्वैतच्छत्रिकः।

६४. छेदादिभ्यो नित्यम्। छेदं नित्यमर्हति, छैदिको वेतसः। * विराग विरङ्गं च * वैरङ्गिकः।

६५. शीर्षच्छेदाद्यच्च। शिरश्छेदं नित्यमर्हति, शीर्षच्छेद्यः[2]। शैर्षच्छेदिकः।

६६. दण्डादिभ्यो यत्। दण्ड्यः। अर्घ्यः। वध्यः।

६७. छन्दसि च। सादन्यम्, विदथ्यम्।

६८. पात्राद् घंश्च[3]। पात्रियः, पात्र्यः।

६९. कडङ्करदक्षिणाच्छ च[3]। कडङ्करं माषमुद्गादितृणमर्हतीति, कडङ्करीयो गौः। कडङ्कर्यः। दक्षिणामर्हति, दक्षिणीयः। दक्षिण्यः।

७०. स्थालीबिलात्। स्थालीबिलीयाः, स्थालीबिल्या[4]स्तण्डुलाः।

७१. यज्ञर्त्विग्भ्यां घखञौ। यज्ञियः। आर्त्विजीनो यजमानः। * यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् * यज्ञियो देशः। आर्त्विजीन ऋत्विक्।

७२. पारायणतुरायणचान्द्रायणं वर्त्तयति[5]। पारायणं वर्त्तयति, पारायणिकश्छात्रः। तौरायणिको[6] यजमानः। चान्द्रायणिकः।

७३. संशयमापन्नः। सांशयिकः।

७४. योजनं गच्छति। यौजनिकः। * क्रोशशतयोजनशतयोरुपसंख्यानम् * क्रौशशतिकः। यौजनशतिकः। * ततोऽभिगमनमर्हतीति च वक्तव्यम् * क्रोशशतादभिगमनमर्हति, क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः।

७५. पथः ष्कन्। पथिकः। पथिकी।

७६. पन्थो ण नित्यम्। पान्थः। पान्था।

---

१. तदस्य परिमाणमिति वर्ग इति चार्थे। २. शीर्षभावोऽपि निपात्यते। ३. चाद्यत्। ४. पाकयोग्या इत्यर्थः। ५. अतः परं ठञेव। ६. तुरायणं यज्ञविशेषः।

७७. उत्तरपथेनाहृतं च[1] । औत्तरपथिकम् । औत्तरपथिकः । * आहृत-प्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम् * वारिपथेनाहृतं वारिपथिकम् । वारिपथिकः । जाङ्गलपथिकम् । स्थालपथिकः । कान्तारपथिकः ।

७८. कालात् । अधिकारोऽयं व्युष्टादिभ्योऽणिति यावत् ।

७९. तेन निर्वृत्तम् । आह्निकम् । मासिकम् ।

८०. तमधीष्टो भृतो भूतो भावी[2] । मासिकोऽध्यापकः । मासिकः कर्म-करः । मासिको व्याधिः । मासिक उत्सवः ।

८१. मासाद्वयसि यत्खञौ । मासं भूतो मास्यः, मासीनः ।

८२. द्विगोर्यप् । द्विमास्यः, त्रिमास्यः ।

८३. षण्मासाण्ण्यच्च[3] । षाण्मास्यः, षण्मास्यः, षाण्मासिकः ।

८४. अवयसि ठंश्च[4] । षण्मासिको व्याधिः । षाण्मास्यः ।

८५. समायाः खः[5] । समामधीष्टो भृतो भूतो भावी वा, समीनः ।

८६. द्विगोर्वा[6] । द्विसमीनः । द्वैसमिकः ।

८७. रात्र्यहःसंवत्सराच्च । द्विरात्रीणः, द्वैरात्रिकः । द्व्यहीनः, द्वैय-ह्निकः[7] । द्विसंवत्सरीणः, द्विसांवत्सरिकः[8] ।

८८. वर्षाल्लुक् च[9] । द्विवर्षीणो द्विवर्षो द्विवार्षिको[10] वा व्याधिः ।

८९. चित्तवति नित्यम् । द्विवर्षो दारकः ।

९०. षष्टिकाः[11] षष्टिरात्रेण पच्यन्ते । षष्टिको धान्यविशेषः ।

९१. वत्सरान्ताच्छश्छन्दसि । इद्वत्सरीयः ।

---

१. वाद्गच्छतीत्यर्थेऽपि । २. अधीष्टः सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतः । ३. चाद्यप् । ४. चाण्ण्यत् । ५. चत्वारोऽर्था अनुवर्त्तन्ते । ६. पक्षे ठञ् । तेन परिजय्येत्यतः प्राक निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः । ७. समासान्तविधेरनित्यत्वान्न टच् । ८. संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः । ९. वा खः । पक्षे ठञ् वा च लुक् । १०. वर्षस्याभविष्यतीत्युत्तरपदवृद्धिः । ११. कन्प्रत्ययो रात्रशब्दलोपश्च ।

९२. संपरिपूर्वात्ख च। संवत्सरीणः, संवत्सरीयः। परिवत्सरीणः, परिवत्सरीयः।

९३. तेन परिजय्यलभ्यकार्यसुकरम्। मासेन परिजय्यो मासिको व्याधिः। मासेन लभ्यं कार्य्यं सुकरं वा, मासिकम्।

९४. तदस्य[1] ब्रह्मचर्यम्। मासं ब्रह्मचर्यमस्य, मासिको ब्रह्मचारी। आर्धमासिकः। यद्वा मासोऽस्येति, मासिकं ब्रह्मचर्यम्। * महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् * महानाम्न्यो नाम विदामघवन्नित्याद्या ऋचस्तासां ब्रह्मचर्यमस्य, माहानाम्निकः[2]। * चतुर्मासाण्ण्यो यज्ञे तत्र भव इत्यर्थे * चातुर्मास्यानि यज्ञकर्माणि। * संज्ञायामण् * चातुर्मासी। आषाढी।

९५. तस्य च दक्षिणा दीयते यज्ञाख्येभ्यः। द्वादशाहस्य दक्षिणा, द्वादशाहिकी। आख्याग्रहणादकालादपि। आग्निष्टोमिकी। वाजपेयिकी।

९६. तत्र च दीयते कार्यं भववत्[3]। प्रावृषि दीयते, कार्यं वा, प्रावृषेण्यम्। शारदम्।

९७. व्युष्टादिभ्योऽण्। व्युष्टे दीयते, कार्यं वा, वैयुष्टम्।

९८. तेन यथाकथाचहस्ताभ्यां णयतौ। * अर्थाभ्यान्तु यथासंख्यं नेष्यते * यथाकथाच दीयते कार्यं वा, याथाकथाचम्। हस्तेन, हस्त्यम्।

९९. संपादिनि[4]। कर्णवेष्टकाभ्यां संपादि, कार्णवेष्टकिकं मुखम्[5]।

१००. कर्मवेषाद्यत्। कर्मण्यं शौर्यम्। वेष्यो[6] नटः।

१०१. तस्मै प्रभवति सन्तापादिभ्यः। सन्तापाय प्रभवति, सान्तापिकः। सांग्रामिकः।

१०२. योगाद्यच्च[7]। योगाय प्रभवति, योग्यः, यौगिकः।

१०३. कर्मण उकञ्। कार्मुकम्।

१०४. समयस्तदस्य प्राप्तम्। सामयिकम्[8]।

१०५. ऋतोरण्। आर्त्तवम्।

---

१. कालादिति वर्त्तते। २. भस्याढ इति पुंवद्भावान्माहानामिक इति हरदत्तः। ३. कालाधिकारः समाप्तः। ४. तेनेत्येव। ५. कर्णालङ्काराभ्यामवश्यं शोभत इत्यर्थः। ६. वेषः कृत्रिम आकारः। ७. वाट्ठञ्। ८. समयः प्राप्तोऽस्य।

१०६. छन्दसि घस् । भाग ऋत्विग्यः ।

१०७. कालाद्यत् । कालः प्राप्तोऽस्य, काल्यं शीतम् ।

१०८. प्रकृष्टे ठञ् । प्रकृष्टः[1] कालोऽस्य, कालिकं वैरम् ।

१०९. प्रयोजनम्[2] । इन्द्रमहः प्रयोजनमस्य, ऐन्द्रमहिकम् ।

११०. विशाखाषाढादण्मन्थदण्डयोः । विशाखा प्रयोजनमस्य, वैशाखो मन्थः । आषाढो दण्डः ।* चूडादिभ्य उपसंख्यानम् * चौडम् । श्राद्धम् ।

१११. अनुप्रवचनादिभ्यश्छः । अनुप्रवचनीयम् ।

११२. समापनात्सपूर्वपदात् । व्याकरणसमापनीयम् ।

११३. ऐकागारिकट् चौरे । एकागारं प्रयोजनमस्य, ऐकागारिकश्चौरः ।

११४. आकालिकडाद्यन्तवचने । समानकालावाद्यन्तौ यस्याकालिकः[3] । * आकालाट्ठँश्च । आकालिका विद्युत् ।

११५. तेन तुल्यं क्रिया चेद्वतिः । ब्राह्मणेन तुल्यं ब्राह्मणवदधीते ।

११६. तत्र तस्येव । मथुरायामिव, मथुरावत्स्रुघ्ने प्राकारः । चैत्रस्येव, चैत्रवन्मैत्रस्य गावः ।

११७. तदर्हम् । विधिमर्हति, विधिवत्पूज्यते ।

११८. उपसर्गाच्छन्दसि धात्वर्थे । यदुद्वतो[4] निवतः ।

११९. तस्य भावस्त्वतलौ । गोर्भावो गोत्वम् । गोता[5] ।

१२०. आ च त्वात्[6] । ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । स्त्रिया भावः, स्त्रैणम्, स्त्रीत्वम्, स्त्रीता ।

१२१. न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः । अपतित्वम् । अपटुत्वम् । अन्यत्र तु बार्हस्पत्यम् । आचतुर्यम् । आसङ्गत्यम् । आलवण्यम् । आवट्यम् । आयुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् ।

१२२. पृथ्वादिभ्य इमनिज्वा[7] । पृथोर्भावः, प्रथिमा[8], पार्थवम् । मृदोर्भावो म्रदिमा, मार्दवम् ।

---

१. दीर्घः । २. प्रयोजनं फलं कारणञ्च । ३. समानकालस्याकाल आदेशः । आशुविनाशीत्यर्थः । ठञः पूर्णोऽवधिः । ४. उद्गतान्निर्गतादित्यर्थः । ५. त्वान्तं क्लीबं तलन्तं स्त्रियाम् । ६. अपवादैः सह समावेशार्थं गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । ७. वावचनमणादिसमावेशार्थम् । ८. र ऋत इति रः । टेरिति टेर्लोपः ।

१२३. वर्णदृढादिभ्यः ष्यञ्च[1]। शौक्ल्यम्, शुक्लिमा। दार्ढ्यम्, द्रढिमा। औचिती। याथाकामी।

१२४. गुणवचनब्राह्मणादिभ्यः कर्मणि च। चाद्भावे। जडस्य कर्म, भावो वा, जाड्यम्। मौढ्यम्। ब्राह्मण्यम्। * अर्हतो नुम् च * आर्हन्त्यम्। आर्हन्ती। * चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् * चत्वारो वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। त्रैलोक्यम्। सार्ववैद्यः[2]। * चतुर्वेदस्योभयपदवृद्धिश्च * चातुर्वैद्यः। चतुर्विद्यस्येति पाठे चतुर्विद्य एव, चातुर्वैद्यः।

१२५. स्तेनाद्यन्नलोपश्च[3]। स्तेनस्य भावः, कर्म वा, स्तेयम्।

१२६. सख्युर्यः। सख्युर्भावः, कर्म वा, सख्यम्। * दूतवणिग्भ्यां च * दूत्यम्। वणिज्यम्[4]। ब्राह्मणादित्वाद्वाणिज्यमपि।

१२७. कपिज्ञात्योर्ढक्। कापेयम्। ज्ञातेयम्।

१२८. पत्यन्तपुरोहितादिभ्यो यक्। सैनापत्यम्। पौरोहित्यम्। * राजाऽसे[5] * राज्ञो भावः, कर्म वा, राज्यम्। समासे तु, आधिराज्यम्[6]।

१२९. प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्। आश्वम्। औष्ट्रम्। कौमारम्। कैशोरम्। औद्गात्रम्। औन्नेत्रम्। सौष्ठवम्। दौष्ठवम्।

१३०. हायनान्तयुवादिभ्योऽण्। द्वैहायनम्। त्रैहायनम्। यौवनम्। स्थाविरम्। * श्रोत्रियस्य यलोपश्च * श्रौत्रम्। कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते। कौशल्यम्, कौशलम्। चापल्यम्, चापलम्। नैपुण्यम्, नैपुणम्। पैशुन्यम्, पैशुनम्। कौतूहल्यम्, कौतूहलम्। क्षैत्रज्ञ्यम्, क्षैत्रज्ञम्।

१३१. इगन्ताच्च लघुपूर्वात्[7]। शौचम्। मौनम्।

१३२. योपधाद् गुरूपोत्तमाद् वुञ्। रामणीयकम्। आभिधानीयकम्। * सहायाद्वा * साहायकम्, साहाय्यम्।

---

१. वादिमनिच्। २. षो ङीषर्थः। सर्ववेदानधीते, सर्ववेदः। सर्वादेरिति लुक्। स एव सार्ववैद्यः। ३. नेति संघातग्रहणम्। स्तेन चौर्ये पचाद्यच्। स्तेनादिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति। ४. इदं काशिकामते। माधवस्तु वणिज्याशब्दं स्वभावात्स्त्रीलिङ्गमाह। ५. असेऽसमास इत्यर्थः। ६. इह ब्राह्मणादित्वात्ष्यञ्। ७. काव्यं तु ब्राह्मणादित्वात्।

१३३. द्वन्द्वमनोज्ञादिभ्यश्च । शैष्योपाध्यायिका । मानोज्ञकम् ।

१३४. गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु[1] । गार्गिकया श्लाघते । गार्गिकयात्याकुरुते । गार्गिकामवेतः । काठकेन श्लाघते ।

१३५. होत्राभ्यश्छः[2] । अच्छावाकस्य भावः, कर्म वा, अच्छावाकीयम् । मैत्रावरुणीयम् ।

१३६. ब्रह्मणस्त्वः[3] । छस्यापवादः । ब्रह्मत्वम् ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
पञ्चमाध्यायस्य प्रथमपादः समाप्तः ।



१. अत्याकारोऽधिक्षेपः । २. होत्राशब्द ऋत्विग्वाची स्त्रीलिङ्गः । बहुवचनाद्विशेषग्रहणम् । ३. होत्रावाचिन इत्यर्थोऽनुवृत्त्या बोध्यः । नेति वाच्ये त्ववचनं तलो बाधनार्थम् । ब्राह्मणपर्यायाद्ब्रह्मन्-शब्दात्तु, त्वतलौ । ब्रह्मत्वं ब्रह्मता ।

# अथ पञ्चमाध्यायस्य द्वितीयपादः ।



१. धान्यानां भवने[1] क्षेत्रे खञ् । मुद्गानां भवनं क्षेत्रं, मौद्गीनम् ।

२. व्रीहिशाल्योर्ढक् । व्रैहेयम् । शालेयम् ।

३. यवयवकषष्टिकाद्यत् । यव्यम् । यवक्यम् । षष्टिक्यम् ।

४. विभाषा तिलमाषोमाभङ्गाणुभ्यः । तिल्यम्, तैलीनम् । माष्यम्, माषीणम् । उम्यम्, औमीनम् । भङ्ग्यम्, भाङ्गीनम् । अणव्यम्, आणवीनम् ।

५. सर्वचर्मणः[2] कृतः खखञौ । सर्वश्चर्मणा कृतः, सर्वचर्मीणः, सार्वचर्मीणः ।

६. यथामुखसंमुखस्य दर्शनः[3] खः । यथामुखं[4] दर्शनो यथामुखीनः । सर्वस्य मुखस्य दर्शनः, संमुखीनः ।

७. तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति । सर्वपथान् व्याप्नोति, सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः ।

८. आप्रपदं प्राप्नोति । आप्रपदीनः[5] पटः ।

९. अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु । अनुपदं बद्धा, अनुपदीना उपानत् । सर्वान्नानि भक्षयति, सर्वान्नीनो भिक्षुः । अयानयं नेयः, अयानयीनः[7] शारः ।

१०. परोवरपरम्परपुत्रपौत्रमनुभवति । परांश्चावरांश्चानुभवति, परोवरीणः[8] । परांश्च परतरांश्चानुभवति, परम्परीणः[9] ।

---

१. भवन्त्यस्मिन्निति, भवनम् । २. असामर्थ्येऽपि निपातनात्समासः । ३. दृश्यतेऽस्मिन्निति, दर्शनः । ४. मुखस्य सदृशं यथामुखम् । सादृश्ये निपातनादव्ययीभावः । प्रतिबिम्बमित्यर्थः । ५. पदस्याग्रं प्रपदं तन्मर्यादीकृत्य, आप्रपदम् । ६. अनुरायामे सादृश्ये च । ७. अयः प्रदक्षिणम् । अनयः प्रसव्यम् । प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन् परशारैः पदानामसमावेशः सोऽयानयः । ८. अवरस्योत्वं निपात्यते । ९. प्रकृतेः परम्परभावो निपातनात् । परम्पराशब्दात्तु स्वार्थे ष्यञि पारम्पर्यम् ।

११. अवारपारात्यन्तानुकामं गामी । अवारपारं गामी, अवारपारीणः[1]। अवारीणः। पारीणः। पारावारीणः। अत्यन्तं गामी, अत्यन्तीनः। अनुकामीनः।

१२. समां समां विजायते। समांसमीना सा यैव प्रतिवर्षं प्रसूयते। * खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः * समां समां विजायते, समायां समायां वा।

१३. अद्यश्वीनावष्टब्धे। अद्य श्वो वा विजायते, अद्यश्वीना वडवा। अद्यश्वीनं मरणम्।

१४. आगवीनः। गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीनः।

१५. अनुग्वलंगामी। गोः पश्चात्पर्याप्तं गच्छति, अनुगवीनो[2] गोपालः।

१६. अध्वनो यत्खौ। अध्वानमलं गच्छति, अध्वन्यः, अध्वनीनः[3]।

१७. अभ्यमित्राच्छ च[4]। अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः।

१८. गोष्ठात्खञ् भूतपूर्वे । गोष्ठो भूतपूर्वः, गौष्ठीनो देशः।

१९. अश्वस्यैकाहगमः[5]। आश्वीनोऽध्वा।

२०. शालीनकौपीने अधृष्टाकार्ययोः । शालाप्रवेशमर्हति, शालीनोऽधृष्टः। कूपपतनमर्हति, कौपीनं पापम्[6]।

२१. व्रातेन जीवति। व्रातेन शरीरायासेन[7] जीवति, व्रातीनः।

२२. साप्तपदीनं सख्यम्। सप्तभिः पदैरवाप्यते, साप्तपदीनं सख्यम्।

२३. हैयङ्गवीनं संज्ञायाम्। ह्योगोदोहस्य[8] विकारो हैयङ्गवीनं नवनीतम्।

२४. तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ। पीलूनां पाकः, पीलुकुणः। कर्णस्य मूलम्, कर्णजाहम्।

२५. पक्षात्तिः। पक्षस्य मूलं पक्षतिः।

---

१. यथेष्टं गन्ता। २. ये चाभावकर्मणोरिति प्रकृतिभावः। ३. आत्माध्वानौ ख इत्यनेन। ४. चाद्यत्खौ। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः। ५. एकाहेन गम्यते। ६. तत्साधनत्वात्तद्वद्गोप्यत्वाद्वा लिङ्गमपि । तत्सम्बन्धात्तदाच्छादनमपि। ७. न तु बुद्धिवैभवेन। ८. दुह्यत इति दोहः क्षीरम्।

२६. तेन वित्तश्चुञ्चुप्चणपौ[1]। विद्यया वित्तो विद्याचुञ्चुः। विद्याचणः।

२७. विनञ्भ्यां नानाञौ न सह[2]। विना। नाना।

२८. वेः शालच्छङ्कटचौ। विस्तृतं विशालम्। विशङ्कटम्।

२९. सम्प्रोदश्च कटच्। सङ्कटम्। प्रकटम्। उत्कटम्। चाद्विकटम्। * अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् * अलाबूनां रजः, अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्। * गोष्ठजादयः स्थानादिषु पशुनामभ्यः * गवां स्थानं गोगोष्ठम्। * सङ्घाते कटच् * अवीनां संघातोऽविकटः। * विस्तारे पटच् * अविपटः। * द्वित्वे गोयुगच् * द्वावुष्ट्रौ, उष्ट्रगोयुगम्। * षट्त्वे षड्गवच् * अश्वषड्गवम्। * स्नेहे तैलच् * तिलतैलम्। सर्षपतैलम्। * भवने क्षेत्रे शाकटशाकिनौ * इक्षुशाकटम्। इक्षुशाकिनम्।

३०. अवात्कुटारच्च[3]। अवाचीनोऽवकुटारः। अवकटः।

३१. नते[4] नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः। नासिकाया नतमवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकावटीटा। पुरुषोऽवटीटः।

३२. नेर्बिडज्बिरीसचौ। निबिडम्। निबिरीसम्।

३३. इनच् पिटच्चिक चि च। * कप्रत्ययचिकादेशौ च वक्तव्यौ * चिकिनम्। चिपिटम्। चिक्कम्। * क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषि * क्लिन्ने चक्षुषी अस्य, चिल्लः। पिल्लः। * चुल् च * चुल्लः।

३४. उपाधिभ्यां त्यकन्नासन्नारूढयोः। पर्वतस्यासन्नस्थलमुपत्यका। आरूढं स्थलमधित्यका।

३५. कर्मणि घटोऽठच्। कर्मणि घटते, कर्मठः।

३६. तदस्य संजातं तारकादिभ्य इतच्[5]। तारकाः संजाता अस्य, तारकितं नभः।

३७. प्रमाणे द्वयसज्दघ्नञ्मात्रचः। ऊरू प्रमाणमस्य, ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्। * प्रमाणे लः[6] * शमः। दिष्टिः। वितस्तिः * द्विगोर्नित्यम् * द्वौ शमौ प्रमाणमस्य, द्विशमम्। * प्रमाणपरिमाणाभ्यां संख्यायाश्चापि

---

१. आदौ ञुसयकारो निर्दिष्टः तेन प्रत्यययोरादेश्चस्य नेत्त्वम्। २. पृथग्भावेऽर्थे। ३. चात्कटच्। ४. नतं नमनम्। ५. तारकादिराकृतिगणः। ६. लुकः पूर्वाचार्यसंज्ञेयम्।

संशये मात्रज्वक्तव्यः * शममात्रम् । प्रस्थमात्रम् । पञ्चमात्रम् । * वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् * तावद्द्वयसम् । तावन्मात्रम् ।

३८. पुरुषहस्तिभ्यामण् च । पुरुषः प्रमाणमस्य, पौरुषम् । पुरुषद्वयसम् । हास्तिनम् । हस्तिद्वयसम् ।

३९. यत्तदेतेभ्यः परिमाणे वतुप् । यत्परिमाणमस्य, यावान् । तावान् । एतावान् ।

४०. किमिदम्भ्यां वो घः । कियान् । इयान् ।

४१. किमः संख्यापरिमाणे डति च । का संख्या येषां कति, कियन्तः ।

४२. संख्याया अवयवे तयप् । पञ्चावयवा अस्य, पञ्चतयं दारु ।

४३. द्वित्रिभ्यां तयस्यायज्वा । द्वयम् , द्वितयम् । त्रयम् , त्रितयम् ।

४४. उभादुदात्तो नित्यम् । उभयम् ।

४५. तदस्मिन्नधिकमिति दशान्ताड्डः । एकादशाधिका अस्मिन्नेकादशं शतम् । * शतसहस्रयोरेवेष्यते * नेह :— एकादश अधिका अस्यां विंशतौ । * प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते * नेह :— एकादश माषा अधिका अस्मिन् सुवर्णशते ।

४६. शदन्तविंशतेश्च । त्रिंशं शतम् । विंशम् ।

४७. संख्याया गुणस्य निमाने मयट् । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य, द्विमयमुदश्विद्यवानाम् ।

४८. तस्य पूरणे[1] डट् । एकादशानां पूरणः, एकादशः ।

४९. नान्तादसंख्यादेर्मट् । पञ्चानां पूरणः, पञ्चमः ।

५०. थट् च छन्दसि । पञ्चथम् । पञ्चमम् ।

५१. षट्कतिकतिपयचतुरां थुक् । षण्णां पूरणः, षष्ठः । कतिथः । कतिपयथः[2] । चतुर्थः । * चतुरश्छयतावाद्यक्षरलोपश्च * तुर्यः, तुरीयः ।

५२. बहुपूग[3]गणसङ्घस्य तिथुक् । बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः ।

५३. वतोरिथुक् । यावतिथः । तावतिथः ।

---

१. पूर्यतेऽनेन, पूरणः । २. कतिपयशब्दस्यासंख्यात्वेऽपि अत एव ज्ञापकाड्डट् । ३. पूगसङ्घयोरसंख्यात्वेऽप्यत एव डट् ।

५४. द्वेस्तीयः। द्वयोः पूरणो द्वितीयः।

५५. त्रेः सम्प्रसारणं च। तृतीयः।

५६. विंशत्यादिभ्यस्तमडन्यतरस्याम्। विंशतितमः, विंशः। एकविंशतितमः, एकविंशः।

५७. नित्यं शतादिमासार्धमाससंवत्सराच्च। शततमः। एकशततमः। मासतमः। अर्धमासतमः। संवत्सरतमः।

५८. षष्ट्यादेश्चाऽसंख्यादेः। षष्टितमः, सप्ततितमः। संख्यादेस्तु, एकषष्टः, एकषष्टितमः।

५९. मतौ छः सूक्तसाम्नोः। अच्छावाकशब्दोऽस्ति अस्मिन्, अच्छावाकीयं सूक्तम्। वारवन्तीयं साम।

६०. अध्यायानुवाकयोर्लुक्। अत एव ज्ञापकाच्छः। विधानसामर्थ्याच्च वा लुक्। गर्दभाण्डो गर्दभाण्डीयो वाध्यायोऽनुवाको वा।

६१. विमुक्तादिभ्योऽण्। वैमुक्तः। दैवासुरः।

६२. गोषदादिभ्यो वुन्। गोषदकः। इषेत्वकः।

६३. तत्र कुशलः पथः। पथि कुशलः, पथकः।

६४. आकर्षादिभ्यः[1] कन्। आकर्षकः।

६५. धनहिरण्यात्कामे[2]। धने कामो धनको देवदत्तस्य। हिरण्यकः।

६६. स्वाङ्गेभ्यः प्रसिते[3]। केशेषु प्रसितः, केशकः।

६७. उदराट्ठगाद्यूने। कनोऽपवादः। उदरे प्रसित औदरिकः[4]। अन्यत्र उदरकः[5]।

६८. सस्येन[6] परिजातः। सस्येन गुणेन परिजातः सम्बद्धः, सस्यकः साधुः।

६९. अंशं हारी[7]। अंशको दायादः।

७०. तन्त्रादचिरापहृते। तन्त्रकः[8] पटः।

---

१. आकषादिभ्य इति रेफरहितोऽपि पाठः। आकषो निकषोपलः। २. काम इच्छा। ३. प्रसितस्तत्परः। ४. बुभुक्षया पीडितोदरकार्य इत्यर्थः। अविजिगीषुरयमुच्यते। ५. उदरपरिमार्जनादौ प्रसक्तः। ६. कन् स्वर्यते। सस्यशब्दो गुणवाची न तु धान्यवाची। ७. हारीति आवश्यके णिनिः। ८. प्रत्यग्र इत्यर्थः।

७१. ब्राह्मणकोष्णिके संज्ञायाम् । आयुधजीविनो ब्राह्मणा यस्मिन्स ब्राह्मणको देशः । अल्पमन्नं यस्यां सा, उष्णिका[१] यवागूः ।

७२. शीतोष्णाभ्यां कारिणि । शीतं करोति, शीतकोऽलसः । उष्णकः शीघ्रकारी ।

७३. अधिकम्[२] । अधिकम् ।

७४. अनुकाभिकाभीकः कमिता । अनुकामयतेऽनुकः । अभिकः । अभीकः ।

७५. पार्श्वेनान्विच्छति[३] । पार्श्वकः ।

७६. अयःशूलदण्डाजिनाभ्यां ठक्ठञौ । आयःशूलिकः[४] साहसिकः । दाण्डाजिनिकः[५] ।

७७. तावतिथं ग्रहणमिति लुग्वा[६] । द्वितीयकं द्विकं वा ग्रहणं देवदत्तस्य । * तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक् * षष्ठेन रूपेण गृह्णाति, षट्को देवदत्तः । पञ्चकः ।

७८. स एषां ग्रामणीः । देवदत्तो मुख्यो येषां ते, देवदत्तकाः । त्वत्काः । मत्काः ।

७९. शृङ्खलमस्य बन्धनं करभे । शृङ्खलकः करभः ।

८०. उत्क उन्मनाः । उत्क उत्कण्ठितः ।

८१. कालप्रयोजनाद्रोगे[७] । द्वितीयेऽहनि भवो द्वितीयको ज्वरः । विषपुष्पैर्जनितो विषपुष्पकः । उष्णं कार्यमस्य, उष्णकः ।

८२. तदस्मिन्नन्नं प्रायेण संज्ञायाम् । गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी । * वटकेभ्य इनिर्वक्तव्यः * वटकिनी ।

८३. कुल्माषादञ् । कौल्माषी ।

८४. श्रोत्रियंश्छन्दोऽधीते[८] । श्रोत्रियः, छान्दसः ।

---

१. अन्नशब्दस्योष्णादेशो निपात्यते । २. अध्यारूढशब्दात्कन् । उत्तरपदलोपश्च । ३. अनृजुरुपायः पार्श्वम् । ४. तीक्ष्ण उपायोऽयःशूलम् । ५. दण्डाजिनं दम्भः । ६. पूरणार्थप्रत्ययस्येत्यर्थात् । ७. प्रयोजनं कारणं रोगस्य फलं वा । ८. वेत्यनुवर्त्तते । श्रोत्रियन्निति नान्तं निपात्यते । नकारः स्वरार्थः ।

८५. श्राद्धमनेन भुक्तमिनिठनौ। श्राद्धी, श्राद्धिकः।

८६. पूर्वादिनिः[1]। पूर्वी।

८७. सपूर्वाच्च। कृतपूर्वी कटम्। भुक्तपूर्वी भक्तम्।

८८. इष्टादिभ्यश्च। इष्टमनेन, इष्टी। अधीती।

८९. छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि[2]। मा त्वा परिपरिणो विदन्। मा त्वा परिपन्थिनो विदन्। अपत्यं परिपन्थिनम्।

९०. अनुपद्यन्वेष्टा। अनुपदमन्वेष्टा, अनुपदी गवाम्।

९१. साक्षाद्द्रष्टरि संज्ञायाम्। साक्षी।

९२. क्षेत्रियच् परक्षेत्रे चिकित्स्यः। क्षेत्रियो[3] व्याधिः।

९३. इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा। इन्द्र आत्मा तस्य लिङ्गमिन्द्रियम्[4]। इन्द्रेणात्मना दृष्टं सृष्टं जुष्टं दत्तं वा, इन्द्रियम्। इति शब्दः प्रकारे। तेन इन्द्रेण दुर्जयमिन्द्रियम्।

९४. तदस्यास्त्यस्मिन्निति मतुप्। गावोऽस्यास्मिन्वा सन्ति, गोमान्[5]। * गुणवचनेभ्यो मतुपो लुगिष्टः * शुक्लो गुणोऽस्यास्तीति, शुक्लः पटः। कृष्णः।

९५. रसादिभ्यश्च। अन्यमतुबर्थप्रत्ययापवादः। रसवान्। रूपवान्। गुणवाचिनामेव ग्रहणम्। नेह :– रूपिणी कन्या। रसिको नटः। * एकाचः * स्ववान्।

९६. प्राणिस्थादातो लजन्यतरस्याम्[6]। चूडालः, चूडावान्। प्राण्यङ्गादेव। नेह :– मेधावान्।

९७. सिध्मादिभ्यश्च। सिध्मलः, सिध्मवान्। * वातदन्तबलललाटानामूङ् च * वातूलः। दन्तूलः। बलूलः। ललाटूलः।

९८. वत्सांसाभ्यां कामबले[7]। वत्सलः। अंसलः।

९९. फेनादिलच् च। चाल्लच्। फेनिलः, फेनलः, फेनवान्।

---

१. अनेनेति प्रत्ययार्थः कर्त्ताऽनुवर्त्तते। न च क्रियामन्तरेण स सम्भवतीति यां काञ्चित् क्रियामध्याहृत्य प्रत्ययः। पूर्वं गतं भुक्तं कृतं वेति। २. लोके तु परिपन्थिशब्दप्रयोगो न न्याय्यः। ३. शरीरान्तरे चिकित्स्यः। अप्रतिकार्य इत्यर्थः। ४. करणेनेन्द्रियेण कर्त्तुरात्मनोऽनुमानात्। ५. भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः। ६. प्रत्ययस्वरेणैव सिद्धेऽन्तोदात्तत्वे चूडालोऽसीत्यादौ स्वरितो वानुदात्ते पदादाविति स्वरितबाधनार्थश्चकारः। ७. कामवति बलवति चार्थे।

१००. लोमादिपामादिपिच्छादिभ्यः शनेलचः। लोमशः, लोमवान्। रोमशः, रोमवान्। पामनः। * अङ्गात्कल्याणे * अङ्गना। * लक्ष्म्या अच्च * लक्ष्मणः। * विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः * विषुणः। पिच्छिलः, पिच्छवान्। उरसिलः, उरस्वान्।

१०१. प्रज्ञाश्रद्धार्चाभ्यो णः। प्राज्ञो व्याकरणे। श्राद्धः। आर्चः। * वृत्तेश्च * वार्त्तः।

१०२. तपःसहस्राभ्यां विनीनी[1]। तपस्वी। सहस्री।

१०३. अण्[2] च। तापसः। साहस्रः। * ज्योत्स्नादिभ्य उपसंख्यानम् * ज्यौत्स्नः। तामिस्रः।

१०४. सिकताशर्कराभ्यां च। सैकतो घटः। शार्करः।

१०५. देशे लुबिलचौ च। चादण् मतुप् च। सिकताः सन्त्यस्मिन्देशे, सिकताः, सिकतिलः, सैकतः, सिकतावान्। एवं शर्कराः, शर्करिलः, शार्करः, शर्करावान्।

१०६. दन्त उन्नत उरच्। उन्नता दन्ताः सन्त्यस्य, दन्तुरः।

१०७. ऊषसुषिमुष्कमधो रः। ऊषरः। सुषिरः। मुष्करः[3]। मधुरः[4]। * रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् * खरः। मुखरः। कुञ्जरः[5]। * नगपांसुपाण्डुभ्यश्च * नगरम्। पांसुरः। पाण्डुरः[6]। * कच्छ्वा ह्रस्वत्वञ्च * कच्छुरः।

१०८. द्युद्रुभ्यां मः। द्युमः। द्रुमः।

१०९. केशाद्वोऽन्यतरस्याम्। केशवः, केशिकः, केशी, केशवान्। * अन्येभ्योऽपि दृश्यते * मणिवो नागविशेषः। हिरण्यवः। * अर्णसो लोपश्च * अर्णवः।

११०. गाण्ड्यजगात्संज्ञायाम्[7]। गाण्डिवम्, गाण्डीवम्[8]। अजगवम्[9]।

१११. काण्डाण्डादीरन्नीरचौ। काण्डीरः। अण्डीरः।

---

१. विनीन्योरिकारो नकारपरित्राणार्थः। असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा मा भूदिति। सहस्रात्तु ठनोऽपि बाधनार्थम्। २. योगविभाग उत्तरार्थः। ३. मुष्कोऽण्डः। ४. मधु माधुर्यम्। ५. कुञ्जो हस्तिहनुः। ६. पाण्डरशब्दस्तु अव्युत्पन्न एव। ७. ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः। ८. अर्जुनस्य धनुः। ९. पिनाकः।

११२. रजःकृष्यासुतिपरिषदो[1] वलच्। रजस्वला स्त्री। कृषीवलः। आसुतीवलः शौण्डिकः। परिषद्वलः। * अन्येभ्योऽपि दृश्यते * भ्रातृवलः[2]। शत्रुवलः।

११३. दन्तशिखात्संज्ञायाम्। दन्तावलो हस्ती। शिखावलः केकी।

११४. ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः। ज्योत्स्ना। तमिस्रा। शृङ्गिणः। ऊर्जस्वी। ऊर्जस्वलः। गोमी। मलिनः। मलीमसः।

११५. अत इनिठनौ। दण्डी, दण्डिकः।

११६. व्रीह्यादिभ्यश्च[3]। व्रीही, व्रीहिकः।

११७. तुन्दादिभ्य इलच्च। तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान्। * स्वाङ्गाद् विवृद्धौ * विवृद्धौ कर्णौ यस्य स कर्णिलः, कर्णी, कर्णिकः, कर्णवान्।

११८. एकगोपूर्वाट्ठञ् नित्यम्। एकशतमस्यास्तीति, ऐकशतिकः। ऐकसहस्रिकः। गौशतिकः। गौसहस्रिकः।

११९. शतसहस्रान्ताच्च निष्कात्। नैष्कशतिकः। नैष्कसहस्रिकः।

१२०. रूपादाहतप्रशंसयोर्यप्। आहतं रूपमस्यास्तीति, रूप्यः कार्षापणः। प्रशस्तं रूपमस्यास्ति, रूप्यो गौः। * अन्येभ्योऽपि दृश्यते * हिम्याः पर्वताः। गुण्या ब्राह्मणाः।

१२१. अस्मायामेधास्रजो विनिः। यशस्वी, यशस्वान्। मायी, मायावान्[4]। स्रग्वी। * आमयस्योपसंख्यानं दीर्घश्च * आमयावी। * शृङ्गवृन्दाभ्यामारकन् * शृङ्गारकः। वृन्दारकः। * फलबर्हाभ्यामिनच् * फलिनः। बर्हिणः। * हृदयाच्चालुरन्यतरस्याम् * हृदयालुः, हृदयी, हृदयिकः, हृदयवान्। * शीतोष्णतृप्रेभ्यस्तदसहने * शीतं न सहते, शीतालुः। उष्णालुः। तृप्रालुः[5]। * हिमाच्चेलुः * हिमेलुः। * बलाद्ूलः * बलूलः। * वातात्समूहे च * वातं न सहते, वातस्य समूहो वा, वातूलः। * तप् पर्वमरुद्भ्याम् * पर्वतः। मरुत्तः।

---

१. पर्षदिति पाठान्तरम्। पर्षद्वलम्। २. वल इति सूत्रे संज्ञायामित्यनुवृत्तेर्न दीर्घः। ३. न च व्रीह्यादिभ्यः सर्वेभ्य इनिठनौ किन्तर्हि शिखामालासंज्ञादिभ्य इनिः। यवखदादिभ्य इकः। अन्येभ्य उभयम्। ४. व्रीह्यादिपाठात् मायी, मायिक इत्यपि। ५. तृप्रः पुरोडाशः। दुःखमिति माधवः।

१२२. बहुलं छन्दसि। * छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् * मंहिष्ठमुभयाविनम्। शुनमष्ट्राव्यचरत। * छन्दसीवनिपौ च वक्तव्यौ * रथीरभूत्। सुमङ्गलीरियं वधूः। मघवानमीमहे।

१२३. ऊर्णाया युस्[1]। ऊर्णायुः।

१२४. वाचो ग्मिनिः। वाग्मी।

१२५. आलजाचटौ बहुभाषिणि। * कुत्सित इति वक्तव्यम् * कुत्सितं बहु भाषते, वाचालः। वाचाटः। यस्तु सम्यग्बहु भाषते स वाग्मीत्येव।

१२६. स्वामिन्नैश्वर्ये। स्वामी।

१२७. अर्श आदिभ्योऽच्[2]। अर्शांस्यस्य विद्यन्ते, अर्शसः।

१२८. द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः। कटकवलयिनी। शङ्खनूपुरिणी। कुष्ठी। विलासी। ककुदावर्ती। काकतालुकी। * प्राण्यङ्गान्न * पाणिपादवती। अत इत्येव। नेह :– चित्रकललाटिकावती।

१२९. वातातीसाराभ्यां कुक् च। वातकी। अतीसारकी। * रोगे चायमिष्यते * नेह :– वातवती गुहा। * पिशाचाच्च * पिशाचकी।

१३०. वयसि पूरणात्। मासः संवत्सरो वा पञ्चमोऽस्यास्तीति, पञ्चमी उष्ट्रः।

१३१. सुखादिभ्यश्च। सुखी। दुःखी। * माला क्षेपे * माली।

१३२. धर्मशीलवर्णान्ताच्च। ब्राह्मणधर्मी। ब्राह्मणशीली। ब्राह्मणवर्णी।

१३३. हस्ताज्जातौ। हस्ती। अन्यत्र हस्तवान्।

१३४. वर्णाद् ब्रह्मचारिणि। वर्णी ब्रह्मचारी।

१३५. पुष्करादिभ्यो देशे। पुष्करिणी। पद्मिनी। अन्यत्र पुष्करवान् करी। * बाहूरुपूर्वपदाद्बलात् * बाहुबली। ऊरुबली। * सर्वादेश्च * सर्वधनी। सर्वबीजी। * अर्थाच्चासन्निहिते * अर्थी। सन्निहिते तु, अर्थवान्। * तदन्ताच्च * धान्यार्थी। हिरण्यार्थी।

१३६. बलादिभ्यो मतुबन्यतरस्याम्। बलवान्, बली। उत्साहवान्, उत्साही।

---

१. अत्र छन्दसीति केचिदनुवर्त्तयन्ति। युक्तञ्चैतत्। अन्यथाहंशुभमोरित्यत्रैवोर्णाग्रहणं कुर्यात्। २. आकृतिगणोऽयम्।

१३७. संज्ञायां मन्माभ्याम्[1]। प्रथिमिनी । दामिनी । होमिनी । सोमिनी ।

१३८. कंशंभ्यां वभयुस्तितुतयसः । कंवः । कम्भः । कंयुः । कन्तिः । कन्तुः । कन्तः । कंयः । शंवः । शम्भः । शंयुः । शन्तिः । शन्तुः । शन्तः । शंयः ।

१३९. तुन्दि[2]वलिवटेर्भः । तुन्दिभः । वलिभः[3] । वटिभः ।

१४०. अहंशुभमोर्युस् । अहंयुः अहङ्कारवान् । शुभंयुः शुभान्वितः ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
पञ्चमाध्यायस्य द्वितीयपादः समाप्तः ।



१. इनिरित्यनुवर्त्तते । २. वृद्धा नाभिस्तुन्दिः । ३. पामादित्वाद्वलिनोऽपि ।

# अथ पञ्चमाध्यायस्य तृतीयपादः ।

१. प्राग्दिशो विभक्तिः[1] । ततः । यतः । कुतः ।

२. किंसर्वनामबहुभ्योऽद्व्यादिभ्यः । अधिक्रियतेऽयं प्राग्दिशः । कुतः । कुत्र । यतः । यत्र । बहुतः । बहुत्र ।

३. इदम इश् । इह ।

४. एतेतौ रथोः । इशोऽपवादः । एतर्हि । इत्थम् ।

५. एतदोऽन् । एतदः[2] । एतर्हि । इत्थम् । अन्[3] । अतः । अत्र ।

६. सर्वस्य सोऽन्यतरस्यां दि । सदा, सर्वदा ।

७. पञ्चम्यास्तसिल् । कुतः[4] । यतः । ततः । बहुतः । अतः । इतः । अमुतः ।

८. तसेश्च[5] । कुतः ?

९. पर्यभिभ्याञ्च । * सर्वोभयार्थाभ्यामेव * परितः[6] । अभितः[7] ।

१०. सप्तम्यास्त्रल् । कुत्र । यत्र । तत्र । बहुत्र ।

११. इदमो हः । त्रलोऽपवादः । इह ।

१२. किमोऽत्[8] । क्व[9], कुत्र ।

१३. वा ह च छन्दसि । कुहस्थः कुह जग्मथुः ।

१४. इतराभ्योऽपि दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान्, ततो भवान् । तत्र भवान् । तं भवन्तम्, ततो भवन्तम् । तत्र भवन्तम् । तेन भवता, ततो भवता । तत्र भवतेत्यादि[10] ।

---

१. समर्थानामिति प्रथमाद्वेति च निवृत्तम् । वेति तु अनुवर्त्तत एव । इतः परं स्वार्थिकाः प्रत्ययाः । २. एतद इति एको योगः । रथोरिति वर्त्तते । ३. अन् इति द्वितीयो योगः । एतद इत्येव । ४. कुतिहोरिति कुः । ५. प्रतियोगे पञ्चम्यास्तसिरित्यादि वक्ष्यति तस्येत्यर्थः । स्वरार्थं विभक्त्यर्थञ्चेदम् । ६. सर्वत इत्यर्थः । ७. उभयत इत्यर्थः । ८. वा ग्रहणमपकृष्यते । ९. क्वातीति क्वादेशः । १०. एवं दीर्घायुः । देवानां प्रियः । आयुष्मान् ।

१५. सर्वैकान्यकिंयत्तदः काले दा। सर्वस्मिन्काले, सदा, सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। कालादन्यत्र सर्वत्रेत्यादि।

१६. इदमो र्हिल्। अस्मिन्काले, एतर्हि।

१७. अधुना। अधुना।[1]

१८. दानीञ्च। इदानीम्।

१९. तदो दा च।[2] तदा, तदानीम्।

२०. तयोर्दार्हिलौ च छन्दसि। इदा हि व उपस्तुतिम्। तर्हि।

२१. अनद्यतने र्हिलन्यतरस्याम्। कर्हि, कदा। यर्हि, यदा। तर्हि, तदा। एतर्हि।

२२. सद्यः परुत्परार्येषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः। समानेऽहनि, सद्यः। पूर्वस्मिन् वत्सरे, परुत्। पूर्वतरे वत्सरे, परारि। अस्मिन्वत्सरे, ऐषमः। परस्मिन्नहनि, परेद्यवि। अस्मिन्नहनि, अद्य। पूर्वस्मिन्नहनि, पूर्वेद्युः। अन्यस्मिन्नहनि, अन्येद्युः। अन्यतरस्मिन्नहनि, अन्यतरेद्युः। इतरस्मिन्नहनि, इतरेद्युः। अपरस्मिन्नहनि, अपरेद्युः। अधरस्मिन्नहनि, अधरेद्युः। उभयोरह्नोरुभयेद्युः। उत्तरस्मिन्नहनि, उत्तरेद्युः। * द्युश्चोभयाद्वक्तव्यः * उभयद्युः।

२३. प्रकारवचने थाल्। तेन प्रकारेण, तथा। यथा।

२४. इदमस्थमुः। थालोऽपवादः। अनेन प्रकारेण, इत्थम्। * एतदोऽपि वाच्यः * एतेन प्रकारेण, इत्थम्।

२५. किमश्च। केन प्रकारेण, कथम्।

२६. था हेतौ च छन्दसि।[3] कथा ग्रामं न पृच्छसि। कथा दाशेम।

२७. दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः।[4] पूर्वस्यां पूर्वस्याः पूर्वा वा दिक्, पुरस्तात्। अधस्तात्। अवस्तात्।

२८. दक्षिणोत्तराभ्यामतसुच्। अस्तातेरपवादः। दक्षिणतः। उत्तरतः।

२९. विभाषा परावराभ्याम्। परतः, परस्तात्। अवरतः, अवरस्तात्।

---

१. इदम् इश्। यस्येति लोपः। २. तदो दावचनमनर्थकं विहितत्वात्। ३. विभक्तिसंज्ञानां पूर्णोऽवधिः। ४. यथासंख्यमत्र नेष्यते।

३०. अञ्चेर्लुक्[१] । प्राच्यां प्राच्याः प्राची वा दिक्, देशः, कालो वा प्राक् । उदक् ।

३१. उपर्युपरिष्टात् । उपरि, उपरिष्टाद्वा वसति, आगतः, रमणीयं वा ।

३२. पश्चात्[२] । पश्चादागतः । पश्चाद्रमणीयम् ।

३३. पश्च पश्चा चच्छन्दसि । पश्च हि सः । नो ते पश्चा ।

३४. उत्तराधरदक्षिणादातिः । उत्तरात् । अधरात् । दक्षिणात् ।

३५. एनबन्यतरस्यामदूरेऽपञ्चम्याः । उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । केचिद्दिक्शब्दमात्रात्प्रत्ययमिमं मन्यन्ते । पूर्वेण ग्रामम् । अपरेण ।

३६. दक्षिणादाच्[३] । दक्षिणा वसति । नेह :— दक्षिणादागतः ।

३७. आहि च दूरे । दक्षिणाहि, दक्षिणा वसति ।

३८. उत्तराच्च । उत्तराहि, उत्तरा ।

३९. पूर्वाधरावराणामसि पुरधवश्चैषाम् । पुरः, अधः, अवः ।

४०. अस्ताति च । पुरस्तात् । अधस्तात् । अवस्तात् ।

४१. विभाषावरस्य । अवस्तात् । अवरस्तात ।

४२. संख्याया विधार्थे धा । चतुर्धा । पञ्चधा ।

४३. अधिकरणविचाले च । एकं राशिं पञ्चधा कुरु ।

४४. एकाद्धो ध्यमुञन्यतरस्याम् । ऐकध्यम् , एकधा ।

४५. द्वित्र्योश्च धमुञ् । द्वैधम्, द्विधा । त्रैधम्, त्रिधा । * धमुञन्तात्स्वार्थे डदर्शनम् । पथि द्वैधानि ।

४६. एधाच्च । द्वेधा । त्रेधा ।

४७. याप्ये पाशप् । कुत्सितो भिषक्, भिषक्पाशः ।

४८. पूरणाद्भागे तीयादन्[४] । द्वितीयः, तृतीयो भागः ।

४९. प्रागेकादशभ्योऽच्छन्दसि[५] । चतुर्थः । पञ्चमो भागः ।

---

१. अस्तातेरित्यर्थः । २. अपरस्य पश्चभावः आतिश्च प्रत्ययोऽस्तातेर्विषये । ३. अपञ्चम्या इत्येव । ४. स्वरे विशेषः । ५. अन् वर्तते ।

५०. षष्ठाष्टमाभ्यां ञ च । षष्ठो भागः, षाष्ठः, षष्ठः । आष्टमः, अष्टमः ।

५१. मानपश्वङ्गयोः कन्लुकौ च[1] । षष्ठको भागो मानञ्चेत् । अष्टमो भागः पश्वङ्गञ्चेत् ।

५२. एकादाकिनिच्चासहाये । चात्कन्लुकौ । एकाकी, एककः, एकः ।

५३. भूतपूर्वे चरट् । आढ्यो भूतपूर्वः, आढ्यचरः ।

५४. षष्ठ्या रूप्य च । कृष्णस्य भूतपूर्वो गौः, कृष्णरूप्यः । कृष्णचरः । शुभ्राया भूतपूर्वः, शुभ्रारूप्यः ।

५५. अतिशायने तमबिष्ठनौ । अयमेषामतिशयेनाढ्यः, आढ्यतमः । लघुतमो लघिष्ठः ।

५६. तिङश्च । सर्व इमे पचन्ति । अयमेषामतिशयेन पचति, पचतितमाम्[2] ।

५७. द्विवचनविभज्योपपदे[3] तरबीयसुनौ । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुर्लघुतरः, लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः, पटीयांसः ।

५८. अजादी[4] गुणवचनादेव । नेह :– पाचकतरः । पाचकतमः ।

५९. तुश्छन्दसि । अतिशयेन कर्त्ता, करिष्ठः[5] । दोहीयसी धेनुः ।

६०. प्रशस्यस्य श्रः[6] । अयमेषामतिशयेन प्रशस्यः, श्रेष्ठः[7] । अयमनयोरतिशयेन प्रशस्यः, श्रेयान् ।

६१. ज्य च । ज्येष्ठः, ज्यायान्[8] ।

६२. वृद्धस्य च । ज्येष्ठः, ज्यायान् । पक्षे वर्षिष्ठः[9], वर्षीयान् ।

६३. अन्तिकबाढयोर्नेदसाधौ । नेदिष्ठः, नेदीयान् । साधिष्ठः, साधीयान् ।

---

१. चाद्यथाप्राप्तम् । महाविभाषया सिद्धे लुग्वचनं पूर्वत्र जानौ नित्याविति । २. इष्ठन्नोदाहियते । गुणवचनादेव नियमितत्वात् । ३. द्वयोरेकस्यातिशये विभज्ये चोपपद इत्यर्थः । ४. इष्ठन्नीयसावित्यर्थः । ५. तुरिष्ठेमेयःस्विति तुर्लोपः । ६. अजादी इति पूर्वसूत्रादनुवर्त्त्येह सप्तम्या विपरिणम्यते । तेनाजाद्योरिदम् । प्रशस्यस्यागुणवचनत्वादप्राप्तौ अजादिप्रत्ययौ आदेशविधानसामर्थ्याद्भवतः । ७. प्रकृत्यैकाजिति प्रकृतिभावाट्टिलोपयस्येतिलोपौ न । ८. ज्यादादीयस इत्यात्वम् । ९. प्रियस्थिरेति वर्षादेशः ।

६४. युवाल्पयोः कनन्यतरस्याम् । कनिष्ठः, कनीयान् । पक्षे यविष्ठः, अल्पिष्ठः ।

६५. विन्मतोर्लुक् । अतिशयेन स्रग्वी, स्रजिष्ठः, स्रजीयान् । अतिशयेन त्वग्वान्, त्वचिष्ठः, त्वचीयान् ।

६६. प्रशंसायां रूपप्[1] । प्रशस्तः पटुः, पटुरूपः । प्रशस्तं पचति, पचतिरूपम् ।

६७. ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । ईषदूनो विद्वान्, विद्वत्कल्पः । यशस्कल्पम्[2] । यजुष्कल्पम्[3] । विद्वद्देश्यः । पचतिकल्पम् ।

६८. विभाषा सुपो बहुच् पुरस्तात्तु । ईषदूनः पटुः, बहुपटुः । पटुकल्पः ।

६९. प्रकारवचने जातीयर्[4] । पटुप्रकारः, पटुजातीयः ।

७०. प्रागिवात्कः । इवे प्रतिकृतावित्यतः प्राक् काधिकारः ।

७१. अव्ययसर्वनाम्नामकच्प्राक्टेः[5] । उच्चकैः । नीचकैः । शनकैः । सर्वके । विश्वके । उभयके ।

७२. कस्य च दः । धकित्, धिक् । हिरकुत्, हिरुक् ।

७३. अज्ञाते । कस्यायमश्वोऽश्वकः ? गर्दभकः ? उष्ट्रकः ? * ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् * युवकयोः । आवकयोः । युष्मकासु । अस्मकासु । युष्मकाभिः । अस्मकाभिः । * अकच्प्रकरणे तूष्णीमः काम् वक्तव्यः * तूष्णीकामास्ते । * शीले को मलोपश्च * तूष्णींशीलः, तूष्णीकः । पचतकि । जल्पतकि ।

७४. कुत्सिते । कुत्सितोऽश्वोऽश्वकः ।

७५. संज्ञायां कन् । शूद्रकः । राधकः । धारकः ।

७६. अनुकम्पायाम् । पुत्रकः[6] ।

७७. नीतौ च तद्युक्तात्[7] । हन्त ते धानकाः । गुडकाः । एहकि । अद्धकि ।

---

१. सुबन्तात्तिङन्ताच्च । २. सोऽपदादाविति सः । ३. इणः ष इति षः । ४. प्रकारवति चायं थाल्तु प्रकारमात्रे । ५. तिङश्चेत्यनुवर्त्तते । ६. अनुकम्पितः पुत्र इत्यर्थः । ७. सामदानादिरुपायो नीतिः । पूर्वेणानुकम्प्यमानात्प्रत्ययः । अनेन तु परम्परासम्बन्धेऽपीति विशेषः ।

७८. बह्वचो मनुष्यनाम्नष्ठज्वा[1]। देविकः, देवदत्तकः।

७९. घनिलचौ च[2]। देवियः, देविलः, देविकः। देवदत्तकः।

८०. प्राचामुपादेरडज्वुचौ च[2]। उपडः, उपकः, उपिकः, उपियः, उपिलः, उपेन्द्रदत्तकः।

८१. जातिनाम्नः कन्। सिंहकः। शरभकः। रासभकः।

८२. अजिनान्तस्योत्तरपदलोपश्च। अनुकम्पितो व्याघ्राजिनो व्याघ्रकः। सिंहकः।

८३. ठाजादावूर्ध्वं[3] द्वितीयादचः[4]। अनुकम्पितो देवदत्तः, देविकः, देवियः, देविलः। वायुकः। पितृकः। * चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः * अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः। * अनजादौ च विभाषा लोपो वक्तव्यः * देवकः, देवदत्तकः। * लोपः पूर्वपदस्य च * दत्तिकः, दत्तियः, दत्तिलः, दत्तकः। * विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्यः * देवदत्तः, दत्तः, देवः। सत्यभामा, भामा, सत्या। * उवर्णाल्ल इलस्य * भानुदत्तः, भानुलः। * ऋवर्णादपि * सवित्रियः। सवितृलः। * द्वितीयं सन्ध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः * अनुकम्पितः कहोडः, कहिकः। लहोडः, लहिकः। * एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः * अनुकम्पितो वागाशीर्दत्तः, वाचिकः[5]।

८४. शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्। पूर्वस्यापवादः। अनुकम्पितः शेवलदत्तः, शेवलिकः, शेवलियः, शेवलिलः। सुपरिकः। विशालिकः। वरुणिकः। अर्यमिकः।

८५. अल्पे। अल्पं तैलं तैलकम्।

८६. ह्रस्वे। ह्रस्वो वृक्षो वृक्षकः।

८७. संज्ञायां कन्। पूर्वस्यापवादः। वंशकः। वेणुकः।

---

१. ठाजादाविति द्वितीयादच ऊर्ध्वस्य लोपः। २. चाद्यथाप्राप्तम्। ३. ठग्रहणमुको द्वितीयत्वे कादेशे विधानार्थम्। ४. चतुर्थादनजादौ च लोपः पूर्वपदस्य च। अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च॥ ५. षडङ्गुलिदत्तः, षडिक इति तु ठाजादिवचनात् सिद्धम्।

८८. कुटीशमीशुण्डाभ्यो रः। ह्रस्वा कुटी, कुटीरः। शमीरः। शुण्डारः।

८९. कुत्वा डुपच्। ह्रस्वा कुतूः[1], कुतुपः।

९०. कासूगोणीभ्यां ष्टरच्। ह्रस्वा कासूः[2], कासूतरी। गोणीतरी।

९१. वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे[3]। वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः।

९२. किंयत्तदो निर्धारणे[4] द्वयोरेकस्य डतरच्। अनयोः कतरो वैष्णवः? यतरः। ततरः। महाविभाषया यः। कः।

९३. वा बहूनां जातिपरिप्रश्ने[5] डतमच्। कतमो भवतां कठः? यतमः। ततमः। वाग्रहणादकजपि। यकः। सकः। महाविभाषया यः। सः। * किमोऽस्मिन्विषये डतरजपि * कतरः।

९४. एकाच्च प्राचाम्। अनयोरेकतरो मैत्रः। एषामेकतमः।

९५. अवक्षेपणे कन्। व्याकरणकेन[6] गर्वितः।

९६. इवे प्रतिकृतौ। अश्व इव प्रतिकृतिः[7], अश्वकः।

९७. संज्ञायां[8] च। अश्वसदृशस्य संज्ञा, अश्वकः।

९८. लुम्मनुष्ये। चञ्चेव[9], चञ्चा। वर्ध्रिका। खरकुटी।

९९. जीविकार्थे चापण्ये। वासुदेवः। शिवः। स्कन्दः[10]। पण्ये तु, हस्तिकान् विक्रीणीते।

१००. देवपथादिभ्यश्च[11]। देवपथः। हंसपथः।

१०१. वस्तेर्ढञ्[12]। वस्तिरिव, वास्तेयम्, वास्तेयी।

---

१. कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्। २. कासूरायुधविशेषः। ३. प्रवृत्तिनिमित्ततनुत्वे। ४. जात्या, क्रियया, गुणेन, संज्ञया वा समुदायादेकदेशस्य पृथक् करणं निर्धारणम्। ५. जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। ६. येनेतरः कुत्स्यते तदिहोदाहरणम्। स्वतः कुत्सिते तु कुत्सित इत्यस्य। ७. प्रतिकृतिः प्रतिरूपकम्। ८. अप्रतिकृत्यर्थ आरम्भः। ९. चञ्चा तृणमयः पुमान्। १०. देवलकानां जीविकार्थासु देवमूर्त्तिष्विदम्। ११. आदिशब्दः प्रकारे। अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोपः कनो देवपथादिषु॥ देवपथादिराकृतिगणः। १२. प्रतिकृताविति निवृत्तम्।

१०२. शिलाया ढः। शिलेव, शिलेयम्। शिलाया इति योगविभागाड्ढञपि। शैलेयम्।

१०३. शाखादिभ्यो यः। शाखेव, शाख्यः। मुख्यः। जघन्यः। अग्र्यः, शरण्यः।

१०४. द्रव्यं च भव्ये। द्रव्यमयं[1] ब्राह्मणः।

१०५. कुशाग्राच्छः। कुशाग्रमिव, कुशाग्रीया बुद्धिः।

१०६. समासाच्च तद्विषयात्। काकतालीयो[2] देवदत्तस्य वधः। अजाकृपाणीयः।

१०७. शर्करादिभ्योऽण्। शर्करेव, शार्करम्।

१०८. अङ्गुल्यादिभ्यष्ठक्। अङ्गुलीव, आङ्गुलिकः। भरुजेव, भारुजिकः।

१०९. एकशालायाष्ठजन्यतरस्याम्। एकशालेव, एकशालिकः, ऐकशालिकः।

११०. कर्कलोहितादीकक्। कार्कीकः[3]। लौहितीकः स्फटिकः।

१११. प्रत्नपूर्वविश्वेमात्थाल् छन्दसि। तं प्रत्नथा पूर्वथा विश्वथेमथा।

११२. पूगाञ्ञ्योऽग्रामणीपूर्वात्[4]। लौहितध्वज्यः। ग्रामणीपूर्वात्तु, देवदत्तो ग्रामणीरेषां[5] त इमे देवदत्तकाः।

११३. व्रातच्फञोरस्त्रियाम्[6]। कापोतपाक्यः। कौञ्जायन्यः। ब्राध्नायन्यः। स्त्रियान्तु,कपोतपाकी। कौञ्जायनी।

११४. आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात्। क्षौद्रक्यः। मालव्यः। क्षौद्रकी। ब्राह्मणराजन्यात्तु, गोपालका ब्राह्मणाः। शालङ्कायना राजन्याः।

११५. वृकाट्टेण्यण्[7]। वार्कैण्यः।

---

१. द्रुरिव, द्रव्यम्। इवार्थे यः। २. इह काकतालसमागमसदृशश्चौरसमागम इति समासार्थः। तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः। ३. कर्कः शुक्लोऽश्वः स इवेत्यर्थः। इवार्थो निवृत्तः। ४. नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगास्तद्वाचकात्स्वार्थे इत्यर्थः। ५. स एषां ग्रामणीरिति कन्। ६. उत्सेधजीविनः सङ्घा व्राताः। ७. आयुधजीविसङ्घादिति अभिजिदित्यतः प्राग् वर्त्तते।

११६. दामन्यादित्रिगर्त्तषष्ठाच्छः[1]। दामनीयः। औलपीयः। कौण्डोपरथीयः। दाण्डकीयः।

११७. पर्श्वादियौधेयादिभ्योऽणञौ। पार्शवः। यौधेयः।

११८. अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो[2] यञ्। आभिजित्यः। वैदभृत्यः। शालावत्यः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः।

११९. ञ्यादयस्तद्राजाः। लोहितध्वजाः[3]। कपोतपाकाः। कौञ्जायनाः। ब्राध्नायनाः।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
पञ्चमाध्यायस्य तृतीयपादः समाप्तः।



१. त्रिगर्त्तः षष्ठो येषां ते त्रिगर्त्तषष्ठाः। आहुस्त्रिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकी। क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः॥ २. अणन्तेभ्योऽभिजिदादिभ्य इत्यर्थः। ३. तद्राजस्येति बहुषु लुक्।

# अथ पञ्चमाध्यायस्य चतुर्थपादः ।



१. पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च । द्वौ द्वौ पादौ, द्विपदिकां[1] ददाति । द्विशतिकाम् । पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् । द्विमोदकिकाम् ।

२. दण्डव्यवसर्गयोश्च[2] । द्वौ पादौ, द्विपदिकां दण्डितः । द्विशतिकां व्यवसृजति[3] ।

३. स्थूलादिभ्यः प्रकारे कन् । जातीयरोऽपवादः । स्थूलकः । अणुकः । * चञ्चद्बृहतोरुपसंख्यानम् * चञ्चत्कः । बृहत्कः । * सुराया अहौ * सुरावर्णोऽहिः, सुरकः ।

४. अनत्यन्तगतौ क्तात् । छिन्नकम् । भिन्नकम् । अभिन्नकम् ।

५. न सामिवचने । सामिकृतम्[4] । अर्धकृतम् ।

६. बृहत्या आच्छादने । बृहतिका[5] ।

७. अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः । अषडक्षीणो[6] मन्त्रः । आशितङ्गवीनमरण्यम्[7] । अलंकर्मीणः । अलंपुरुषीणः । ईश्वराधीनः ।

८. विभाषाञ्चेरदिक्स्त्रियाम् । प्राक्, प्राचीनम् । प्रत्यक्, प्रतीचीनम् । अवाक्, अवाचीनम् । अर्वाक्, अर्वाचीनम्[8] । दिक्स्त्रियान्तु, प्राची । उदीची ।

---

१. तद्धितार्थ इति समासे कृते प्रत्ययः । वुन्नन्तं स्त्रियाम् । २. अवीप्सार्थमिदम् । ३. ददातीत्यर्थः । ४. अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्पूर्वेण कन् न प्राप्तः । इदमेवात्यन्तस्वार्थिकमपि कनं ज्ञापयति । बहुतरकम् । ५. द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ६. द्वाभ्यामेव कृत इत्यर्थः । नित्योऽयं ख उत्तरसूत्रे विभाषाग्रहणात् । ७. आशिता गावोऽस्मिन्निति । निपातनात्पूर्वस्य मुम् । ८. अन्येऽपि केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते । तमबादयः प्राक्कनः । ञ्यादयः प्राग्वुनः । आमादयः प्राङ्मयटः । बृहती । जात्यन्ताः । समासान्ताश्चेति । ९. अर्वन्तं निकृष्टमञ्चतीति ।

९. जात्यन्ताच्छ बन्धुनि[1]। ब्राह्मणजातीयः। क्षत्रियजातीयः।

१०. स्थानान्ताद्विभाषा सस्थानेनेति चेत्[2]। पितृस्थानीयः, पितृस्थानः।

११. किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे। किन्तमाम्। प्राह्णेतमाम्। पचतितमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु, उच्चैस्तमस्तरुः।

१२. अमु च छन्दसि। प्र तं नय प्रतरम्।

१३. अनुगादिनष्ठक्[3]। अनुगादी एव, आनुगादिकः।

१४. णचः स्त्रियामञ्[4]। व्यावक्रोशी। व्यावहासी वर्त्तते।

१५. अणिनुणः[5]। सांराविणं वर्त्तते। सांकूटिनम्।

१६. विसारिणो मत्स्ये। वैसारिणो मत्स्यः।

१७. संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्। पञ्चकृत्वो भुङ्क्ते।

१८. द्वित्रिचतुर्भ्यः सुच्। कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिः। चतुः।

१९. एकस्य सकृच्च[6]। सकृद् भुङ्क्ते।

२०. विभाषा बहोर्धाऽविप्रकृष्टकाले[7]। बहुधा दिवसस्य भुङ्क्ते। विप्रकृष्टकाले तु, बहुकृत्वो मासस्य भुङ्क्ते।

२१. तत्प्रकृतवचने मयट्[8]। प्रकृतमन्नमन्नमयम्। अपूपमयम्। यवागूमयी। यद्वा अन्नमयो यज्ञः। अपूपमयं पर्व।

२२. समूहवच्च बहुषु। मोदकाः प्रकृताः, मौदकिकम्, मोदकमयम्। शाष्कुलिकम्, शष्कुलीमयम्। यद्वा मौदकिको यज्ञः, मोदकमयः।

२३. अनन्तावसथेतिहभेषजाञ्ञ्यः। अनन्त एवानन्त्यम्। आवसथ एवावसथ्यम्। इतिह[9] एव, ऐतिह्यम्। भेषजमेव, भैषज्यम्।

२४. देवतान्तात्तादर्थ्ये यत्। अग्निदेवतायै इदम्, अग्निदेवत्यम्। पितृदेवत्यम्।

---

१. जातेर्व्यञ्जकं द्रव्यं बन्धु। २. सस्थानेन तुल्येन चेत्स्थानान्तमर्थवदित्यर्थः। ३. अनुगदतीत्यनुगादी। ४. कर्मव्यतिहार इति णच्। ५. अभिविधौ भाव इनुण्। ६. चात्सुच्। तस्य संयोगान्तस्येति लोपः। ७. अविप्रकृष्ट आसन्नः। ८. प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम्। भावेऽधिकरणे वा ल्युट्। ९. इतिहेतिनिपातसमुदायः।

२५. पादार्घाभ्यां च। पादार्थमुदकं पाद्यम्। अर्घ्यम्। * नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्यया वक्तव्याः * नूत्नम्, नूतनम्, नवीनम्। * नश्च पुराणे प्रात् * प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्। * भागरूपनामभ्यो धेयः * भागधेयम्। रूपधेयम्। नामधेयम्। * आग्नीध्रसाधारणादञ् * आग्नीध्रम्। साधारणम्। आग्नीध्री। साधारणी।

२६. अतिथेर्ञ्यः[1]। अतिथये इदमातिथ्यम्।

२७. देवात्तल्[2]। देव एव, देवता।

२८. अवेः कः। अविरेव, अविकः।

२९. यावादिभ्यः कन्। याव एव, यावकः। मणिकः।

३०. लोहितान्मणौ। लोहितको मणिः।

३१. वर्णे चानित्ये। लोहितकः कोपेन। * लोहिताल्लिङ्गबाधनं वा * लोहितिका, लोहिनिका कोपेन।

३२. रक्ते। लोहितिका, लोहिनिका वा शाटी।

३३. कालाच्च[3]। कालकं मुखं वैलक्ष्येण। कालकः पटः। कालिका शाटी।

३४. विनयादिभ्यष्ठक्। विनय एव, वैनयिकः। सामयिकः। * उपायो ह्रस्वत्वं च * औपयिकः।

३५. वाचो व्याहृतार्थायाम्। संदेशवाग्, वाचिकं स्यात्।

३६. तद्युक्तात्कर्मणोऽण्। कर्मैव, कार्मणम्[4]।

३७. ओषधेरजातौ। औषधं पिबति। जातौ तु, ओषधयः क्षेत्रे रूढाः।

३८. प्रज्ञादिभ्यश्च। प्रज्ञ एव, प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः।

३९. मृदस्तिकन्। मृत्तिका।

४०. सस्नौ प्रशंसायाम्[5]। रूपपोऽपवादः। प्रशस्ता मृत, मृत्सा, मृत्स्ना।

४१. वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि। यो नो दुरेवो वृकतिः। ज्येष्ठतातिं बर्हिषदम्।

४२. बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्। बहुशो ददाति। अल्पशः।

---

१. तादर्थ्य इत्येव। २. तादर्थ्य इति निवृत्तम्। ३. पूर्वसूत्रद्वयमप्यनुवर्त्तते। ४. वाचिकं श्रुत्वा क्रियमाणं कर्म। ५. उत्तरसूत्रेऽन्यतरस्यां ग्रहणान्नित्योऽयम्।

* बह्वल्पार्थान्मङ्गलामङ्गलवचनम् * नेह :– बहूनि ददात्यनिष्टेषु । अल्पं ददात्याभ्युदयिकेषु ।

४३. संख्यैकवचनाच्च वीप्सायाम् । द्वौ द्वौ ददाति, द्विशः । माषं माषशः । प्रस्थशः[1] ।

४४. प्रतियोगे पञ्चम्यास्तसिः । प्रद्युम्नः कृष्णतः प्रति । * आद्यादिभ्य[2] उपसंख्यानम् * आदितः । मध्यतः । पृष्ठतः । पार्श्वतः । स्वरतः । वर्णतः ।

४५. अपादाने चाहीयरुहोः । ग्रामत आगच्छति । हीयरुहोस्तु, स्वर्गाद्धीयते । पर्वतादवरोहति ।

४६. अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः । चारित्रतोऽतिगृह्यते[3] । वृत्ततो न व्यथते । वृत्ततः क्षिप्तः ।

४७. हीयमानोपयोगाच्च । वृत्तेन हीयते, वृत्तेन पापः, वृत्ततः ।

४८. षष्ठ्या व्याश्रये । देवा अर्जुनतोऽभवन्[4] । आदित्याः कर्णतः ।

४९. रोगाच्चापनयने । प्रवाहिकातः[5] कुरु ।

५०. कृभ्वस्तियोगे संपद्यकर्त्तरि च्विः । * अभूततद्भाव इति वक्तव्यम् * अकृष्णः कृष्णः संपद्यते तं करोति, कृष्णीकरोति[6] । ब्रह्मीभवति । गङ्गीस्यात् । गार्गीभवति[7] । दोषाभूतमहः[8] । दिवाभूता रात्रिः ।

५१. अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । अरूकरोति । उन्मनीस्यात् । उच्चक्षूकरोति । विचेतीकरोति । विरहीकरोति । विरजीकरोति ।

५२. विभाषा साति कार्त्स्न्ये । कृत्स्नं शस्त्रमग्निः संपद्यते, अग्निसाद्भवति[9] । अग्नीभवति ।

५३. अभिविधौ सम्पदा च[10] । अग्निसात्संपद्यते, अग्निसाद्भवति शस्त्रम्, अग्नीभवति । जलसात्संपद्यते, जलीभवति लवणम् ।

५४. तदधीनवचने । राजसात्करोति[11] । राजसात्संपद्यते ।

---

१. परिमाणशब्दा वृत्तावेकार्था एव २. आद्यादिराकृतिगणः । ३. चारित्रेणान्यानतिक्रम्य वर्त्तत इत्यर्थः । ४. अर्जुनस्य पक्षे । ५. प्रतीकारमस्याः कुर्वित्यर्थः । ६. अस्य च्वाविति ईत्वम् । ७. क्यच्व्योश्चेति यलोपः । ८. अव्ययस्य च्वावित्वं नेति वाच्यम् । ९. सात्पदाद्योरिति षत्वं न । १०. चात्कृभ्वस्तियोगेऽपि । पक्षे च्विः । एकस्या व्यक्तेः संपूर्णतयान्यथाभावः कार्त्स्न्यम् । बहूनां व्यक्तीनां किंचिदेकदेशेन तथात्वं त्वभिविधिः । ११. राजाधीनमित्यर्थः ।

५५. देये त्रा च । विप्राधीनं देयं करोति, विप्रत्राकरोति । विप्रत्रा-संपद्यते ।

५६. देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । देवत्रा वन्दे रमे वा । बहुलग्रहणादन्यत्रापि । बहुत्रा जीवतो मनः ।

५७. अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ[1] डाच् । पटपटाकरोति[2] । पटपटाभवति ।

५८. कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । द्वितीयं तृतीयं कर्षणं करोति, द्वितीयाकरोति । तृतीयाकरोति । शम्बाकरोति[3] । बीजाकरोति[4] ।

५९. संख्यायाश्च गुणान्तायाः । द्विगुणाकरोति, त्रिगुणाकरोति[5] क्षेत्रम् ।

६०. समयाच्च यापनायाम् । समयाकरोति[6] ।

६१. सपत्रनिष्पत्रादतिव्यथने । सपत्राकरोति[7] मृगम् । निष्पत्राकरोति[8] ।

६२. निष्कुलान्निष्कोषणे । निष्कुलाकरोति[9] दाडिमम् ।

६३. सुखप्रियादानुलोम्ये । सुखाकरोति[10] । प्रियाकरोति ।

६४. दुःखात्प्रातिलोम्ये । दुःखाकरोति[11] स्वामिनम् ।

६५. शूलात्पाके । शूलाकरोति[12] मांसम् ।

६६. सत्यादशपथे । सत्याकरोति भाण्डं वणिक् । शपथे तु सत्यं करोति विप्रः ।

६७. मद्रात्परिवापणे[13] । मद्राकरोति[14] कुमारम् । * भद्राच्चेति वक्तव्यम् * भद्राकरोति ।

---

१. द्व्यच् अवरं न्यूनं न तु ततो न्यूनमनेकाजिति यावत् तादृशमर्धं यस्य तस्मात् । २. डाचि बहुलं द्वे इति द्वित्वम् । नित्यमाम्रेडित इति पररूपम् । ३. अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः । ४. बीजेन सह कर्षति । ५. क्षेत्रकर्मकं कर्षणं द्विगुणं त्रिगुणं वा करोतीत्यर्थः । ६. समयं यापयतीत्यर्थः । ७. सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः । ८. सपुङ्खशरस्यापरपार्श्वेन निर्गमनान्निष्पत्रं करोतीत्यर्थः । ९. निर्गतं कुलमन्तरवयवानां समूहो यस्मात्तादृशमित्यर्थः । १०. अनुकूलाचरणेनानन्दयतीत्यर्थः । ११. पीडयति । १२. पचतीत्यर्थः । १३. परिवापणं मुण्डनम् । १४. मङ्गलमुण्डनेन संस्करोति ।

६८. **समासान्ताः** । अधिकारोऽयमापादसमाप्तेः। उपराजम् । द्विपुरी ।

६९. **न पूजनात्** । सुराजा । अतिराजा । सुगौः । अतिगौः । * स्वतिभ्यामेव * नेह :-परमराजः । * प्राग्बहुव्रीहिग्रहणञ्च * सुसक्थः । स्वक्षः ।

७०. **किमः क्षेपे** । कुत्सितो राजा, किंराजा । किंसखा । किंगौः । क्षेपादन्यत्र तु, कश्चायं राजा, किंराजः । किंसखः । किंगवः ।

७१. **नञस्तत्पुरुषात्** । अराजा । असखा ।

७२. **पथो विभाषा** । अपथम् , अपन्थाः । तत्पुरुषादित्येव । अपथो देशः ।

७३. **बहुव्रीहौ संख्येये डजबहुगणात्** । उपदशाः । उपविंशाः । द्वित्राः। पञ्चषाः । * संख्यायास्तत्पुरुषस्य वाच्यः * निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ।

७४. **ऋक्पूरब्धूःपथामानक्षे**[1] । अर्धर्चः । अनृचबह्वृचावध्येतर्येव । विष्णोः पूः, विष्णुपुरम्[2] । विमलापं सरः । द्वीपम्[3] । राजधुरा । जलपथः । रम्यपथः । अक्षे तु, अक्षधूः । दृढधूरक्षः ।

७५. **अच् प्रत्यन्ववपूर्वात्सामलोम्नः** । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् । * कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते * कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विभूमः प्रासादः । * संख्याया नदीगोदावरीभ्याञ्च * पञ्चनदम् । सप्तगोदावरम् । अजिति योगविभागादन्यत्रापि । पद्मनाभः ।

७६. **अक्ष्णोऽदर्शनात्**[4] । गवामक्षीव, गवाक्षः ।

७७. **अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः** । अविद्यमानानि चत्वार्यस्य, अचतुरः । विचतुरः । सुचतुरः । * त्र्युपाभ्यां चतुरोऽजिष्यते * त्रिचतुराः । उपचतुराः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च, अक्षिभ्रुवम् । दाराश्च गावश्च, दारगवम् । ऊरू च अष्ठीवन्तौ च, ऊर्वष्ठीवम्[5] । पदष्ठीवम्[6] । नक्तं च दिवा च, नक्तन्दिवम् । रात्रौ च दिवा च, रात्रि-

१. अ अनक्षे इतिच्छेदः । २. क्लीबत्वं लोकात् । ३. द्व्यन्तरुपसर्गेभ्योऽप ईत् । ४. अचक्षुःपर्यायादित्यर्थः । ५. ऊरू च अष्ठीवन्तौ च । निपातनाट्टिलोपः । ६. पादशब्दस्य पद्भावो निपातनात् ।

न्दिवम् । अहनि च दिवा च, अहर्दिवम्[1] । सरजसम् । निश्चितं श्रेयो निःश्रेयसम्[2] । पुरुषस्यायुः, पुरुषायुषम् । द्व्यायुषम् । त्र्यायुषम् । ऋग्यजुषम् । जातोक्षः । महोक्षः । वृद्धोक्षः । उपशुनम्[3] । गोष्ठे श्वा, गोष्ठश्वः ।

७८. ब्रह्महस्तिभ्यां वर्चसः । ब्रह्मवर्चसम् । हस्तिवर्चसम् । * पल्यराजभ्यां चेति वक्तव्यम् * पल्यवर्चसम् । राजवर्चसम् ।

७९. अवसमन्धेभ्यस्तमसः । अवतमसम् । सन्तमसम् । अन्धतमसम्[4] ।

८०. श्वसो वसीयःश्रेयसः । श्वोवसीयसम्[5] । श्वःश्रेयसम् ।

८१. अन्ववतप्ताद्रहसः । अनुरहसम् । अवरहसम् । तप्तरहसम् ।

८२. प्रतेरुरसः सप्तमीस्थात् । उरसीति, प्रत्युरसम् ।

८३. अनुगवमायामे । अनुगवं यानम् ।

८४. द्विस्तावा त्रिस्तावा वेदिः । द्विस्तावा[6], त्रिस्तावा वेदिः ।

८५. उपसर्गादध्वनः । प्रगतोऽध्वानं प्राध्वो रथः ।

८६. तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः । द्वे अङ्गुली प्रमाणमस्य, द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ।

८७. अहःसर्वैकदेशसंख्यातपुण्याच्च[7] रात्रेः । अहश्च रात्रिश्चाहोरात्रः[8] । सर्वा रात्रिः, सर्वरात्रः । पूर्वं रात्रेः, पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्विरात्रम् । अतिरात्रः ।

८८. अह्नोऽह्न एतेभ्यः[9] । सर्वाह्णः । पूर्वाह्णः । संख्याताह्नः । द्वयोरह्नोर्भवः, द्व्यह्नः[10] । द्व्यह्ना[11] । द्व्यह्नप्रियः । अत्यह्नः । दीर्घाह्नी[12] प्रावृट् ।

८९. न संख्यादेः समाहारे । द्वयोरह्नोः समाहारः, द्व्यहः । त्र्यहः ।

---

१. वीप्सायां द्वन्द्वः । अहन्यहनीत्यर्थः । २. तत्पुरुष एव । नेह :— निःश्रेयान् पुरुषः । ३. टिलोपाभावः सम्प्रसारणं च निपात्यते । ४. अन्धयतीत्यन्धम् । पचाद्यच् । ५. वसुशब्दः प्रशस्तवाची तत ईयसुनि वसीयः । श्वश्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयामाचष्टे । ६. यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाश्वमेधादौ तत्रेदं निपातनम् । ७. चात्संख्याव्ययादेः । ८. अहर्ग्रहणं द्वन्द्वार्थम् । ९. एतेभ्यः सर्वादिभ्यः । १०. कालाट्ठञ् । तस्य द्विगोर्लुगिति लुक् । ११. स्त्रियामदन्तत्वाट्टाप् । १२. क्षुभ्नादिषु चेति न णः ।

९०. उत्तमैकाभ्यां च[1] । पुण्याहम् । सुदिनाहम् । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थमित्येके । संख्याताहः ।

९१. राजाहःसखिभ्यष्टच्[2] । परमराजः । अतिराजी । उत्तमाहः । कृष्णसखः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह :– मद्राणां राज्ञी, मद्रराज्ञी ।

९२. गोरतद्धितलुकि । परमगवः । पञ्चगवम् । पञ्चगवधनः । तद्धितलुकि तु, पञ्चभिर्गोभिः क्रीतः, पञ्चगुः ।

९३. अग्राख्यायामुरसः । अश्वानामुर इवाश्वोरसम्[3] । हस्त्युरसम् ।

९४. अनोश्मायःसरसां जातिसंज्ञयोः । उपानसम् । अमृताश्मः । कालायसम् । मण्डूकसरसम् । इति जातिः । महानसम् । पिण्डाश्मः । लोहितायसम् । जलसरसम् । इति संज्ञा ।

९५. ग्रामकौटाभ्यां च तक्ष्णः । ग्रामतक्षः । कौटतक्षः[4] ।

९६. अतेः शुनः । अतिश्वो वराहः । अतिश्वी सेवा ।

९७. उपमानादप्राणिषु । आकर्षः श्वेव, आकर्षश्वः । फलकश्वः ।

९८. उत्तरमृगपूर्वाच्च[5] सक्थ्नः । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि, फलकसक्थम् ।

९९. नावो द्विगोः । द्विनावम् । त्रिनावम् । द्विनावरूप्यः । पञ्चनावधनः । अतद्धितलुकीत्येव । पञ्चनौः ।

१००. अर्धाच्च । नावोऽर्धमर्धनावम् ।

१०१. खार्याः[6] प्राचाम् । द्विखारम्, द्विखारि । अर्धखारम्, अर्धखारि ।

१०२. द्वित्रिभ्यामञ्जलेः । द्व्यञ्जलम्, द्व्यञ्जलि । अतद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतः, द्व्यञ्जलिः ।

१०३. अनसन्तान्नपुंसकाच्छन्दसि । ब्रह्मसामं भवति । देवच्छन्दसानि ।

---

१. उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । अहःसर्वैकदेशेति सूत्रेऽन्त्यत्वात् । २. तत्पुरुषस्येति वर्त्तते पञ्चम्यन्ततया विपरिणम्यते च । ३. मुख्योऽश्व इत्यर्थः । ४. कुट्यां भवः, कौटः । स्वतन्त्र इत्यर्थः । ५. चादुपमानादपि । ६. द्विगोरर्धाच्चेति वर्त्तते ।

१०४. ब्रह्मणो जानपदाख्यायाम्। सुराष्ट्रे ब्रह्मा, सुराष्ट्रब्रह्मः। अवन्तिब्रह्मः।

१०५. कुमहद्भ्यामन्यतरस्याम्। कुब्रह्मः, कुब्रह्मा। महाब्रह्मः[1], महाब्रह्मा।

१०६. द्वन्द्वाच्चुदषहान्तात्समाहारे। वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारादन्यत्र तु, प्रावृट्शरदौ।

१०७. अव्ययीभावे शरत्प्रभृतिभ्यः। उपशरदम्। प्रतिविपाशम्। * जराया जरश्च * उपजरसम्। * प्रतिपरसमनुभ्योऽक्ष्णः * प्रत्यक्षम्। परोक्षम्[2]। समक्षम्। अन्वक्षम्।

१०८. अनश्च। उपराजम्। अध्यात्मम्।

१०९. नपुंसकादन्यतरस्याम्। उपचर्मम्, उपचर्म।

११०. नदीपौर्णमास्याग्रहायणीभ्यः। उपनदम्, उपनदि। उपपौर्णमासम्, उपपौर्णमासि। उपाग्रहायणम्, उपाग्रहायणि।

१११. झयः। उपसमिधम्, उपसमित्।

११२. गिरेश्च सेनकस्य[3]। उपगिरम्, उपगिरि।

११३. बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्। दीर्घे सक्थिनी यस्य सः, दीर्घसक्थः। जलजाक्षी। स्वाङ्गादन्यत्र दीर्घसक्थि शकटम्। स्थूलाक्षा वेणुयष्टिः।

११४. अङ्गुलेर्दारुणि। पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं[4] दारु। बहुव्रीहेरन्यत्र तु, द्वे अङ्गुली प्रमाणमस्याः, द्व्यङ्गुला[5] यष्टिः। दारुणोऽन्यत्र पञ्चाङ्गुलिर्हस्तः।

११५. द्वित्रिभ्यां ष मूर्ध्नः। द्विमूर्धः। त्रिमूर्धः।

११६. अप्पूरणीप्रमाण्योः। कल्याणी पञ्चमी यासां रात्रीणां ताः, कल्याणपञ्चमाः रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। * प्रधानपूरण्यामेव *

---

१. आन्महत इत्यात्त्वम्। २. अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यात्समासः। परोक्षे लिडिति निर्देशादोकारः। परोक्षा क्रियेत्यादि तु अर्श आद्यचि। ३. सेनकग्रहणं पूजार्थम्। ४. अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते। ५. तद्धितार्थेति समासे तत्पुरुषस्याङ्गुलेरित्यच्।

नेह :– कल्याणपञ्चमीकः[1] पक्षः । * नेतुर्नक्षत्रे अब्वक्तव्यः * मृगो नेता यासां ताः, मृगनेत्रा रात्रयः । पुष्यनेत्राः ।

११७. अन्तर्बहिर्भ्यां च लोम्नः । अन्तर्लोमः । बहिर्लोमः ।

११८. अच्नासिकायाः संज्ञायां नसं चास्थूलात् । द्रुरिव नासिकास्य, द्रुणसः[2] । खरणसः । स्थूलात्तु, स्थूलनासिकः । * खुरखराभ्यां वा नस् * खुरणाः । खरणाः । पक्षेऽजपीष्यते । खुरणसः । खरणसः ।

११९. उपसर्गाच्च । उन्नता नासिकास्य, उन्नसः । प्रणसः[3] । * वेर्ग्रो वक्तव्यः * विगता नासिकास्य, विग्रः । * ख्यश्च * विख्यः ।

१२०. सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । शोभनं श्वोऽस्य, सुश्वः । सुदिवः । शारेरिव कुक्षिरस्य, शारिकुक्षः । चतस्रोऽश्रयोऽस्य, चतुरश्रः । एण्या इव पादावस्य, एणीपदः । अजपदः । प्रोष्ठपदः[4] ।

१२१. नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् । अहलः, अहलिः । असक्थः, असक्थिः । दुर्हलः, दुर्हलिः । दुःसक्थः, दुःसक्थिः । सुहलः, सुहलिः । सुसक्थः । सुसक्थिः ।

१२२. नित्यमसिच् प्रजामेधयोः[5] । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः ।

१२३. बहुप्रजाश्छन्दसि । बहुप्रजा निर्ऋतिमाविवेश ।

१२४. धर्मादनिच् केवलात् । कल्याणधर्मा[6] ।

१२५. जम्भा सुहरिततृणसोमेभ्यः । शोभनो जम्भोऽस्य[7], सुजम्भा । हरितजम्भा । तृणजम्भा । सोमजम्भा । अन्यत्र तु, पतितजम्भः ।

१२६. दक्षिणेर्मा लुब्धयोगे । दक्षिणे ईर्मं व्रणं यस्य स दक्षिणेर्मा[8] मृगः ।

१२७. इच्कर्मव्यतिहारे । केशाकेशि[9] । मुसलामुसलि ।

---

१. तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतयेह पूरणी रात्रिरप्रधानम् । पुंवद्भावप्रतिषेधेऽपि प्रधानपूरण्या एव ग्रहणादिह पुंवद्भावः । २. पूर्वपदादिति णः । ३. उपसर्गादिति णत्वम् । ४. प्रोष्ठो गौः । ५. नञ्दुःसुभ्य इत्येव । नित्यग्रहणात्क्वचिदन्यत्रापीति काशिका । तेनाल्पमेधस इत्यादि सिद्धम् । ६. संदिग्धसाध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः । ७. जम्भो भक्ष्ये दन्ते च । ८. व्याधेन कृतव्रण इत्यर्थः । ९. अन्येषामपीति पूर्वपदान्तस्य दीर्घः ।

१२८. द्विदण्ड्यादिभ्यश्च। द्वौ दण्डौ यस्मिन्प्रहरणे, द्विदण्डि प्रहरणम्। द्विमुसलि। उभाहस्ति। उभयाहस्ति।

१२९. प्रसंभ्यां जानुनोर्ज्ञुः। प्रगते जानुनी यस्य सः, प्रज्ञुः। संज्ञुः।

१३०. ऊर्ध्वाद्विभाषा। ऊर्ध्वज्ञुः, ऊर्ध्वजानुः।

१३१. ऊधसोऽनङ्। कुण्डोध्नी[1]। घटोध्नी। * ऊधसोऽनङि स्त्रीग्रहणम् * नेह :– महोधाः पर्जन्यः। घटोधो धैनुकम्।

१३२. धनुषश्च। शार्ङ्गधन्वा।

१३३. वा संज्ञायाम्। शतधन्वा, शतधनुः।

१३४. जायाया निङ्। युवतिर्जाया यस्य सः, युवजानिः[2]।

१३५. गन्धस्येदुत्पूतिसुसुरभिभ्यः। उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। * गन्धस्येत्त्वे तदेकान्त[3]ग्रहणम् * सुगन्धि पुष्पं सलिलञ्च। नेह :– सुगन्ध[4] आपणिकः।

१३६. अल्पाख्यायाम्। सूपस्य गन्धो लेशोऽस्मिन्, सूपगन्धि भोजनम्। घृतगन्धि।

१३७. उपमानाच्च। पद्मस्येव गन्धोऽस्य, पद्मगन्धि।

१३८. पादस्य लोपो[5]ऽहस्त्यादिभ्यः। व्याघ्रस्येव पादौ यस्य, व्याघ्रपात्। हस्त्यादिभ्यस्तु, हस्तिपादः। कुसूलपादः।

१३९. कुम्भपदीषु[6] च। कुम्भपदी। शतपदी।

१४०. संख्यासुपूर्वस्य। द्विपात्। सुपात्।

१४१. वयसि दन्तस्य दतृ। द्विदन्। चतुर्दन्। षोडन्[7]। सुदन्। सुदती। वयसोऽन्यत्र, द्विदन्तः करी।

१४२. छन्दसि च। उभयतोदतः प्रतिगृह्णाति।

१४३. स्त्रियां संज्ञायाम्। अयोदती। फालदती।

---

१. बहुव्रीहेरूधसो ङीष्। २. पुंवद्भावः। लोपो व्योरिति यलोपः। ३. एकान्त एकदेश इवाविभागेन लक्ष्यमाण इत्यर्थः। ४. शोभना गन्धा गन्धद्रव्याण्यस्य। ५. स्थानिद्वारेणायं समासान्तः। ६. पादस्य लोपो ङीप् च। ७. षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वञ्च।

१४४. विभाषा श्यावारोकाभ्याम् । श्यावदन्, श्यावदन्तः । अरोकदन्, अरोकदन्तः ।

१४५. अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । कुड्मलाग्रदन्, कुड्मलाग्रदन्तः । शुद्धदन्, शुद्धदन्तः । शुभ्रदन्, शुभ्रदन्तः । वृषदन्, वृषदन्तः । वराहदन्, वराहदन्तः ।

१४६. ककुदस्यावस्थायां लोपः । अजातककुद्वत्सः । पूर्णककुद् वृषः ।

१४७. त्रिककुत्पर्वते । त्रिककुत्[१] । अन्यत्र त्रिककुदः ।

१४८. उद्विभ्यां काकुदस्य । उत्काकुत्[२] । विकाकुत् ।

१४९. पूर्णाद्विभाषा । पूर्णकाकुत्, पूर्णकाकुदः ।

१५०. सुहृद्दुर्हृदौ मित्रामित्रयोः । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः । दुर्हृदयः ।

१५१. उरःप्रभृतिभ्यः कप्[३] । व्यूढोरस्कः । प्रियसर्पिष्कः । *अर्थान्नञः* अनर्थकम् ।

१५२. इनः स्त्रियाम् । बहुदण्डिका नगरी । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका । पुंसि तु, बहुदण्डी, बहुदण्डिको ग्रामः ।

१५३. नद्यृतश्च । बहुकुमारीको देशः । कल्याणपञ्चमीकः पक्षः । बहुकर्तृकः ।

१५४. शेषाद्विभाषा[४] । महायशस्कः, महायशाः । शेषादित्युक्तेर्नेह :— व्याघ्रपाद्, सुगन्धिः, प्रियपथः—इत्यादि । उपबहवः । उत्तरपूर्वा । सपुत्रः —इत्यादि च ।

१५५. न संज्ञायाम् । विश्वे देवा अस्य, विश्वदेवः ।

१५६. ईयसश्च । बहवः श्रेयांसोऽस्य, बहुश्रेयान्[५] । बहुश्रेयसी ।

---

१. पर्वतविशेषः । २. काकुदं तालु । ३. इह पुमान्, अनड्वान्, पयः, लक्ष्मीरित्येकवचनान्तानि पठ्यन्ते । ततोऽन्यत्र शेषाद्विभाषेति वा कप् । द्विपुमान्, द्विपुंस्क इत्यादि । ४. अनुक्तसमासान्तादिति, शेषाधिकारस्थादिति चावृत्त्यार्थः । ५. ईयसो बहुव्रीहेर्नेति गोस्त्रियोरिति न ।

१५७. वन्दिते भ्रातुः । प्रशस्तो भ्राता यस्य, प्रशस्तभ्राता[१]। अन्यत्र मूर्खभ्रातृकः ।

१५८. ऋतश्छन्दसि । हता माता यस्य, हतमाता ।

१५९. नाडीतन्त्र्योः स्वाङ्गे । बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । अस्वाङ्गे तु, बहुनाडीकः स्तम्भः । बहुतन्त्रीका वीणा ।

१६०. निष्प्रवाणिश्च । निर्गता प्रवाण्यस्य[२], निष्प्रवाणिः पटः ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
पञ्चमाध्यायस्य चतुर्थपादः समाप्तः ।



१. न पूजनादिति निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागित्युक्तम् ।
२. प्रवाणी तन्तुवायशलाका । प्रवयतेर्ल्युट् । समासवानो नव इत्यर्थः ।

# अथ षष्ठाध्यायस्य प्रथमपादः ।



१. **एकाचो द्वे प्रथमस्य** । अधिकारोऽयं प्राक्संप्रसारणविधानात् । जजागार । पपाच[1] । इयाय[2] । आर । बभूव ।

२. **अजादेर्द्वितीयस्य** । पूर्वापवादः । इदमपि पूर्ववदधिक्रियते । अटिटिषति । अशिशिषति । उर्णुनाव ।

३. **नन्द्राः संयोगादयः** । उन्दिदिषति । अड्डिडिषति । अर्चिचिषति । अजादेरेव[3] । नेह :– दिद्रासति । इन्दिद्रियिषति । उब्जिजिषति[4] । अरार्यते[5] । * ईर्ष्यतेस्तृतीयस्येति वाच्यम् * ईर्ष्यियिषति । केचिदाहुर्व्यञ्जनस्य । ईर्ष्यियिषति । ऐर्ष्यियत्, ऐर्षिष्यत्[6] । * कण्ड्वादेस्तृतीयस्य * कण्डूयियिषति । * यथेष्टं नामधातुषु * पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । अजादेस्तु आद्येतरस्य । अशिश्वीयिषति । अश्वीयियिषति ।

४. **पूर्वोऽभ्यासः** । पपाच । बभूव । पिपक्षति । पापच्यते । जुहोति । अपीपचत् ।

५. **उभे अभ्यस्तम्** । ददति । ददत् । जुह्वति । जुह्वत् ।

६. **जक्षित्यादयः षट्** । जक्षति[7] । जाग्रति । दरिद्रति । शासति । चकासति । दीध्यते[8] । वेव्यते । दीध्यत्[9] । वेव्यत् ।

७. **तुजादीनां दीर्घोऽभ्यासस्य** । तूतुजानः । मामहानः । दाधार यः पृथिवीम् । स तूताव ।

८. **लिटि धातोरनभ्यासस्य** । पपाच । पपाठ । बभूव । आत । * छन्दसि वा * यो जागार तमृचः कामयन्ते । दाति प्रियाणि चिद्वसु ।

---

१. प्रथमत्वमिह व्यपदेशिवद्भावात् । २. इहैकाच्त्वं व्यपदेशिवद्भावात् । ३. अजादेरिति बहुव्रीहिः कर्मधारयश्च । ४. उब्जिर्दकारोपधः । भुजन्युब्जाविति निपातनाद्बः । स च द्वित्वानन्तरम् । दकारोच्चारणसामर्थ्यात् । ५. यकारपररेफस्य न द्वित्वनिषेधः । भाष्ये तथोदाहरणात् । ६. अजादेर्द्वितीयस्येति द्वित्वं तृतीयैकाच इति पक्षे वार्त्तिकाप्रवृत्तेः । ७. अदभ्यस्तादित्यत् । ८. अभ्यस्तानामादिरिति स्वरः फलम् । ९. छान्दसत्वाद् व्यत्ययेन परस्मैपदम् ।

९. सन्यङोः । पिपक्षति । बुभूषति । पिपतिषति । पापच्यते । अटाट्यते ।

१०. श्लौ । जुहोति । बिभेति । ददाति ।

११. चङि । अचीकमत । अपीपचत् । आटिटत् ।

१२. दाश्वान् साह्वान् मीढ्वांश्च[1] । दाश्वांसो दाशुषः सुतम् । साह्वान् बलाहकः । मीढुस्तोकाय तनयाय । * कृञादीनां के द्वे भवत इति वक्तव्यम् * क्रियतेऽनेनेति, चक्रम् । चिक्लिदम् । * चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम् * चराचरः । चलाचलः । पतापतः । वदावदः । पक्षे चरः । चलः । पतः । वदः । * हन्तेर्घत्वञ्च * घनाघनः, हनः * पाटेर्णिलुक् चोक्च दीर्घश्चाभ्यासस्य * पाटूपटः, पाटः ।

१३. ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे[2] । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । नेह :– कारीषगन्ध्याकुलम् । कौमुदगन्ध्याकुलम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमो न । परमकारीषगन्धीपुत्रः । उपसर्जने तु तदादिनियमः । अतिकारीषगन्ध्यापुत्रः ।

१४. बन्धुनि बहुव्रीहौ । कारीषगन्ध्या बन्धुरस्य, कारीषगन्धीबन्धुः । कौमुदगन्धीबन्धुः । * मातज्मातृकमातृषु वा * कारीषगन्धीमातः, कारीषगन्ध्यामातः[3] । कारीषगन्धीमातृकः, कारीगन्ध्यामातृकः । कारीषगन्धीमाता, कारीषगन्ध्यामाता ।

१५. वचिस्वपियजादीनां किति[4] । उक्तम्, ऊचतुः । सुप्तम्, सुषुपतुः । इष्टः, ईजतुः । उप्तम् , ऊपतुः । ऊढः, ऊहतुः । उषितः, ऊषतुः । उतः । संवीतः । हूतः । उदितः । शूनः ।

१६. ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च[5] । गृहीतः, गृह्णाति । जीनः, जिनाति । ऊयतुः, ऊवतुः । विद्धः, विध्यति । उष्टः, उशन्ति । विचितः, विचति । वृक्णः, वृश्चति । पृष्टः[6], पृच्छति । भृष्टः, भृज्जति ।

---

१. एते दाश्व दाने, षह मर्षणे, मिहि सेचने—एभ्यो धातुभ्यः क्वस्वन्ता निपात्यन्ते । २. करीषस्येव गन्धोऽस्य, करीषगन्धिः । तस्यापत्यं स्त्री, कारीषगन्ध्या, तस्याः पुत्रः पतिर्वेति विग्रहः । ३. अस्मादेव निपातनान्मातजादेशः कब्विकल्पश्च । ४. यजादयो धातुपाठे भ्वादौ द्रष्टव्याः । ५. वार्तिकत्यपि । ६. प्रश्न इत्यत्र तु न । प्रश्ने चासन्नेति निर्देशेन तदभावनिपातनात् ।

१७. लिट्यभ्यासस्योभयेषाम्[1] । उवाच, उवचिथ । सुष्वाप, सुष्वपिथ । इयाज, इयजिथ । उवाप, उवपिथ । जग्राह, जग्रहिथ । जिज्यौ, जिज्यिथ । उवाय । विव्याध । उवाश । वव्रश्च । पप्रच्छ । बभर्ज ।

१८. स्वापेश्चङि । असूषुपत्, असूषुपताम् , असूषुपन् ।

१९. स्वपिस्यमिव्येञां यङि । सोषुप्यते । सेसिम्यते । वेवीयते ।

२०. न वशः । वावश्यते ।

२१. चायः की । चेकीयते ।

२२. स्फायः स्फी निष्ठायाम् । स्फीतः, स्फीतवान् ।

२३. स्त्यः प्रपूर्वस्य । प्रस्तीतः, प्रस्तीतवान् , प्रस्तीमः, प्रस्तीमवान् ।

२४. द्रवमूर्त्तिस्पर्शयोः श्यः । शीतं घृतम् । शीतं जलम् । अन्यत्र संश्यानो वृश्चिकः ।

२५. प्रतेश्च । प्रतिशीनः । प्रतिशीनवान् ।

२६. विभाषाभ्यवपूर्वस्य । अभिशीनम् , अभिश्यानम् । अवशीनम् , अवश्यानम् । व्यवस्थितविभाषेयम् । नेह :– समवश्यानः ।

२७. श्रृतं पाके । श्रृतं क्षीरं हविर्वा । व्यवस्थितविभाषाश्रयणात्‌ क्षीर-हविर्भ्यामन्यत्र श्राणं श्रपितं वा ।

२८. प्यायः पी । स्वाङ्गे नित्यम् । पीनं मुखम् । पीनौ बाहू । पीनमुरः । अन्यत्र वा । प्यानः, पीनः स्वेदः ।

२९. लिड्यङोश्च । पिप्ये, पिप्याते । पेपीयते ।

३०. विभाषा श्वेः[2] । शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः । शोशू-यते, शेश्वीयते ।

३१. णौ च संश्चङोः । शुशावयिषति, शिश्वाययिषति । अशूशवत्[3] , अशिश्वयत्[4] ।

---

१. वच्यादीनां ग्रह्यादीनाञ्चेत्यर्थः । २. लिड्यङोरिति सम्प्रसारणमिति च वर्त्तते । ३. संप्रसारणं तदाश्रयं च कार्यं बलवदित्यादौ सम्प्रसारणं पूर्वरूपञ्च । ४. अल-घुत्वान्न दीर्घः ।

३२. ह्वः सम्प्रसारणम्[1]। जुहावयिषति, अजूहवत[2]। अजूहावत्।

३३. अभ्यस्तस्य[3] च। जुहाव, जोहूयते। जुहूषति।

३४. बहुलं छन्दसि। इन्द्रमाहुव ऊतये।

३५. चायः की। न्यश्न्यं चिक्युर्न निचिक्युरन्यम्। बहुलग्रहणानुवृत्तेर्नेह :- अग्निं ज्योतिर्निचाय्य।

३६. अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्ताः। इन्द्रश्च विष्णो यदपस्पृधेथाम्[4]। अर्कमानृचुः। वसून्यानृहुः। चिच्युषे। यस्तित्याज। श्रातास्[5]त इन्द्र सोमाः। श्रिता[5] नो ग्रहाः। आशीरं[6] दुहे। मध्यत आशीर्तः[5]।

३७. न सम्प्रसारणे सम्प्रसारणम्। विद्धः। विचितः। यूनः। * ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि * तृचं सूक्तम्। लोके तु, त्र्यृचानि। * रयेर्मतौ बहुलम् * रेवान्, रयिमान् पुष्टिवर्धनः।

३८. लिटि वयो यः[7]। उवाय, ऊयतुः, ऊयुः।

३९. वश्चान्यतरस्यां किति। ऊवतुः, ऊवुः। ऊयतुः, ऊयुः।

४०. वेञः[8]। ववौ। ववतुः। ववुः।

४१. ल्यपि च। प्रवाय। उपवाय।

४२. ज्यश्च। प्रज्याय। उपज्याय।

४३. व्यश्च। प्रव्याय। उपव्याय।

४४. विभाषा परेः। परिवीय[9], परिव्याय।

४५. आदेच उपदेशेऽशिति[10]। ग्लै-ग्लाता, ग्लातुम्, ग्लातव्यम्।

---

१. संप्रसारणमित्यनुवर्त्तमाने पुनः सम्प्रसारणग्रहणं विभाषेत्यस्य निवृत्त्यर्थम्। २. काण्यादीनां वेति ह्रस्वविकल्पः। ३. अभ्यस्तीभविष्यत इत्यर्थः। ४. स्पर्धेर्लङि-आथाम्। ५. श्रीञो निष्ठायाम्। ६. श्रीञ एव क्विपि। ७. न सम्प्रसारणम्। वेञो वयिरिति वा वयादेशे। ८. न सम्प्रसारणमिति वर्त्तते। ९. हल इति दीर्घः। ह्रस्वस्येति तुक् तु परत्वात्तेन बाध्यते। १०. श एव इत्, शिदिति कर्मधारये यस्मिन्विधिस्तदादावल्ग्रहण इति तदादिविधौ शिदादौ प्रत्यये नेत्यर्थः। तेन जग्ले मम्ले इत्यादौ न। प्रसज्यप्रतिषेधोऽयम्। आत्वञ्चानैमित्तिकमादावेव भवति।

शो–निशाता। निशातुम्। निशातव्यम्। शिति तु, ग्लायति। म्लायति।

४६. न व्यो लिटि[1]। विव्याय, विव्ययिथ।

४७. स्फुरतिस्फुलत्योर्घञि। विस्फारः। विष्फारः[2]। विस्फालः। विष्फालः।

४८. क्रीङ्जीनां णौ। क्रापयति। अध्यापयति। जापयति।

४९. सिध्यतेरपारलौकिके। अन्नं साधयति। पारलौकिके तु, तपस्तापसं सेधयति[3]।

५०. मीनातिमिनोतिदीङां ल्यपि च। प्रमाता, प्रमातव्यम्, प्रमातुम्, प्रमाय। निमाता, निमाय। दाता, दातव्यम्, दातुम्, प्रदाय।

५१. विभाषा लीयतेः[4]। लाता, लातुम्, लातव्यम्, विलाय। लेता, लेतुम्, लेतव्यम्, विलीय। * निमीमिलियां खलचोरात्वं नेति वाच्यम * ईषन्निमयः। निमयः। ईषत्प्रमयः। प्रमयः। ईषद्विलयः। विलयः। मयः। लयः

५२. खिदेश्छन्दसि। चित्तं चिखाद, चिखेद।

५३. अपगुरो णमुलि। अपगारम्, अपगारम्। अपगोरम्, अपगोरम्। अस्यपगारमस्यपगोरं युध्यन्ते।

५४. चिस्फुरोर्णौ। [5]चापयति, चाययति। स्फारयति। स्फोरयति।

५५. प्रजने[6] वीयतेः। वापयति, वाययति वा गाः पुरोवातः।

५६. बिभेतेर्हेतुभये[7]। मुण्डो भापयते[8], भीषयते वा। अन्यत्र तु, कुञ्चिकया भाययति।

५७. नित्यं स्मयतेः[9]। जटिलो विस्मापयते। नेह :– कुञ्चिकया विस्माययति।

---

१. आदेच इत्यधिक्रियते नित्यं स्मयतेरिति यावत्। २. स्फुरतिस्फुलत्योर्निर्निविभ्यः इति वा षत्वम्। ३. तापसः सिध्यति, तत्त्वं निश्चिनोति तं तपः प्रेरयति ४. लीङ् श्लेषण इति दिवादेर्ली श्लेषण इति क्र्यादेश्च यका निर्देशः। ५. ज्ञपादेस्तु मित्वाद्ध्रस्वत्वे चपयति, चययति। ६. प्रजनं गर्भग्रहणम्। ७. हेतुरिह स्वतन्त्रस्य प्रयोजकः। ८. भीस्म्योरित्यात्मनेपदम्। ९. हेतुपदमिहानुवर्त्तते। तेन हेतोः स्मय इत्यर्थः।

५८. सृजिदृशोर्झल्यमकिति[1]। गुणापवादः। स्रष्टा, स्रष्टुम्, स्रष्टव्यम्, अस्राक्षीत्। द्रष्टा, द्रष्टुम्, द्रष्टव्यम्, अद्राक्षीत्। नेह :– सर्जनम्। दर्शनम्। किति तु, सृष्टः। दृष्टः।

५९. अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्। त्रप्ता, तर्प्ता[2], तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। किति तु, तृप्तः, दृप्तः।

६०. शीर्षश्छन्दसि। शीर्ष्णः शिष्णो जगतः।

६१. ये च तद्धिते। शीर्षण्यः। * वा केशेषु * शीर्षण्याः, शिरस्या वा केशाः।

६२. अचि शीर्षः। स्थूलशिरस इदं स्थौलशीर्षम्। हास्तिशीर्षिः[3]।

६३. पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु[4]। पदः, पादान्। पदा, पादेन। पद्भ्याम्, पादाभ्यामित्यादि। दतः, दन्तान्। दता, दन्तेन। दद्भ्याम्, दन्ताभ्यामित्यादि। नसः, नासिकाः। नसा, नासिकया। नोभ्याम्, नासिकाभ्यामित्यादि। मासः, मासान्। मासा, मासेन। माभ्याम्, मासाभ्यामित्यादि। हृन्दि, हृदयानि। हृदा, हृदयेन। हृद्भ्याम्, हृदयाभ्यामित्यादि। निशः, निशाः। निशा, निशया। निड्भ्याम्, निशाभ्यामित्यादि। असानि, असृञ्जि। अस्ना, असृजा। असभ्याम्, असृग्भ्यामित्यादि। यूष्णः, यूषान्। यूष्णा, यूषेण। यूषभ्याम्, यूषाभ्यामित्यादि। दोष्णः, दोषान्। दोष्णा, दोषेण। दोषभ्याम्, दोषाभ्यामित्यादि। यकानि, यकृन्ति। यक्ना, यकृता। यकभ्याम्, यकृद्भ्यामित्यादि। शकानि, शकृन्ति। शक्ना, शकृता। शकभ्याम्, शकृद्भ्यामित्यादि। उदानि, उदकानि। उद्ना, उदकेन। उदभ्याम्, उदकाभ्यामित्यादि। आसानि, आस्यानि। आस्ना, आस्येन। आसभ्याम्,

---

१. धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न :– रज्जुसृड्भ्याम्, देवदृग्भ्याम्। २. रधादिभ्यश्चेति वेट्। ३. बाह्वादित्वादिञ्। हस्तिशिरसोऽपत्यमिति विग्रहः। ४. पाद-दन्त-नासिका-मास-हृदय-निशा-असृज्-यूष-दोष-यकृत्-शकृत-उदक-आस्ये-ति स्थानिशब्दाः समानार्थकत्वात् समानाधिकवर्णघटितत्वाच्च बोध्याः। यत्तु आसनशब्दस्यासन्नादेश इति काशिकायामुक्तं तत्प्रामादिकम्। केचिदिह छन्दसीत्यनुवर्त्तयन्ति। अपरे पुनरविशेषेणेच्छन्ति। प्रभृतिग्रहणं प्रकारार्थम्। तेन ककुद्दोषणी। पदङ्घ्रिश्चरणोऽस्त्रियाम्। आसन्यम्प्राणमूचुः। दक्षिणं दोर्निशाचरः। इत्यादि सिद्धम्।

आस्याभ्यामित्यादि । * मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा * मांसि, मांसानि । मांसा, मांसेन । मान्भ्याम्, मांसाभ्यामित्यादि । पृतः, पृतनाः । पृता, पृतनया । पृद्भ्याम्, पृतनाभ्यामित्यादि । स्नूनि, सानूनि । स्नुना, सानुना । स्नुभ्याम्, सानुभ्यामित्यादि ।

६४. धात्वादेः षः सः । षह[1]–सहते । षिच–सिञ्चति । * सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः * षोडीयति । षण्ढीयति । ष्ठीव्यति, ष्ठीवति । ष्वष्कते ।

६५. णो नः । णीञ्[2]–नयति । णम–नमति । णह–नह्यति ।

६६. लोपो व्योर्वलि । दिवु–दिदिवान् । भवेत्, पचेत् । ऊयी–ऊतम् । क्नूयी–क्नूतम् । गौधेरः । जीव–जीरदानुः । स्त्रिवु–आस्रेमाणम् ।

६७. वेरपृक्तस्य । ब्रह्महा[3] । घृतस्पृक् । अंशभाक् ।

६८. हल्ङ्याब्भ्यो दीर्घात्[4] सुतिस्यपृक्तं हल् । सखा, उखास्रत् । कुमारी, गौरी, शार्ङ्गरवी । रमा, बहुराजा, कारीषगन्ध्या । अबिभः । अहन् । नेह :— निष्कौशाम्बिः । अतिखट्वः ।

६९. एङ्ह्रस्वात्सम्बुद्धेः । हे हरे, हे भानो । हे राम, हे नदि, हे वधु ।

७०. शेश्छन्दसि बहुलम् । या ते गात्राणाम् । ता ता पिण्डानाम् ।

७१. ह्रस्वस्य पिति कृति तुक् । इत्यः, स्तुत्यः । अग्निचित्, सोमसुत् । प्रकृत्य ।

७२. संहितायाम् । अधिकारोऽयमनुदात्तं पदमेकवर्जमिति यावत । दध्यत्र । मध्वत्र । असंहितायान्तु, दधि अत्र, मधु अत्र ।

७३. छे च । इच्छति[5] । गच्छति । शिवच्छाया ।

७४. आङ्माङोश्च । पदान्ताद्वेत्यस्यापवादः । आच्छाया । माच्छिदत् ।

---

१. सेक्-सृप्-सृ-स्तृ-सृज-स्तृ-स्त्यान्ये दन्त्याजन्तसादयः । एकाचः षोपदेशाः ष्वष्क्-स्विद्-स्वद-स्वञ्ज-स्वप्-स्मिङः ॥ २. णोपदेशास्त्व-नर्द् नाटि-नाथ्-नाध्-नन्द्-नक्क-नॄ-नृतः । नाटेर्दीर्घोऽस्य पर्युदासाट्टादिर्णोपदेश एव । ३. क्विपो वस्य लोपः । वेरित्यत्रेकार उच्चारणार्थः । ४. दीर्घादिति ङ्यापोर्विशेषणम् । ५. एकस्मिन्पदे संहिता नित्येति न तुग्रहितः प्रयुज्यते । संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

७५. दीर्घात् । चेच्छिद्यते । ह्रीच्छति । म्लेच्छति ।

७६. पदान्ताद्वा । लक्ष्मीच्छाया, लक्ष्मीछाया ।

७७. इको यणचि[१] । दध्यत्र, सुध्युपास्यः । मध्वत्र, मध्वरिः । धात्रंशः । लाकृतिः ।

७८. एचोऽयवायावः । हरये । विष्णवे । नायकः । पावकः ।

७९. वान्तो यि प्रत्यये[२] । गव्यम् । नाव्यम् । * गोर्यूतौ छन्दसि * घृतैर्गव्यूतिमुक्षतम् । * अध्वपरिमाणे च * गव्यूतिः[३] ।

८०. धातोस्तन्निमित्तस्यैव । लव्यम् । पव्यम् । अवश्यलाव्यम्[४] । अवश्यपाव्यम् । नेह :– ओयते । औयत ।

८१. क्षय्यजय्यौ शक्यार्थे । क्षेतुं शक्यः, क्षय्यः । जेतुं शक्यो जय्यः । अन्यत्र तु, क्षेयं पापम् । जेयं मनः ।

८२. क्रय्यस्तदर्थे[५] । क्रय्यो गौः । क्रेयमन्यत् ।

८३. भय्यप्रवय्ये चच्छन्दसि । बिभेत्यस्मादिति, भय्यः। प्रवय्या वत्सतरी । लोके भेयम् । प्रवेयम् । * ह्रदय्या उपसंख्यानम् * ह्रदय्या आपः ।

८४. एकः पूर्वपरयोः । अधिकारोऽयं ख्यत्यादित्यतः प्राक् ।

८५. अन्तादिवच्च । ब्रह्मबन्धूः[६] । वृक्षौ[७] । * वर्णाश्रयेऽन्तादिवद्भावप्रतिषेधः * खट्वाभिः, रमाभिः । जुहाव[८] ।

८६. षत्वतुकोरसिद्धः । कोऽसिचत् । कोऽस्य । कोऽस्मै । अधीत्य । प्रेत्य ।

८७. आद् गुणः । उपेन्द्रः, रमेशः । गङ्गोदकम् । कृष्णर्द्धिः[९] । तवल्कारः ।

८८. वृद्धिरेचि । गुणस्यापवादः । कृष्णैकत्वम् । देवैश्वर्यम् । गङ्गौघः । कृष्णौत्कण्ठ्यम् ।

---

१. अचीत्यधिक्रियते सम्प्रसारणाच्चेति यावत् । २. यस्मिन्विधिरिति परिभाषया यादावित्यर्थः । ३. क्रोशयुगम् । ४. लुम्पेदवश्यमः कृत्य इति मलोपः । ५. तस्मै प्रकृत्यर्थाय इदं तदर्थम् । क्रेतारः क्रीणीयुरिति बुद्ध्यापणे प्रसारितमित्यर्थः । ६. इहोङा सवर्णदीर्घे प्रातिपदिकत्वात्सुः । ७. इह सुबन्तत्वात्पदत्वम् । ८. इह पूर्वरूपानन्तरमात्वबुद्ध्या आत औ णल इत्यौत्वं न । ९. उरण्रपर इति रपरत्वं लपरत्वञ्च ।

८९. एत्येधत्यूठ्सु[1] । पररूपगुणापवादः[2] । उपैति । उपैधते । प्रष्ठौहः । नेह :- उपेतः । मा भवान् प्रेदिधत । * अक्षादूहिन्यामुपसंख्यानम् * अक्षौहिणी सेना । * स्वादीरेरिणोः * स्वैरः । स्वैरी । स्वैरिणी[3] । * प्रादूहोढोढ्येषैष्येषु * प्रौहः । प्रौढः । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्[4]। प्रोढवान् । प्रौढिः । प्रैषः । प्रैष्यः[5] । * ऋते च तृतीयासमासे * सुखेन ऋतः, सुखार्तः । दुःखार्तः । * प्रवत्सतरकम्बलवसनार्णदशानामृणे * प्रार्णम् । वत्सतरार्णम् । कम्बलार्णम् । वसनार्णम् । ऋणार्णम्[6] । दशार्णो देशः । नदी च दशार्णा ।

९०. आटश्च[7] । ऐक्षत । ऐधत । ऐधिष्ट । ऐक्षिष्ट । बहुश्रेयस्यै, बहुश्रेयस्याः । चकारोऽधिकविधानार्थः । उस्योमाङोश्च पररूपबाधनार्थः । औस्रीयत् । औङ्कारीयत् । आ + ऊढ ओढस्तमैच्छत्, औढीयत् ।

९१. उपसर्गादृति धातौ[8] । गुणापवादः । प्रार्च्छति । उपार्च्छति ।

९२. वा सुप्यापिशलेः[9] । प्रार्षभीयति, प्रर्षभीयति । उपाल्कारीयति, उपल्कारीयति । ऋतीति तपरकरणान्नेह :- उपऋकारीयति, उपर्कारीयति ।

९३. औतोऽम्शसोः[10] । गां पश्य । द्यां पश्य । गाः । द्याः ।

९४. एङि पररूपम् । वृद्धिरेचीत्यस्यापवादः । प्रेजते । उपोषति । एङादौ[11] सुब्धातौ वा । उपेडकीयति, उपैडकीयति । प्रोघीयति, प्रौघीयति । * शकन्ध्वादिषु पररूपं वाच्यम् * तच्च टेः । शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः केशवेशे । सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः ।

---

१. एचीत्यनुवृत्तमेत्येधत्योर्विशेषणम्-न तूठः । २. पुरस्तादपवादन्यायेनेयं वृद्धिरेङि पररूपमित्यस्यैव बाधिका न त्वोमाङोश्चेत्यस्य । तेनावैहीति वृद्धिरसाधुरेव । ३. लिङ्गविशिष्टपरिभाषया । ४. व्रश्चेति सूत्रे राजेः पृथग्भ्राजिग्रहणमत्र ज्ञापकम् । ५. इषधातोर्घञि ण्यति च एते रूपे । यस्तु ईषधातुस्तस्य प्रेषः प्रेष्य इत्येव । ६. ऋणस्यापनयनाय यदृणं क्रियते तदृणार्णम् । ऋणशब्दो दुर्गभूमौ जले च । ७. अचीत्यनुवर्त्तत एव । ८. उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानं तेन ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न । ९. ऋकारादौ सुब्धातावित्यर्थः । आपिशलिग्रहणं पूजार्थम् । १०. आ ओत इतिच्छेदः । अमिह द्वितीयैकवचनं गृह्यते शसा साहचर्यात् । सुपीत्यधिकाराच्च । नेह :- अचिनवम् । असुनवम् । ११. इह वा सुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयमिदम् ।

७५. दीर्घात् । चेच्छिद्यते । ह्रीच्छति । म्लेच्छति ।

७६. पदान्ताद्वा । लक्ष्मीच्छाया, लक्ष्मीछाया ।

७७. इको यणचि[1] । दध्यत्र, सुध्युपास्यः । मध्वत्र, मध्वरिः । धात्रंशः । लाकृतिः ।

७८. एचोऽयवायावः । हरये । विष्णवे । नायकः । पावकः ।

७९. वान्तो यि[2] प्रत्यये । गव्यम् । नाव्यम् । * गोर्यूतौ छन्दसि * घृतैर्गव्यूतिमुक्षतम् । * अध्वपरिमाणे च * गव्यूतिः[3] ।

८०. धातोस्तन्निमित्तस्यैव । लव्यम् । पव्यम् । अवश्यलाव्यम्[4] । अवश्यपाव्यम् । नेह :– ओयते । औयत ।

८१. क्षय्यजय्यौ शक्यार्थे । क्षेतुं शक्यः, क्षय्यः । जेतुं शक्यो जय्यः । अन्यत्र तु, क्षेयं पापम् । जेयं मनः ।

८२. क्रय्यस्तदर्थे[5] । क्रय्यो गौः । क्रेयमन्यत् ।

८३. भय्यप्रवय्ये चच्छन्दसि । बिभेत्यस्मादिति, भय्यः। प्रवय्या वत्सतरी । लोके भेयम् । प्रवेयम् । * हृदय्या उपसंख्यानम् * हृदय्या आपः ।

८४. एकः पूर्वपरयोः । अधिकारोऽयं ख्यत्यादित्यतः प्राक् ।

८५. अन्तादिवच्च । ब्रह्मबन्धूः[6] । वृक्षौ[7] । * वर्णाश्रयेऽन्तादिवद्भावप्रतिषेधः * खट्वाभिः, रमाभिः । जुहाव[8] ।

८६. षत्वतुकोरसिद्धः । कोऽसिचत् । कोऽस्य । कोऽस्मै । अधीत्य । प्रेत्य ।

८७. आद् गुणः । उपेन्द्रः, रमेशः । गङ्गोदकम् । कृष्णर्द्धिः[9] । तवल्कारः ।

८८. वृद्धिरेचि । गुणस्यापवादः । कृष्णैकत्वम् । देवैश्वर्यम् । गङ्गौघः । कृष्णौत्कण्ठ्यम् ।

---

१. अधीत्यधिक्रियते सम्प्रसारणाच्चेति यावत् । २. यस्मिन्विधिरिति परिभाषया यादावित्यर्थः । ३. क्रोशयुगम् । ४. लुम्पेदवश्यमः कृत्य इति मलोपः । ५. तस्मै प्रकृत्यर्थाय इदं तदर्थम् । क्रेतारः क्रीणीयुरिति बुद्ध्यापणे प्रसारितमित्यर्थः । ६. इहोङा सवर्णदीर्घे प्रातिपदिकत्वात्सुः । ७. इह सुबन्तत्वात्पदत्वम् । ८. इह पूर्वरूपानन्तरमात्वबुद्धा आत औ णल इत्यौत्वं न । ९. उरण्रपर इति रपरत्वं लपरत्वञ्च ।

८९. एत्येधत्यूठ्सु[1]। पररूपगुणापवादः[2]। उपैति। उपैधते। प्रष्ठौहः। नेह :- उपेतः। मा भवान् प्रेदिधत्। * अक्षादूहिन्यामुपसंख्यानम् * अक्षौहिणी सेना। * स्वादीरेरिणोः * स्वैरः। स्वैरी। स्वैरिणी[3]। * प्रादूहोढोढ्येषैष्येषु * प्रौहः। प्रौढः। अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्[4]। प्रोढवान्। प्रौढिः। प्रैषः। प्रैष्यः[5]। * ऋते च तृतीयासमासे * सुखेन ऋतः, सुखार्तः। दुःखार्तः। * प्रवत्सतरकम्बलवसनार्णदशानामृणे * प्रार्णम्। वत्सतरार्णम्। कम्बलार्णम्। वसनार्णम्। ऋणार्णम्[6]। दशार्णो देशः। नदी च दशार्णा।

९०. आटश्च[7]। ऐक्षत। ऐधत। ऐधिष्ट। ऐक्षिष्ट। बहुश्रेयस्यै, बहुश्रेयस्याः। चकारोऽधिकविधानार्थः। उस्योमाङोश्च पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत्। आ + ऊढ ओढस्तमैच्छत्, औढीयत्।

९१. उपसर्गादृति धातौ[8]। गुणापवादः। प्रार्च्छति। उपार्च्छति।

९२. वा सुप्यापिशलेः[9]। प्रार्षभीयति, प्रर्षभीयति। उपाल्कारीयति, उपल्कारीयति। ऋतीति तपरकरणान्नेह :- उपऋकारीयति, उपर्कारीयति।

९३. औतोऽम्शसोः[10]। गां पश्य। द्यां पश्य। गाः। द्याः।

९४. एङि पररूपम्। वृद्धिरेचीत्यस्यापवादः। प्रेजते। उपोषति। एङादौ[11] सुब्धातौ वा। उपेडकीयति, उपैडकीयति। प्रोघीयति, प्रौघीयति। * शकन्ध्वादिषु पररूपं वाच्यम् * तच्च टेः। शकन्धुः। कर्कन्धुः। कुलटा। सीमन्तः केशवेशे। सीमान्तोऽन्यः। मनीषा। हलीषा। लाङ्गलीषा। पतञ्जलिः।

---

१. एचीत्यनुवृत्तमेत्येधत्योर्विशेषणम्-न तूठः। २. पुरस्तादपवादन्यायेनेयं वृद्धिरेङि पररूपमित्यस्यैव बाधिका न त्वोमाङोश्चेत्यस्य। तेनावैहीति वृद्धिरसाधुरेव। ३. लिङ्गविशिष्टपरिभाषया। ४. व्रश्चेति सूत्रे राजेः पृथग्भ्राजिग्रहणमत्र ज्ञापकम्। ५. इषधातोर्घञि ण्यति च एते रूपे। यस्तु ईषधातुस्तस्य प्रेषः प्रेष्य इत्येव। ६. ऋणस्यापनयनाय यद्दणं क्रियते तद्दणार्णम्। ऋणशब्दो दुर्गभूमौ जले च। ७. अचीत्यनुवर्त्तत एव। ८. उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानं तेन ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न। ९. ऋकारादौ सुब्धातावित्यर्थः। आपिशलिग्रहणं पूजार्थम्। १०. आ ओत इतिच्छेदः। अमिह द्वितीयैकवचनं गृह्यते शसा साहचर्यात्। सुपीत्यधिकाराच्च। नेह :- अचिनवम्। असुनवम्। ११. इह वा सुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयमिदम्।

सारङ्गः पशुपक्षिणोः । साराङ्गोऽन्यः । आकृतिगणोऽयम् । मार्तण्डः । * एवे चानियोगे[1] * क्वेव भोक्ष्यसे ? * ओत्वोष्ठयोः समासे वा * स्थूलोतुः, स्थूलौतुः । बिम्बोष्ठः, बिम्बौष्ठः । नेह :– तवौष्ठः । * एमन्नादिषुच्छन्दसि * अपां त्वेमन् । अपां त्वोद्मन् ।

९५. ओमाङोश्च । शिवायोंनमः । शिव + एहि[2] = शिवेहि । कदा + ओढः[3] = कदोढः ।

९६. उस्यपदान्तात् । अपुः । भिन्द्युः । अदुः ।

९७. अतो गुणे । पचन्ति । एधे ।

९८. अव्यक्तानुकरणस्यात इतौ । पटत् + इति = पटिति । झटिति * एकाचो न * श्रदिति ।

९९. नाम्रेडितस्यान्त्यस्य तु वा । पटत्पटेति[4] । पटत्पटदिति ।

१००. नित्यमाम्रेडिते डाचि । पटपटाकरोति । दमदमाकरोति ।

१०१. अकः सवर्णे दीर्घः । दैत्यारिः । श्रीशः । विष्णूदयः । अनचि तु, कुमारी शेते[5] । * ऋति सवर्णे ऋ वा * होतॄकारः । होतृकारः । * लृति सवर्णे लृ वा * होत्लृकारः[6] । होतृकारः ।

१०२. प्रथमयोः[7] पूर्वसवर्णः । हरी । भानू । रामाः । हरीन् । भानून् । रामान् ।

१०३. तस्माच्छसो नः पुंसि । हरीन् । रामान् । भानून् । कर्तॄन् ।

१०४. नादिचि । रामौ । शिवोऽर्च्यः ।

१०५. दीर्घाज्जसि च । विश्वपौ, विश्वपाः । पप्यौ, पप्यः । गौर्यौ, गौर्यः । वध्वौ, वध्वः ।

१०६. वा छन्दसि । वाराही, वाराह्यौ । मानुषीरीळते विशः ।

१०७. अमि पूर्वः । रामम् । हरिम् । गौरीम् । भानुम् । वधूम् । वा छन्दसीत्येव । शर्मी च शर्म्यं च । सूर्म्यं सुषिरामिव ।

---

१. अनियोगोऽनिश्चयः । २. आ + इहि = एहीति गुणे कृते अन्तादिवच्चेत्याङ्बुद्ध्या । ३. आ + ऊढः = ओढः । ४. डाचि बहुलमिति द्विर्वचनम् । ५. नाज्झलाविति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः । अणुदित्छास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । पञ्चधा महावाक्योत्तरं तत्प्रवृत्तेर्भाष्यकारैरङ्गीकृतत्वात् । ६. इह वार्तिकद्वये विधेयं वर्णद्वयं द्विमात्रम् । आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा अभितोऽज्भक्तेरपरा । द्वितीयस्य तु द्वौ लकारौ शेषं प्राग्वत् । पक्षे ऋत्यक इति प्रकृतिभावो वक्ष्यते । ७. विभक्तिषु प्रथमयोर्द्वयोरित्यागतं प्रथमाद्वितीयाविभक्त्योरिति ।

१०८. सम्प्रसारणाच्च । इष्टम् । उप्तम् । गृहीतम् । वा छन्दसीत्येव । इज्यमानः, यज्यमानः ।

१०९. एङः पदान्तादति । हरेऽव । विष्णोऽव ।

११०. ङसिङसोश्च । हरेः । विष्णोः ।

१११. ऋत उत् । क्रोष्टुः । पितुः ।

११२. ख्यत्यात्परस्य । सख्युः । पत्युः । लून्युः[1] ।

११३. अतो रोरप्लुतादप्लुते । शिवोऽर्च्यः । रामोऽत्र । नेह :— देवा अत्र । श्व आगन्ता । एहि सुस्रोत३ अत्र स्नाहि ।

११४. हशि च । शिवो वन्द्यः ।

११५. प्रकृत्यान्तःपादमव्यपरे[2] । उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अनन्तःपादे तु, एतास एतेऽर्चन्ति ।

११६. अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च । वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । ते नोऽवन्तु रथतूः, सोऽयमागात्, तेऽरुणिभिरित्यादौ तु बाहुलकात् ।

११७. यजुष्युरः[3] । उरो अन्तरिक्षम् ।

११८. आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे । आपो अस्मान्मातरः । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधिनाके । अम्बे[4] अम्बाले अम्बिके ।

११९. अङ्ग इत्यादौ च । प्राणो अङ्गे अङ्गे अदीध्यत् ।

१२०. अनुदात्ते च कुधपरे । अयं सो अग्निः । अयं सो अध्वरः । उदात्ते तु, अथोऽग्ने रुद्रे ।

१२१. अवपथासि च । त्री रुद्रेभ्यो अवपथाः[5] । उदात्ते तु, यद्रुद्रेभ्योऽवपथाः[6] ।

१२२. सर्वत्र विभाषा गोः । गो अग्रम्, गोऽग्रम् ।

---

१. नत्वस्यासिद्धतया । २. एङ इति अतीति चानुवर्त्तेते । ३. यजुषि पादाभावादनन्तःपादार्थं वचनम् । ४. अस्मादेव वचनादम्बार्थेति ह्रस्वो न । ५. वपेर्लङि थासि तिङ्ङतिङ इत्यनुदात्तत्वम् । ६. निपातैर्यद्यदीति निघातो न ।

१२३. अवङ् स्फोटायनस्य। गवाग्रम्। पदान्त इत्येव। नेह :- गवि।

१२४. इन्द्रे च। गवेन्द्रः।

१२५. प्लुतप्रगृह्या अचि नित्यम्। एहि कृष्ण३अत्र गौश्चरति।

१२६. आङोऽनुनासिकश्छन्दसि। अभ्र आँ अपः। गभीर आँ उग्रपुत्रे।

१२७. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च[1]। चक्रि अत्र, चक्र्यत्र। कुमारि अत्र, कुमार्यत्र। पदान्त इत्येव। नेह :- गौर्यौ।

* न समासे * वाप्यश्वः। * सिति च * पार्श्वम्[2]। * ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः * ईषाअक्षो हिरण्ययः। ज्या इयम्। पूषा अविष्टु।

१२८. ऋत्यकः। ब्रह्म ऋषिः, ब्रह्मर्षिः। समासेऽप्ययम्। सप्तऋषीणाम्, सप्तर्षीणाम्। पदान्त इत्येव। नेह :- आर्च्छत्।

१२९. अप्लुतवदुपस्थिते[3]। सुश्लोकेति, सुश्लोक इति। सुमङ्गलेति, सुमङ्गल३ इति।

१३०. ई३ चाक्रवर्मणस्य। चिनुहीति, चिनुहि३ इति। चिनुहीदम्, चिनुहि३ इदम्।

१३१. दिव उत्[4]। द्युभ्यां द्युभिरित्यादि। द्युकामः। द्युमान्। विमलद्यु दिनम्।

१३२. एतत्तदोः सुलोपोऽकोरनञ्समासे हलि। एष विष्णुः। स शम्भुः। अकोरित्युक्तेः एषको रुद्रः। नञ्समासे तु, असः शिवः।

१३३. स्यश्छन्दसि बहुलम्। एष स्य भानुः। यत्र स्यो निपतेत्।

१३४. सोऽचि लोपे चेत् पादपूरणम्। सेमामविड्ढि प्रभृतिं य ईशिषे। सैष दाशरथी रामः। बहुलग्रहणात् लोपे सत्येवेत्यवधार्यते। सोऽहमाजन्मशुद्धानाम्[5]।

१३५. सुट् कात्पूर्वः। अधिकारोऽयं पारस्करप्रभृतीनि चेति यावत्।

१३६. अडभ्यासव्यवायेऽपि। समस्करोत्। समस्कार्षीत्। संचस्कार। परिचस्कार।

---

१. पदान्त इति वर्त्तत एव। २. पर्श्वा णसिति णस्। ३. वत्करणात् अग्नी३ इतीत्यत्र प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणम्। ४. एङः पदान्तादित्यतः। पदग्रहणमनुवर्त्य पदस्य दिव इति योज्यम्। ५. इह न, लोपाभावेऽपि पादपूर्त्तेः।

१३७. संपरिभ्यां करोतौ भूषणे। संस्कर्त्ता। संस्कर्तुम्। संस्कतव्यम् परिष्करोति। परिष्कर्त्ता। परिष्कर्त्तुम्। परिष्कर्त्तव्यम्।

१३८. समवाये च। तत्र नः संस्कृतम्[1]। परिष्कृतम्।

१३९. उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च[2]। एधो दकस्योपस्कुरुते[3]। उपस्कृतं[4] भुङ्क्ते। उपस्कृतं[5] ब्रूते। उपस्कृता[6] कन्या। उपस्कृता[7] ब्राह्मणाः।

१४०. किरतौ लवने। उपस्किरति[8]। उपचस्कार। उपास्किरन्।

१४१. हिंसायां प्रतेश्च। उपस्किरति। प्रतिस्किरति।

१४२. अपाच्चतुष्पाच्छकुनिष्वालेखने। * हर्षजीविकाकुलायकरणेष्विति वाच्यम् * अपस्किरते[9] वृषो हृष्टः, कुक्कुटो भक्षार्थी, श्वा आश्रयार्थी च। अन्यत्र तु, अपकिरति कुसुमम्।

१४३. कुस्तुम्बुरूणि जातिः। कुस्तुम्बुरु धान्याकम्। जातेरन्यत्र तु, कुतुम्बुरूणि[10]।

१४४. अपरस्पराः क्रियासातत्ये। अपरस्पराः[11] सार्था गच्छन्ति। अन्यत्र तु, अपरपरा[12] गच्छन्ति।

१४५. गोष्पदं[13] सेवितासेवितप्रमाणेषु। गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः। अगोष्पदान्यरण्यानि। गोष्पदमात्रं क्षेत्रम्। अन्यत्र गोपदम्।

१४६. आस्पदं प्रतिष्ठायाम्। आस्पदम्। अन्यत्र आ पदात्, आपदम्

१४७. आश्चर्यमनित्ये[14]। आश्चर्यं यदि स भुञ्जीत। आश्चर्यं सोऽधीयीत। अन्यत्र त्वाचर्यं कर्म शोभनम्।

---

१. समुदितमित्यर्थः। २. चात्प्रागुक्तयोरर्थयोः। ३. प्रतियत्नो गुणाधानम्। ४. विकृतमित्यर्थः। ५. अध्याहृतमित्यर्थः। ६. अलङ्कृतेत्यर्थः। ७. समुदिता इत्यर्थः। ८. लुनातीत्यर्थः। कॄ विक्षेप इत्यस्य धातूनामनेकार्थत्वाल्लवने वृत्तिः। ९. किरतेर्हर्षजीविकेति वार्त्तिकेनात्मनेपदम्। १०. कुत्सितानि तिन्दुकीफलानीत्यर्थः। ११. सन्ततमविच्छेदेन गच्छन्तीत्यर्थः। १२. अपरे परे च सकृदेव गच्छन्तीत्यर्थः। १३. सुट् षत्वञ्च निपात्यते। १४. अनित्यतयाद्भुतत्वमिह लक्ष्यते। अद्भुतं हि नित्यन्न भवति।

१४८. वर्चस्के[1]ऽवस्करः। अवकीर्यते इत्यवस्करोऽन्नमलम्। अवकरोऽन्यः।

१४९. अपस्करो रथाङ्गम्। अपस्करो रथावयवः।

१५०. विष्किरः शकुनिर्विकिरो वा। सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटान्विना।

१५१. ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। हरिश्चन्द्रो मरुद्गणः। सुश्चन्द्र दस्म।

१५२. प्रतिष्कशश्च कशेः। प्रतिष्कशः[2] सहायः पुरोयायी वा। ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः।

१५३. प्रस्कण्वहरिश्चन्द्रावृषी। प्रस्कण्व ऋषिः। हरिश्चन्द्र ऋषिः।

१५४. मस्करमस्करिणौ वेणुपरिव्राजकयोः। मस्करो वेणुः। मस्करी परिव्राजकः। अन्यत्र मकरो ग्राहः। मकरी समुद्रः।

१५५. कास्तीराजस्तुन्दे नगरे। कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्।

१५६. कारस्करो वृक्षः। कारं करोतीति, कारस्करो वृक्षः। कारकरोऽन्यः।

१५७. पारस्करप्रभृतीनि[3] च संज्ञायाम्। पारस्करः। किष्किन्धा। * तद्बृहतोः करपत्योः चोरदेवतयोः सुट् तलोपश्च * तस्करः। बृहस्पतिः। * प्रायस्य चित्तिचित्तयोः * प्रायश्चित्तिः। प्रायश्चित्तम्। वनस्पतिरित्यादि।

१५८. अनुदात्तम्पदमेकवर्जम्। परिभाषेयं स्वरविधिविषया। गोपायतं[4] नः। * सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम्[5] * यज्ञं यज्ञमभिवृधे गृणीतः[6]।

१५९. कर्षा[7]ऽऽत्वतो घञोऽन्त उदात्तः। कर्षः। पाकः।

१६०. उञ्छादीनां च। उञ्छः। वैश्वानरः कुशिकेभिर्युगे[8] युगे। अन्यत्र

---

१. कुत्सितं वर्चो वर्चस्कमन्नमलम्। २. कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् षत्वं च निपात्यते। ३. आकृतिगणोऽयम्। ४. इह धातुस्वरेण यकाराकार उदात्तः। शिष्टमनुदात्तम्। ५. तेनोक्तोदाहरणे धातुस्वर एव। गुपेर्धातुस्वर आयस्य प्रत्ययस्वरश्च न शिष्यते। ६. इह सतिशिष्टोऽपि श्नास्वरो न शिष्यते किन्तु तत्स्वर एव। ७. कर्षेति शपा निर्देशात्तुदादेराद्युदात्त एव। ८. युगशब्द उञ्छादौ घञन्तोऽगुणो निपात्यते। कालविशेषे रथाद्यवयवे च।

योगे योगे तवस्तरम् । गावः सोमस्य प्रथमस्य भक्षः । उत्तमशश्वत्तमावपि । उदुत्तमं वरुण । शश्वत्तममीळते ।

१६१. अनुदात्तस्य च यत्रोदात्तलोपः । देवीं[1] वाचम् । पथः । पथा ।

१६२. धातोः[2] । पचति । पठति । गोपायतं नः । असि सत्यः ।

१६३. चितः । * चितः सप्रकृतेर्बह्वकजर्थम् * नभन्तामन्यके समे । यके सरस्वतीमनु । तकत्सुते । भङ्गुरम् ।

१६४. तद्धितस्य[3] । कौञ्जायनाः ।

१६५. कितः । यदाग्नेयः । नाडायनः । आक्षिकः ।

१६६. तिसृभ्यो जसः । तिस्रो द्यावः सवितुः ।

१६७. चतुरः शसि । चतुरः[4] कल्पयन्तः । अचि र इति रादेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह :– चतस्रः पश्य ।

१६८. सावेकाचस्तृतीयादिर्विभक्तिः । वाचा विरूपः । नेह :– न ददर्श वाचम् ।

१६९. अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे । परमवाचा । परमवाचे । नित्यसमासे तु न अग्निचिता[5] ।

१७०. अञ्चेश्छन्दस्यसर्वनामस्थानम् । इन्द्रो दधीचः[6] ।

१७१. ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः । प्रष्ठौहः, प्रष्ठौहा । * ऊठ्युपधाग्रहणं कर्त्तव्यम् * नेह :– अक्षद्युवा । एभिर्नृभिर्नृतमः । अन्वादेशे[7] तु न । प्र ते बभ्रू, माभ्यां गा अनु । पद्भ्यां[8] भूमिः । दद्भिर्न जिह्वा । अहरहर्जायते मासिमासि । मनश्चिन्मे हृद आ । अपां फेनेन । अभ्रातेव पुंसः । राया वयम् । रायो धर्त्ता विवस्वतः । उपत्वाग्ने दिवेदिवे ।

१७२. अष्टनो दीर्घात् । अष्टाभिर्दशभिः ।

---

१. इह ङीप्यनुदात्ते परतो देवाकारस्योदात्तस्य लोप इति ङीबुदात्तः । २. अन्त इत्येव । ३. चित इत्यनुवर्त्तते । पूर्वेण सिद्धे ञित्स्वरबाधनार्थमिदम् । ४. चतेरुरन् । नित्त्वादाद्युदात्तता । ५. उपपदसमासस्य नित्यसमासत्वात् । ६. चाविति पूर्वपदान्तोदात्तत्वं प्राप्तम् । ७. अन्तोदात्तादित्यनुवृत्तेः । अन्वादेशे हि अनुदात्तस्याशो विधानम् । ८. पद्दन्नोमास्हृन्निश्–इति षट् पदादयः न तु ततः परे एकाच इत्यनुवृत्तेः ।

१७३. शतुरनुमो नद्यजादी। अच्छा रवं प्रथमा जानती। कृण्वते। अन्तोदात्तादेव। नेह :– दधती[1]। सनुमश्च तुदन्ती[2]।

१७४. उदात्तयणो हल्पूर्वात्। चोदयित्री सूनृतानाम्। एषा नेत्री। ऋतं देवाय कृण्वते सवित्रे।

१७५. नोङ्धात्वोः। ब्रह्मबन्ध्वा। सेत्पृश्निः सुभ्वे।

१७६. ह्रस्वनुड्भ्यां मतुप्। यो अब्दिमाँ उदनिमाँ इयर्त्ति। अक्षण्वन्तः कर्णवन्तः सखायः। अन्तोदात्तादित्येव। नेह :– मात्वा विदद्दिषुमान्। स्वरविधौ व्यञ्जनमविद्यमानवदित्येतदत्र न[3]। मरुत्वानिन्द्र। नियुत्वान्वा यवागहि। * रेशब्दाच्च * रेवाँ इद्रेवतः।

१७७. नामन्यतरस्याम्[4]। चेतन्ती सुमतीनाम्। अग्नीनाम्।

१७८. ङ्याश्छन्दसि बहुलम्। देवसेनानामभिभञ्जतीनाम्। बहुलग्रहणान्नेह :– जयन्तीनां मरुतो यन्तु।

१७९. षट्त्रिचतुर्भ्यो[5] हलादिः। आ षड्भिर्हूयमानः। त्रिभिष्ट्वं देव। चतुर्भ्यः।

१८०. झल्युपोत्तमम्। अध्वर्युभिः पञ्चभिः। नवभिर्वाजैर्नवती च। सप्तभ्यो जायमानः। आदशभिर्विवस्वतः।

१८१. विभाषा भाषायाम्। पञ्चभिः २। सप्तभिः २।

१८२. न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः[6]। गवां शता, गोभ्यो गातुम्। शुनश्चिच्छेपम्। तेभ्यो द्युम्नम्, तेषां पाहि श्रुधी हवम्। राजा। प्राञ्चा। क्रुञ्चा। कृता।

१८३. दिवो झल्। द्युभिरक्तुभिः।

१८४. नृ चान्यतरस्याम्। नृभिर्येमानः।

१८५. तित्स्वरितम्। क्व नूनम्।

१८६. तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः। प्रत्ययस्वरापवादः। कर्त्ता, कर्त्तारौ, कर्त्तारः। य आस्ते। अभिचष्टे। पुरुभुजा

---

१. अभ्यस्तानामादिरित्याद्युदात्तः। २. एकादेशोऽत्र उदात्तः। ३. नुड्ग्रहणात्। ४. इह ह्रस्वग्रहणं मतुब्ग्रहणं चानुवर्त्तते। मतुपि यो ह्रस्वस्तदन्तोदात्तादित्यर्थः। ५. अन्तोदात्तादिति निवृत्तम्। ६. नोदात्तेत्यर्थः।

वनस्पतम्। वर्धमानं स्वे दमे। ह्निङोस्तु न, ह्नुते। यदधीते। * विन्दीन्धिखिदिभ्यो नेति वक्तव्यम् * विन्दाते। इन्धे राजा। खिन्दाते।

१८७. आदिः सिचोऽन्यतरस्याम्। यासिष्टं वर्त्तिरश्विनौ।

१८८. स्वपादिर्हिंसामच्यनिटि। स्वपन्ति, श्वसन्ति। हिंसन्ति। ङ्गित्येवेष्यते। नेह :– स्वपानि। हिनसानि

१८९. अभ्यस्तानामादिः। ये ददति प्रिया वसु। दधाना इन्द्रे।

१९०. अनुदात्ते च। दधासि रत्नं द्रविणं च दाशुषे।

१९१. सर्वस्य सुपि। सर्वे नन्दन्ति यशसा।

१९२. भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति। बिभेति। जिह्रेति। बिभर्त्ति। योऽग्निहोत्रं जुहोति। ममत्तु नः परिज्मा। जजनदिन्द्रम्। माता यद्वीरं दधनत्। दरिद्राति। जागर्षि त्वम्।

१९३. लिति। चिकीर्षकः।

१९४. आदिर्णमुल्यन्यतरस्याम्। लोलूयं लोलूयम्। पक्षे लित्स्वरः।

१९५. अचः कर्त्तृयकि। लूयते केदारः स्वयमेव।

१९६. थलि च सेटीडन्तो वा। लुलविथ।

१९७. ञ्नित्यादिर्नित्यम्। यस्मिन् विश्वानि पौंस्या। सुते दधिष्व नश्चनः।

१९८. आमन्त्रितस्य च। अग्न इन्द्र वरुण मित्र देवाः।

१९९. पथिमथोः सर्वनामस्थाने। अयं पन्थाः।

२००. अन्तश्च तवै युगपत्। हर्षसे दातवा उ।

२०१. क्षयो निवासे। स्वे क्षये शुचिव्रत।

---

१. एतच्चानुदात्तस्य च यत्रेति सूत्रे भाष्ये स्थितम्। २. स्वपादिरदाद्यन्तर्गणः। ३. पक्षे प्रत्ययस्वरेण मध्योदात्तता। ४. अनिट्यचीति लसार्वधातुकमिति च पूर्वतोऽनुवर्त्तत एव। तेन अनिट्यजादौ लसार्वधातुके परत इत्यर्थः। ५. परत्वाच्चित्स्वरमयं बाधते। ६. प्रत्ययात्पूर्वमिति वर्त्तते। ७. यदा नैते त्रयस्तदा लितीति प्रत्ययात्पूर्वमुदात्तम्। अत्र चत्वारोऽपि पर्य्यायेणोदात्ताः। ८. पुंसः कर्मणि ब्राह्मणादित्वात्ष्यञ्। ९. चायतेरसुन्। चायेरन्ने ह्रस्वश्चेति चकारादसुनो नुट् च।

२०२. जयः करणम्। जयत्यनेन, जयोऽश्वः।

२०३. वृषादीनाञ्च[1]। वृषः। जनः। वाजेभिर्वाजिनीवती। इन्द्रं वाणीः।

२०४. संज्ञायामुपमानम्। चञ्चेव, चञ्चा[2]।

२०५. निष्ठा च द्व्यजनात्। दत्तः। नेह :- चिन्तितः। त्रातः। संज्ञायामेव। नेह :- कृतम्।

२०६. शुष्कधृष्टौ। अतसं न शुष्कम्। धृष्टः।

२०७. आशितः कर्त्ता। कृषन्नित्फाल आशितम्।

२०८. रिक्ते विभाषा। रिक्तः[3]।

२०९. जुष्टार्पिते च छन्दसि। जुष्टः। अर्पितः।

२१०. नित्यं मन्त्रे[4]। जुष्टं देवानाम्। अर्पितं पितॄणाम्।

२११. युष्मदस्मदोर्ङसि। नहिषस्तव नो मम।

२१२. ङयि च। तुभ्यं हिन्वानः। मह्यं वातः पवताम्।

२१३. यतोऽनावः[5]। चेयम्। युञ्जन्त्यस्य काम्या[6]। कण्ठ्यम्। नेह :- नाव्यम्।

२१४. ईडवन्दवृशंसदुहां ण्यतः। ईड्यो नूतनैरुत। आजुह्वान ईड्यो वन्द्यश्च। श्रेष्ठं नो धेहि वार्यम्। उक्थमिन्द्राय शंस्यम्। दोह्या धेनुः।

२१५. विभाषा वेण्विन्धानयोः। वेणुः। इन्धानो अग्निम्।

२१६. त्यागरागहासकुहश्वठक्रथानाम्[7]। त्यागः। रागः। हासः। कुहः। श्वठः। क्रथः।

२१७. उपोत्तमं रिति[8]। प्रत्ययस्वरापवादः। यदाहवनीये।

२१८. चङ्यन्यतरस्याम्। मा हि चीकरताम्[9]।

---

१. वृषादिराकृतिगणः। २. कनोऽत्र लुप्। कनः प्रत्ययलक्षणेन नित्त्वादाद्युदात्तत्वे सिद्ध एतदेव ज्ञापयति क्वचित्स्वरविधौ प्रत्ययलक्षणं नेति। ३. संज्ञायां तु निष्ठा च द्व्यजनात् इति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन। ४. इदं शक्यमकर्त्तुम् पूर्वेणैव सिद्धेः। तत्र हि व्यवस्थितविभाषाश्रयणेन सर्वदोषपरिहारात्। ५. निष्ठा च द्व्यजनादित्यतो द्व्यज्ग्रहणं वर्त्तते। ६. कमेर्णिङन्तादचो यत्। ७. त्रयो घञन्ता आद्याः। परे चाजन्ताः। ८. उत्तमस्यान्त्यस्य समीपमुपोत्तमम्। ९. धात्वकारः पक्षान्तरे चङ् चोदात्तः।

२१९. मतोः पूर्वमात्संज्ञायां स्त्रियाम् । उदुम्बरावती । शरावती ।

२२०. अन्तोऽवत्याः । वेत्रवती । अजिरवती ।

२२१. ईवत्याः । अहीवती । मुनीवती ।

२२२. चौ । उदात्तनिवृत्तिस्वरापवादः । देवद्रीचीं नयत देवयन्तः । * अतद्धित इति वाच्यम् * दाधीचः[1] । माधूचः[2] ।

२२३. समासस्य । राजपुरुषः । यज्ञश्रियम् ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
षष्ठाध्यायस्य प्रथमपादः समाप्तः ।



१. प्रत्ययस्वर एवात्र । २. इह श्रीशब्दस्योदात्तत्वे कृते आन्तरतम्या-दियङुदात्तः ।

# अथ षष्ठाध्यायस्य द्वितीयपादः ।

१. बहुव्रीहौ प्रकृत्या पूर्वपदम्[१] । समासान्तोदात्तापवादः । सत्यश्चित्रश्रवस्तमः । कार्ष्णोत्तरासङ्गः ।

२. तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः । तुल्यश्वेतः । किरिणा काणः, किरिकाणः । अक्षशौण्डः, पतयन्मन्दयत्सखम्[२] । शस्त्रीश्यामा, शरकाण्डगौरी । * अव्यये नञ्कुनिपातानाम् * अयज्ञो वा एषः, अब्राह्मणः । कुब्राह्मणः । निष्कौशाम्बिः । नेह :– स्नात्वाकालकः । मुहूर्त्तसुखम् । भोज्योष्णम् ।

३. वर्णो वर्णेष्वनेते । कृष्णसारङ्गः[३] । लोहितकल्माषः[४] । एते तु न, कृष्णैतः ।

४. गाधलवणयोः प्रमाणे । अरित्रगाधमुदकम्[५] । गोलवणम्[६] ।

५. दायाद्यं दायादे । धनदायादः[७] ।

६. प्रतिबन्धि चिरकृच्छ्रयोः । गमनचिरम्[८] । गमनकृच्छ्रम् । नेह :– मूत्रकृच्छ्रम् ।

७. पदेऽपदेशे । मूत्रपदेन[९] प्रस्थितः । उच्चारपदेन[१०] ।

८. निवाते वातत्राणे । कुटीनिवातम्[११] । कुड्यनिवातम्[१२] । नेह :– मातृनिवातम्[१३] ।

---

१. व्याख्यानादुदात्तस्वरितयोगि पूर्वपदं ग्राह्यम् । तेन सर्वानुदात्ते पूर्वपदे नेदं भवति । समपादः । २. मन्दयति, मादके इन्द्रे सखेति सप्तमीतत्पुरुषः । ३. कृष्णशब्दो नक्प्रत्ययान्तः । ४. लोहितशब्द इतन्नन्तः । ५. अरित्रशब्द इत्रान्तो मध्योदात्तः । ६. यावद् गवे दीयते तावदित्यर्थः । ७. धनशब्दः क्युप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः । ८. गमनं कारणविकलतया चिरकालभावि कृच्छ्रयोगि च प्रतिबन्धि जायते । ९. अपदेशो व्याजः । मूत्रशब्दो घञन्त आद्युदात्तः । १० उच्चारशब्दो घञन्तस्थाथादिस्वरेणान्तोदात्तः । ११. कुट्येव निवातं वातत्राणम् । कुटीशब्दो ङीषन्तः । १२. कुड्यशब्दो ड्यगन्तः । यगन्तो वा । १३. इह निवातशब्दो रूढः पार्श्वे ।

९. शारदेऽनार्त्तवे। रज्जुशारदमुदकम्[1]। आर्त्तवे तु, उत्तमशारदम्।

१०. अध्वर्युकषाययोर्जातौ। कठाध्वर्युः[2]। दौवारिककषायम्[3]।

११. सदृशप्रतिरूपयोः सादृश्ये। पितृसदृशः। मातृप्रतिरूपः।

१२. द्विगौ प्रमाणे। प्राच्यसप्तसमः[4]।

१३. गन्तव्यपण्यं वाणिजे। मद्रवाणिजः[5]। गोवाणिजः।

१४. मात्रोपज्ञोपक्रमच्छाये नपुंसके। भिक्षायास्तुल्यप्रमाणम्, भिक्षामात्रम्[6]। पाणिन्युपज्ञम्[7]। नन्दोपक्रमम्[8]। इषुच्छायम्[9]।

१५. सुखप्रिययोर्हिते। गमनसुखम्[10]। गमनप्रियम्।

१६. प्रीतौ च। ब्राह्मणसुखं[11] पायसम्। छात्रप्रियोऽनध्यायः।

१७. स्वं स्वामिनि। गोस्वामी। अश्वस्वामी।

१८. पत्यावैश्वर्ये। दमूना गृहपतिर्दमे।

१९. न भूवाक्चिद्दिधिषु। भुवः पतिः, भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः।

२०. वा भुवनम्। भुवनपतिः[12]।

२१. आशङ्काबाधनेदीयस्सु सम्भावने। गमनाशङ्कम्। गमनाबाधम्। गमननेदीयः[13]।

२२. पूर्वे भूतपूर्वे। आढ्यो भूतपूर्व आढ्यपूर्वः[14]। दर्शनीयपूर्वः।

---

१. सृजेरसुम् चेत्याद्युदात्तो रज्जुशब्दः। रज्जोः सद्य उद्धृतं नूतनमित्यर्थः। २. कठशब्दः पचाद्यजन्तः। तस्माद्वैशम्पायनान्तेवासिभ्यश्चेति णिनेः कठचरकाल्लुगिति लुक्। ३. द्वारि नियुक्तो दौवारिकः। ठक्यन्तोदात्तः। ४. प्राच्यश्चासौ सप्तसमश्च। सप्त समाः प्रमाणमस्येति च विग्रहः। प्रमाणे ल इति मात्रचो लुक्। प्राच्यशब्द आद्युदात्तः। ५. मद्रशब्दो रक्प्रत्ययान्तः। ६. भिक्षाशब्दोऽप्रत्ययान्तः। ७. पाणिनिराद्युदात्तः। ८. नन्दोऽजन्तः। ९. इषुर्नित्स्वादाद्युदात्तः। १०. गमने लित्स्वरः। ११. ब्राह्मणच्छात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ। १२. भूसूधूभ्रस्जिभ्य इति क्युन्नन्तो भुवनशब्दः। १३. गमनमाशङ्क्यते, आबाध्यते, निकटतरमिति वा सम्भाव्यते। १४. पूर्वशब्दो वृत्तौ भूतपूर्वे वर्त्तते

२३. सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये। मद्रसविधम्। गान्धारसनीडम्। काश्मीरसमर्यादम्। मद्रसवेशम्। मद्रसदेशम्।

२४. विस्पष्टादीनि गुणवचनेषु। विस्पष्टकटुकम्[१]। विचित्रकटुकम्।

२५. अज्यावमकन्पापवत्सु भावे कर्मधारये। गमनश्रेष्ठम्। गमनज्यायः। गमनावमम्। गमनकनिष्ठम्। गमनपापिष्ठम्। नेह :– गमनशोभनम्।

२६. कुमारश्च। कुमारश्रमणा[२]।

२७. आदिः प्रत्येनसि। कुमारप्रत्येनाः[३]।

२८. पूगेष्वन्यतरस्याम्। कुमारचातकाः[४]। कुमारजीमूताः।

२९. इगन्तकालकपालभगालशरावेषु द्विगौ। पञ्चारत्निः। पञ्चमास्यः[५], दशमास्यः। पञ्चकपालः। पञ्चभगालः। पञ्चशरावः।

३०. बह्वन्यतरस्याम्। बह्वरत्निः[६] २। बहुमास्यः २। बहुकपालः २। बहुभगालः २। बहुशरावः २।

३१. दिष्टिवितस्त्योश्च। पञ्चदिष्टिः २। पञ्चवितस्तिः २।

३२. सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्। साङ्काश्यसिद्धः[७]। आतपशुष्कः। भ्राष्ट्रपक्वः[८]। चक्रबन्धः[९]। कालात्तु, पूर्वाह्णसिद्धः।

३३. परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु। परित्रिगर्त्तं[१०] वृष्टो देवः। प्रतिपूर्वाह्णम्, प्रत्यपररात्रम्। उपपूर्वरात्रम्। अपत्रिगर्त्तम्।

३४. राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु। श्वाफल्कचैत्रकाः। शिनिवासुदेवाः[११]। राजन्यादन्यत्र तु, द्वैप्यभैमायनाः[१२]।

---

१. विस्पष्टशब्दो गतिरनन्तर इत्याद्युदात्तः। २. कुमारशब्दोऽन्तोदात्तः। ३. प्रतिगतमेनोऽस्य, प्रत्येनाः। ४. पूगा गणाः। पक्षे कुमारश्चेत्येव भवति। ५. पञ्च मासान् भूत इति द्विगोर्यप्। त्रः संख्याया इति पञ्चन्-शब्द आद्युदात्तः। ६. बहुशब्दोऽन्तोदात्तः। तस्य यणि सत्युदात्तस्वरितयोरिति भवति। ७. साङ्काश्यशब्दो ण्यान्तः। ८. भ्राष्ट्रशब्दे ष्ट्रन्। ९. चक्रशब्दोऽन्तोदात्तः। १०. उपसर्गा आद्युदात्ताः। बहुव्रीहितत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदम्। ११. शिनिराद्युदात्तो लक्षणया तदपत्ये वर्त्तते। १२. अन्धकवृष्णय एते न तु राजन्याः। राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम्। नैते तथा।

३५. संख्या। एकादश। द्वादश। त्रयोदश[1]:।

३६. आचार्योपसर्जनश्चान्तेवासी। पाणिनीयरौढीया[2]:।

३७. कार्त्तकौजपादयश्च। कार्त्तकौजपौ[3]। सावर्णिमाण्डूकेयौ।

३८. महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु। मह[4]ाव्रीहिः। महापराह्णः। महागृष्टिः। महेष्वासः। महाजाबालः। महाभारः। महाभारतः। महाहैलिहिलः। महारौरवः। महाप्रवृद्धः।

३९. क्षुल्लकश्च वैश्वदेवे। क्षुल्लक[5]वैश्वदेवम्। महावैश्वदेवम्।

४०. उष्ट्रः सादिवाम्योः। उष्ट्र[6]सादी। उष्ट्रवामी।

४१. गौः सादसादिसारथिषु। गोसादः। गोसादिः। गोसारथिः।

४२. कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणाञ्च। कुरूणां गार्हपतम्, कुरु[7]गार्हपतम्। * वृजेरिति वाच्यम् * वृ[8]जिगार्हपतम्। रिक्तो गुरुः, रि[9]क्तगुरुः। असूता जरती, असूतजरती। अश्लीला दृढरूपा, अ[10]श्लीलदृढरूपा। पारे वडवेव, पा[11]रेवडवा। तैतिलानां कद्रूः। तै[12]तिलकद्रूः। पण्य[13]कम्बलः। * संज्ञायामिति वक्त[14]व्यम् * दास्या भारो दासीभारः। देवहूतिः। स राये स पुर[15]न्ध्याम्।

४३. चतुर्थी तदर्थे। यूपाय दारु, यूपदारु।

४४. अर्थे। देवार्थम्।

---

१. त्रेस्त्रयसादेश आद्युदात्तो निपात्यते। २. छस्वरेण मध्योदात्तावेतौ। आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणम्। ३. कृतस्यापत्यं कुजपस्यापत्यमित्यणन्तावेतौ। ४. महच्छब्दोऽन्तोदात्तः। ५. चान्महान्। क्षुधं लातीति, क्षुल्लः। तस्मादज्ञातादिषु केऽन्तोदात्तः। ६. उषेः ष्ट्रनि उष्ट्रशब्द आद्युदात्तः। ७. उप्रत्ययान्तः कुरुः। ८. वृजिराद्युदात्तः। ९. रिक्ते विभाषेति आद्युदात्तो रिक्तशब्दः। १०. अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीर्यस्यास्ति, श्लीलम्। सिध्मादित्वाल्लच्। कपिलकादित्वाल्लत्वम्। ११. पारे शब्दो घृतादित्वादन्तोदात्तः। १२. तितिलिनोऽपत्यं छात्रो वेत्यणन्तः। १३. पण्यशब्दो यदन्तत्वादाद्युदात्तः। १४. अन्यत्र तु समासान्तोदात्तत्वम्। १५. यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते न च विशिष्य वचनं विहितं स सर्वोऽपि दासीभारादौ द्रष्टव्यः। पुरं शरीरं धीयते यस्यामिति किप्रत्ययः। अलुक्छान्दसः। नब्विषयस्येत्याद्युदात्तः पुरशब्दः।

४५. क्ते च। गोहितम्।

४६. कर्मधारयेऽनिष्ठा। श्रेणिकृताः[१]। पूगकृताः[२]। नेह :- कृताकृतम्।

४७. अहीने द्वितीया। कष्टश्रितः[३]। ग्रामगतः[४]। हीने तु, कान्तारातीतः। * अनुपसर्ग इति वक्तव्यम् * नेह :- सुखं प्राप्तः।

४८. तृतीया कर्मणि। त्वोतासः[५]। रुद्रहतः[६]। महाराजहतः।

४९. गतिरनन्तरः। पुरोहितम्। सान्तरे, अभ्युद्धृतम्।

५०. तादौ च निति कृत्यतौ[७]। अग्ने रायो नृतमस्य प्रभूतौ। सङ्गतिं गोः।

५१. तवै चान्तश्च युगपत्। अन्वेतवा उ।

५२. अनिगन्तोऽञ्चतौ वप्रत्यये। ये पराञ्चस्तान्। इगन्ते तु, प्रत्यञ्चो यन्तु। जहि वृष्ण्यानि कृणुही पराचः[८]।

५३. न्यधी च। न्यङ्ङुत्तानः[९]। अध्यङ्।

५४. ईषदन्यतरस्याम्। ईषत्कडारः[१०] २।

५५. हिरण्यपरिमाणं धने। द्विसुवर्णधनम्[११] २।

५६. प्रथमोऽचिरोपसम्पत्तौ। प्रथमवैयाकरणः[१२] २। चिरोपसम्पत्तौ तु, प्रथमो वैयाकरणः।

५७. कतरकतमौ कर्मधारये[१३]। कतरकठः २। कतमकठः २।

५८. आर्यो ब्राह्मणकुमारयोः। आर्यब्राह्मणः[१४]। आर्यकुमारः।

---

१. श्रेणिशब्द आद्युदात्तः। २. पूगशब्दोऽन्तोदात्तः। ३. थाथेत्यस्यापवादः। कष्टशब्दोऽन्तोदात्तः। ४. ग्रामशब्दो नित्स्वरेण। ५. त्वया ऊताः। ६. रुद्रो रगन्तः। ७. कृत्स्वरापवादः। ८. कृत्स्वरात्परत्वादयमेव। ९. उदात्तस्वरितयोर्यण इति अञ्चतेरकारः स्वरितः। १०. ईषदित्यन्तोदात्तः। ईषद्भेद इत्यादौ तु कृत्स्वर एव। ११. द्वे सुवर्णे परिमाणमस्य, द्विसुवर्णं तदेव धनं द्विसुवर्णधनम्। १२. सम्प्रति व्याकरणमध्येतुं प्रवृत्तः। प्रथमशब्दः प्रथेरमजन्तः। १३. कर्मधारयग्रहणमुत्तरार्थम्। इह तु प्रतिपदोक्तत्वादेव सिद्धम्। १४. आर्यशब्दो ण्यदन्तस्वरितः।

५९. राजा च[1] । राजब्राह्मणः । राजकुमारः ।

६०. षष्ठी प्रत्येनसि । राजप्रत्येनाः ।

६१. के नित्यार्थे । नित्यप्रहसितः[2] ।

६२. ग्रामः शिल्पिनि । ग्राम[3]नापितः ।

६३. राजा च प्रशंसायाम् । राजनापितः । राजकुशलाः ।

६४. आदिरुदात्तः । अधिकारोऽयं प्रागन्त इत्यधिकारात् ।

६५. सप्तमीहारि[4]णौ धर्म्येऽहरणे । मुकुटे[5]कार्षापणम् । हलेद्विपदिका । याज्ञिकाश्वः । वैयाकरणहस्ती । हरणे तु, वाडवहरणम्[6] ।

६६. युक्ते[7] च । गोबल्लवः ।

६७. विभाषाध्यक्षे । गवाध्यक्षः २ । अश्वाध्यक्षः २ ।

६८. पापं च शिल्पिनि । पापनापितः ।

६९. गोत्राऽन्तेवासिमाणवब्राह्मणेषु क्षेपे । भार्यासौश्रुतः[8] । कुमारीदाक्षाः[9] । ओदनपाणिनीयाः । भिक्षामाणवः[10] । भयब्राह्मणः[11] । नेह :— दासीश्रोत्रियः । परमब्राह्मणः ।

७०. अङ्गानि मैरेये । मधुमैरेयः ।

७१. भक्ताख्यास्तदर्थेषु । भिक्षाकंसः[12] । भाजीकंसः ।

७२. गोबिडालसिंहसैन्धवेषूपमाने । धान्यगवः[13] । गोबिडालः । तृणसिंहः । सक्तुसैन्धवः ।

---

१. योगविभाग उत्तरार्थः । २. नित्यशब्दस्त्यबन्त आद्युदात्तः । हसित इति थाथादिस्वरेणान्तोदात्तः । ३. ग्राम आद्युदात्तः । ४. देयं यः स्वीकरोति स हारीत्युच्यते । धर्म्यमाचारनियतं देयम् । ५. संज्ञायामिति समासः, कारनाम्नि चेत्यलुक् । ६. वडवाया अयं वाडवः । तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमित्युच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते इत्यहरण इति निषेधेन ज्ञाप्यते । तेन वाडवहार्यमिति हारिस्वरः सिध्यति । ७. कर्त्तव्ये तत्परो युक्तः । ८. सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः । ९. कुमार्यादिलाभकामा ये दाक्ष्यादिप्रोक्तशास्त्राण्यधीयते त एवं क्षिप्यन्ते । १०. भिक्षां लप्स्येऽहमिति माणवः । ११. भयेन ब्राह्मणः सम्पद्यते । १२. भिक्षादयो भक्तविशेषाः । १३. गवाकृत्या संनिवेशितं धान्यमित्यर्थः । धान्यं गौरिवेति व्याघ्रादेराकृतिगणत्वात्समासः ।

७३. अके जीविकार्थे । दन्तलेखकः ।

७४. प्राचां क्रीडायाम् । उद्दालकपुष्पभञ्जिका ।

७५. अणि नियुक्ते । छत्रधारः । अनियुक्ते तु, काण्डलावः ।

७६. शिल्पिनि चाकृञः । तन्तुवायः । कृञस्तु न, कुम्भकारः ।

७७. संज्ञायाञ्च । तन्तुवायो नाम कृमिः ।

७८. गोतन्तियवं पाले । गोपालः । तन्तिपालः । यवपालः ।

७९. णिनि । पुष्पहारी ।

८०. उपमानं[1] शब्दार्थप्रकृतावेव । उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अन्यत्र तु न, वृकवञ्ची । गर्दभोचारी ।

८१. युक्तारोह्यादयश्च । युक्तारोही । आगतयोधी । क्षीरहोता ।

८२. दीर्घकाशतुषभ्राष्ट्रवटं जे । कुटीजः । काशजः । तुषजः । भ्राष्ट्रजः । वटजः ।

८३. अन्त्यात्पूर्वं बह्वचः । उपसरजः । आमलकीजः ।

८४. ग्रामेऽनिवसन्तः । मल्लग्रामः[2] । देवग्रामः[3] । नेह :— दाक्षिग्रामः ।

८५. घोषादिषु च । दाक्षिघोषः । दाक्षिकटः । दाक्षिह्रदः ।

८६. छात्र्यादयः शालायाम् । छात्रिशाला । व्याडिशाला । छात्रिशालम्[4],

८७. प्रस्थेऽवृद्धमकर्क्यादीनाम् । इन्द्रप्रस्थः । कर्क्यादीन्तु न, कर्कीप्रस्थः । मकरीप्रस्थः ।

८८. मालादीनां च । मालाप्रस्थः । शोणाप्रस्थः ।

८९. अमहन्नवन्नगरेऽनुदीचाम् । ब्रह्मनगरम् । नेह :— महानगरम् । नवनगरम् । उदीचान्तु न, कार्त्तिकनगरम् ।

९०. अर्मे चावर्णं द्व्यच् त्र्यच् । गुप्तार्मम् । कुक्कुटार्मम् । नेह :— महार्मम् । नवार्मम् ।

---

१. उपमानग्रहणमस्य पूर्वसूत्रस्य च विषयविभागार्थम् । २. ग्रामोऽत्र समूहः । ३. देवस्वामिकः । ४. यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदापि तत्पुरुषे शालायां नपुंसक इत्येतस्मात्पूर्वविप्रतिषेधेनायमेव स्वरः ।

९१. **न भूताधिकसंजीवमद्राश्मकज्जलम्[1] ।** भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् । मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् । * आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् * दिवोदासाय दाशुषे ।

९२. **अन्तः ।** अधिकारोऽयं प्रागुत्तरपदादिग्रहणात् ।

९३. **सर्वं गुणकार्त्स्न्ये[2] ।** सर्वश्वेतः । सर्वमहान् । नेह :– परमश्वेतः । सर्वेषां श्वेततरः, सर्वश्वेतः ।

९४. **संज्ञायां गिरिनिकाययोः ।** अञ्जनागिरिः । मौण्डिनिकायः । नेह :– परमगिरिः ।

९५. **कुमार्यां वयसि ।** वृद्धकुमारी[3] ।

९६. **उदकेऽकेवले ।** गुडोदम्[4] । नेह :– शीतोदकम् ।

९७. **द्विगौ क्रतौ[5] ।** गर्गत्रिरात्रः । नेह :– अतिरात्रः ।

९८. **सभायां नपुंसके ।** गोपालसभम् । स्त्रीसभम् ।

९९. **पुरे प्राचाम् ।** देवदत्तपुरम् । नान्दीपुरम् । नेह :– शिवपुरम् ।

१००. **अरिष्टगौडपूर्वे च ।** अरिष्टपुरम् । गौडपुरम् ।

१०१. **न हास्तिनफलकमार्देयाः ।** हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम्[6] ।

१०२. **कुसूलकूपकुम्भशालं बिले ।** कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालबिलम् ।

१०३. **दिक्शब्दा[7] ग्रामजनपदाख्यानचानराटेषु ।** पूर्वेषुकामशमी, अपरकृष्णमृत्तिका । पूर्वपञ्चालाः, पूर्वयायातम् । पूर्वचानराटम् ।

१०४. **आचार्योपसर्जनश्चान्तेवासी ।** पूर्वपाणिनीयाः । अपरकाशकृत्स्नाः ।

---

१. मद्राश्मग्रहणं संघातविगृहीतार्थम् । २. आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्ये वर्त्तते । ३. कुमारीशब्दः पुंसा सहासंप्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिः समानाधिकरणः । तच्च वय इह गृह्यते न कुमारत्वमेव । ४. स्वरे कृतेऽत्रैकादेशः । ५. द्विगावुत्तरपदे क्रतौ गम्य इत्यर्थः । ६. मृदेरपत्यमिति शुभ्रादित्वाड् ढक् । ७. शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम् ।

१०५. उत्तरपदवृद्धौ सर्वं च[1] । सर्वपाञ्चालकः । अपरपाञ्चालकः ।

१०६. बहुव्रीहौ विश्वं संज्ञायाम्[2] । विश्वकर्मा । विश्वदेवः । आ विश्वदेवं सत्पतिम् ।

१०७. उदराश्वेषुषु[3] । वृकोदरः । हर्यश्वः । महेषुः ।

१०८. क्षेपे । घटोदरः । कटुकाश्वः । चलाचलेषुः ।

१०९. नदी बन्धुनि । गार्गीबन्धुः । वात्सीबन्धुः । नेह :— ब्रह्मबन्धुः ।

११०. निष्ठोपसर्गपूर्वमन्यतरस्याम् । प्रधौतपादः ।

१११. उत्तरपदादिः । उत्तरपदाधिकार आपादान्तम् । आद्यधिकारस्तु प्रकृत्या भगालमिति यावत् ।

११२. कर्णो वर्णलक्षणात् । शुक्लकर्णः । शङ्कुकर्णः । अन्यत्र तु, शोभनकर्णः ।

११३. संज्ञौपम्ययोश्च । मणिकर्णः । गोकर्णः ।

११४. कण्ठपृष्ठग्रीवाजङ्घं च[3] । शितिकण्ठः । काण्डपृष्ठः । सुग्रीवः । नाडीजङ्घः । खरकण्ठः । गोपृष्ठः । अश्वग्रीवः । गोजङ्घः ।

११५. शृङ्गमवस्थायां च[4] । उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । ऋष्यशृङ्गः । मेषशृङ्गः ।

११६. नञो जरमरमित्रमृताः । न मे जरा अजरम् । अमरम् । अमित्रमर्दय । श्रवो देवेष्वमृतम् ।

११७. सोर्मनसी अलोमोषसी[5] । सुकर्माणः । सुयुजः । स नो वक्षदनिमानः सुवह्मा । शिवा पशुभ्यः सुमनाः सुवर्चाः । सुपेशस्करति । नेह :— सुलोमा । सूषाः ।

११८. क्रत्वादयश्च । साम्राज्याय सुक्रतुः । सुप्रतीका । सुहव्यः । सुप्रतूर्त्तिमनेहसम् ।

११९. आद्युदात्तं द्व्यच् छन्दसि । अधा स्वश्वाः । सुरथाँ[6] आतिथिग्वे ।

१. पूर्वपदप्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादः । २. प्रागव्ययीभावाद्बहुव्रीह्यधिकारः । संज्ञायामित्यनुवर्त्तते । ३. संज्ञौपम्ययोरिति वर्त्तते । ४. इहापि संज्ञौपम्ययोरिति वर्त्तत एव । ५. नञ्सुभ्यामित्यस्यापवादः । ६. नित्स्वरेणाश्वरथावाद्युदात्तौ ।

१२०. वीरवीर्यौ च। सुवीरेण रयिणा। सुवीर्यस्य[1] गोमतः।

१२१. कूलतीरतूलमूलशालाक्षसममव्ययीभावे[2]। उपकूलम्। उपतीरम्। उपतूलम्। उपमूलम्। उपशालम्। उपाक्षम्। सुषमम्। निःषमम्।

१२२. कंसमन्थशूर्पपाय्यकाण्डं द्विगौ। द्विकंसः। द्विमन्थः। द्विशूर्पः। द्विपाय्यम्। द्विकाण्डम्। नेह :– परमकंसः।

१२३. तत्पुरुषे शालायां नपुंसके। ब्राह्मणशालम्। नेह :– दृढशालम्।

१२४. कन्था च। सौशमिकन्थम्। आह्वरकन्थम्। नेह :– दाक्षिकन्था।

१२५. आदिश्चिहणादीनाम्[3]। चिहणकन्थम्। मदुरकन्थम्।

१२६. चेलखेटकटुककाण्डं गर्हायाम्[4]। पुत्रचेलम्। नगरखेटम्। दधिकटुकम्। प्रजाकाण्डम्। नेह :– परमचेलम्।

१२७. चीरमुपमानम्। वस्त्रं चीरमिव, वस्त्रचीरम्। कम्बलचीरम्।

१२८. पललसूपशाकं मिश्रे। घृतपललम्। घृतसूपः। घृतशाकम्।

१२९. कूलसूदस्थलकर्षाः संज्ञायाम्[5]। दाक्षिकूलम्। शाण्डिसूदम्। दाण्डायनस्थलम्। दाक्षिकर्षः।

१३०. अकर्मधारये राज्यम्। ब्राह्मणराज्यम्। कर्मधारये तु न, परमराज्यम्। * चेलराज्यादिस्वरादव्ययस्वरः पूर्वविप्रतिषेधेन * कुचेलम्। कुराज्यम्।

१३१. वर्ग्यादयश्च[6]। अर्जुनवर्ग्यः। वासुदेवपक्ष्यः।

१३२. पुत्रः पुम्भ्यः। दाशकिपुत्रः। माहिषपुत्रः।

१३३. नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः[7]। आचार्यपुत्रः, उपाध्यायपुत्रः, शाकटायनपुत्रः। राजपुत्रः, ईश्वरपुत्रः। ऋत्विक्पुत्रः, याजकपुत्रः, होतुःपुत्रः। श्यालपुत्रः। ज्ञातिपुत्रः, भ्रातुष्पुत्रः।

१३४. चूर्णादीन्यप्राणिषष्ठ्याः। मुद्गचूर्णम्। नेह :– मत्स्यचूर्णम्।

---

१. वीर्यशब्दो यत्प्रत्ययान्तः। तत्र यतोऽनाव इत्याद्युदात्तत्वं नेति वीर्यग्रहणं ज्ञापकम्। तत्र हि सति पूर्वेणैव सिद्धं स्यात्। २. तिष्ठद्गुप्रभृतिष्वेते। ३. आदिरिति वर्त्तमाने पुनर्ग्रहणं पूर्वपदस्याद्युदात्तत्वार्थम्। ४. चेलादिसादृश्येन पुत्रादीनां व्याघ्रादित्वात्समासः। ५. ग्रामसंज्ञा एताः। ६. वर्ग्यादिर्दिगाद्यन्तर्गणः ७. आख्याग्रहणात्पर्यायाणां विशेषाणां च ग्रहणम्। संयुक्ताः सम्बन्धिनः। ज्ञातयो मातापितृसम्बन्धेन बान्धवाः।

१३५. षट् च काण्डादीनि[१]। दर्भकाण्डम्। दर्भचीरम्। तिलपललम्। मुद्गसूपः। मूलकशाकम्। नदीकूलम्।

१३६. कुण्डं वनम्[२]। दर्भकुण्डम्। अन्यत्र मृत्कुण्डम्।

१३७. प्रकृत्या भगालम्। कुम्भीभगालम्[३]। कुम्भीनदालम्[३]। कुम्भीकपालम्[३]।

१३८. शितेर्नित्याऽबह्वज्बहुव्रीहावभसत्। शितिपादः[४]। शित्यंसः[४]। नेह :– शितिभसत्।

१३९. गतिकारकोपपदात्कृत्। प्रकारकः। प्रहरणम्। शोणाधृष्णू नृवाहसा। इध्मप्रव्रश्चनः। उच्चैःकारम्। ईषत्करः। नेह :– देवस्य कारकः।

१४०. उभे वनस्पत्यादिषु युगपत्। वनस्पतिं वन आ। बृहस्पतिं[५] यः। हर्षया शचीपतिम्[६]। तनूनपादुच्यते। नराशंसं[७] वाजिनम्। शुनःशेपम्।

१४१. देवताद्वन्द्वे च। आय इन्द्रावरुणौ। इन्द्राबृहस्पती वयम्।

१४२. नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु। इन्द्राग्निभ्यां कं वृषणः। नेह :– द्यावापृथिवी[८] जनयन्। सोमारुद्रौ[९]। इन्द्रापूषणौ[१०]। शुक्रामन्थिनौ[११]।

१४३. अन्तः। अधिकारोऽयं परादिश्छन्दसीत्यतः प्राक्।

१४४. थाथघञ्क्ताजबित्रकाणाम्। प्रभृथस्यायोः। आवसथः। प्रभेदः। धर्त्ता वज्री पुरुष्टुतः[१२]। प्रक्षयः। प्रलवः। प्रलवित्रम्। गोवृषः। गतिकारकोपपदादित्येव। सुस्तुतं भवता।

१४५. सूपमानात् क्तः। ऋतस्य योनौ सुकृतस्य। शशप्लुतः।

१४६. संज्ञायामनाचितादीनाम्। उपहूतः शाकल्यः। परिजग्धः कौण्डिन्यः। नेह :– आचितम्। आस्थापितम्।

---

१. चेलखेटकटुककाण्डमिति सूत्रे पठितात्काण्डशब्दादारभ्य षट् शब्दा इत्यर्थः। २. कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्त्तते। ३. मध्योदात्ता एते भगालवाचिनः। प्रकृत्येत्यधिकृतमन्त इति यावत्। ४. पादशब्दो वृषादित्वादाद्युदात्तः। अंसशब्दो नित्त्वात्। ५. बृहच्छब्दोऽत्र आद्युदात्तो निपात्यते। ६. शार्ङ्गरवादित्वादाद्युदात्तः शचीशब्दः। ७. निपातनाद्दीर्घः। ८. आद्युदात्तो द्यावा निपात्यते। ९. रोदेर्णिलुक्चेति रगन्तो रुद्रः। १०. श्वन्नुक्षन्पूषन्निति पूषा अन्तोदात्तः। ११. मन्थिन्निन्नन्तत्वादन्तोदात्तः। १२. पुरुषु बहुषु प्रदेशेषु स्तुतः।

१४७. प्रवृद्धादीनां[1] च । प्रवृद्धः । प्रयुक्तः ।

१४८. कारकाद्दत्तश्रुतयोरेवाशिषि[2] । देवदत्तः । विष्णुश्रुतः ।

१४९. इत्थम्भूतेन कृतमिति च[3] । सुप्तप्रलपितम् । प्रमत्तगीतम् ।

१५०. अनो भावकर्मवचनः । पयःपानं सुखम् । राजभोजनाः शालयः ।

१५१. मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् । राजशयनम् । राजासनम् । अश्वस्थानम् । ब्राह्मणयाजकः । गोक्रीतः ।

१५२. सप्तम्याः पुण्यम् । अध्ययनपुण्यम् ।

१५३. ऊनार्थकलहं तृतीयायाः । माषोनम् । माषविकलम् । वाक्कलहः । केचिदर्थेति स्वरूपग्रहणमिच्छन्ति । धान्यार्थः ।

१५४. मिश्रं चानुपसर्गमसन्धौ[4] । तिलमिश्राः । सर्पिर्मिश्राः । सन्धौ तु, ब्राह्मणमिश्रो[5] राजा ।

१५५. नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः । न कार्ण-[6]वेष्टकिकमकार्णवेष्टकिकम् । अच्छैदिकः[7] । अवत्सीयः[8] । असान्तापिकः[9] ।

१५६. ययतोश्चातदर्थे । न पाश्या[10], अपाश्या । अदन्त्यम् । तदर्थे तु, अपाद्यम् । तदनुबन्धकग्रहणे नातदनुबन्धकस्येति[11] । नेह :– अवामदेव्यम् ।

१५७. अच्कावशक्तौ । अपचः[12] । अविलिखः । गुणप्रतिषेध एव । नेह :– अन्योऽयं पचादपचः ।

१५८. आक्रोशे च । अपचो जाल्मः । अविक्षिपः ।

१५९. संज्ञायाम् । अदेवदत्तः ।

---

१. असंज्ञार्थमिदम् । प्रवृद्धादिराकृतिगणः । २. एवग्रहणं कारकावधारणं यथा स्यात् दत्तश्रुतावधारणं मा भूत् । अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति । संश्रुतः । ३. तृतीया कर्मणीत्यस्यापवादः । ४. पणबन्धेनैकार्थ्यं सन्धिः । मिश्रग्रहणे सोपसर्गग्रहणस्येदमेव ज्ञापकम् । ५. ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः । ६. कर्ण-वेष्टकाभ्यां सम्पादि । ७. छेदमर्हति छैदिकः । ८. न वत्सेभ्यो हितः । ९. न सन्तापाय प्रभवति । १०. पाशानां समूहः । ११. वामदेवाड् ड्यड्ड्याविति ज्ञापितम् । १२. पक्तुं न शक्तः ।

१६०. कृत्योकेष्णुच्चार्वादयश्च । अकर्त्तव्यम् । अनागामुकः । अनलङ्करिष्णुः । अनाढ्यम्भविष्णुः[१] । अचारुः । असाधुः । * राजाह्नोश्छन्दसि * अराजा । अनहः[२] ।

१६१. विभाषा तृन्नन्नतीक्ष्णशुचिषु । अकर्त्ता[३] । अनन्नम् । अतीक्ष्णम् । अशुचि ।

१६२. बहुव्रीहाविदमेतत्तद्भ्यः[४] प्रथमपूरणयोः क्रियागणने । इदम्प्रथममस्य, इदम्प्रथमः । एतद्द्वितीयः । तत्पञ्चमः । इदम्प्रथमकः[५] ।

१६३. संख्यायाः स्तनः । द्विस्तना । चतुःस्तना ।

१६४. विभाषा छन्दसि । द्विस्तनां करोति ।

१६५. संज्ञायां मित्राजिनयोः । देवमित्रः । कृष्णाजिनम् । * ऋषिप्रतिषेधो मित्रे * विश्वामित्र ऋषिः ।

१६६. व्यवायिनोऽन्तरम् । वस्त्रमन्तरं[६] यस्य, वस्त्रान्तरः ।

१६७. मुखं स्वाङ्गम् । गौरमुखः ।

१६८. नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः । उच्चैर्मुखः । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः[७] ।

१६९. निष्ठोपमानादन्यतरस्याम् । प्रक्षालितमुखः[८] । सिंहमुखः ।

१७०. जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः । सारङ्गजग्धः[९] । मासजातः । सुखजातः । दुःखजातः । नेह :— वस्त्रच्छन्नः । कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः ।

१७१. वा जाते । दन्तजातः २ । मासजातः २ ।

१७२. नञ्सुभ्याम् । अव्रीहिः । सुमाषः ।

१७३. कपि पूर्वम् । अब्रह्मबन्धुकः । सुकुमारीकः ।

---

१. इष्णुज्ग्रहणे खिष्णुचो द्व्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्यात् । २. लोके तु नञः स्वर एव । ३. पक्षे अव्ययस्वरः । ४. बहुव्रीहावित्यधिकारो वनं समास इत्यतः प्राक् । ५. उत्तरपदस्य कार्यित्वात्कपि पूर्वमन्तोदात्तम् । ६. व्यवधायकम् । ७. एषु पूर्वपदप्रकृतिस्वरः । ८. पक्षे निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति । ९. अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः ।

१७४. ह्रस्वान्तेऽन्त्यात्पूर्वम्[१]। अव्रीहिकः। अमाषकः।

१७५. बहोर्नञ्वदुत्तरपदभूम्नि। बहुव्रीहिकः। बहुमित्रकः।

१७६. न गुणादयोऽवयवाः[२]। बहुगुणा रज्जुः। बह्वक्षरं पदम्। बह्वध्यायः।

१७७. उपसर्गात्स्वाङ्गं ध्रुवमपर्शु[३]। प्रपृष्ठः। प्रललाटः। नेह :- विपर्शुः।

१७८. वनं समासे। तस्येदिमे प्रवणे।

१७९. अन्तः। अन्तर्वणो देशः।

१८०. अन्तश्च। पर्यन्तः। समन्तः।

१८१. न निविभ्याम्। न्यन्तः। व्यन्तः।

१८२. परेरभितोभावि मण्डलम्[४]। परिकूलम्। परिमण्डलम्।

१८३. प्रादस्वाङ्गं संज्ञायाम्। प्रगृहम्। नेह :- प्रपदम्।

१८४. निरुदकादीनि च। निरुदकम्। निरुपलम्।

१८५. अभेर्मुखम्। अभिमुखम्। अभिमुखा शाला।

१८६. अपाच्च[५]। अपमुखम्।

१८७. स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च[६]। अपस्फिगम्। अपपूतम्। अपवीणम्। अपाञ्जः। अपाध्वा[७]। अपकुक्षिः। अपसीरम्, अपहलम्। अपनाम।

१८८. अधेरुपरिस्थम्। अध्यारूढो दन्तोऽधिदन्तः[८]।

१८९. अनोरप्रधानकनीयसी। अनुगतो ज्येष्ठमनुज्येष्ठः[९]। अनुगतः कनीयान्, अनुकनीयान्।

---

१. पूर्वमित्यनुवर्त्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थम्। ह्रस्वान्त्येऽन्त्यादेव पूर्वपदमुदात्तं न कपि पूर्वमिति। अज्ञकः। कबन्तस्यैवान्तोदात्तत्वम्। २. गुणादिराकृतिगणः। ३. ध्रुवमेकरूपम्। ४. अभित उभयतो भावो यस्यास्ति तत्कूलादि मण्डलञ्चेत्यर्थः। ५. योगविभाग उत्तरार्थः। ६. स्फिगपूतकुक्षिग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थञ्च। ७. उपसर्गादध्वन इत्यस्याभाव इदम्। ज्ञापकं चेदं समासान्तानित्यत्वे। ८. दन्तस्योपरि जातः। ९. अन्वर्थस्य प्राधान्याज्ज्येष्ठोऽप्रधानम्।

१९०. पुरुषश्चान्वादिष्टः। अन्वादिष्टः पुरुषोऽनुपुरुषः। नेह :– अनुगतः पुरुषोऽनुपुरुषः।

१९१. अतेरकृत्पदे। अत्यङ्कुशो नागः। अतिपदा गायत्री। नेह :– अतिकारः। * अतेर्धातुलोप इति वाच्यम् * नेह :– शोभनो गार्ग्योऽतिगार्ग्यः।

१९२. नेरनिधाने[१]। निमूलम्। न्यक्षम्। नेह :– निहितो दण्डो निदण्डः।

१९३. प्रतेरंश्वादयस्तत्पुरुषे। प्रतिगतोंऽशुः, प्रत्यंशुः। प्रतिजनः। प्रतिराजा[२]।

१९४. उपाद् द्व्यजजिनमगौरादयः। उपदेवः। उपेन्द्रः। उपाजिनम्। नेह :– उपगौरः। उपतैषः।

१९५. सोरवक्षेपणे। सुप्रत्यवसितः[३]।

१९६. विभाषोत्पुच्छे। उत्क्रान्तः पुच्छादुत्पुच्छः। तत्पुरुष इत्येव। नेह :– उदस्तं पुच्छं येन स उत्पुच्छः।

१९७. द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ। द्विपाच्चतुष्पाच्च रथाय। त्रिपादूर्ध्वः। द्विदन्। त्रिमूर्धानं सप्तरश्मिम्। द्विमूर्धः। त्रिमूर्धः।

१९८. सक्थं चाक्रान्तात्। गौरसक्थः। श्लक्ष्णसक्थः। नेह :– चक्रसक्थः[४]।

१९९. परादिश्छन्दसि बहुलम्। अजिसक्थमालभेत। * परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यतः *। तुविजाता उरुक्षया। नि येन मुष्टिहत्यया। यस्त्रिचक्रः। विश्वायुर्धेहि।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
षष्ठाध्यायस्य द्वितीयपादः समाप्तः।



१. निधानमप्रकाशनम्। ततोऽन्यस्मिन्प्रकाश इत्यर्थः। २. समासान्तस्यानित्यत्वान्न टच्। ३. सुरत्र पूजायाम्। वाक्यार्थस्त्वत्र निन्दा। असूयया तथाभिधानात्। ४. समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वम्।

# अथ षष्ठाध्यायस्य तृतीयपादः ।



१. अलुगुत्तरपदे । अलुगधिकारः प्रागानङः । उत्तरपदाधिकारस्त्वापादसमाप्तेः ।

२. पञ्चम्याः स्तोकादिभ्यः । स्तोकान्मुक्तः, अल्पान्मुक्तः । अन्तिकादागतः, अभ्याशादागतः । दूरादागतः, विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । * ब्राह्मणाच्छंसिन उपसंख्यानम् । ब्राह्मणाच्छंसी[१] ऋत्विग्विशेषः ।

३. ओजःसहोऽम्भस्तमसस्तृतीयायाः । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् । * अञ्जस उपसंख्यानम् * अञ्जसाकृतम् । * पुंसानुजो जनुषान्ध इति च * यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धो जन्मान्धः ।

४. मनसः संज्ञायाम् । मनसागुप्ता ।

५. आज्ञायिनि च । मनसाज्ञातुं शीलमस्य, मनसाज्ञायी ।

६. आत्मनश्च । * पूरण इति वक्तव्यम् * आत्मनापञ्चमः[२] ।

७. वैयाकरणाख्यायां चतुर्थ्याः । आत्मनेपदम्[३] । आत्मनेभाषाः ।

८. परस्य च । परस्मैपदम् । परस्मैभाषाः ।

९. हलदन्तात्सप्तम्याः संज्ञायाम् । त्वचिसारः । युधिष्ठिरः[४] । अरण्येतिलकाः । * हृद्द्युभ्यां च * हृदिस्पृक् । दिविस्पृक् ।

१०. कारनाम्नि च प्राचां हलादौ[५] । मुकुटेकार्षापणम् । दृषदिमाषकः ।

११. मध्याद् गुरौ । मध्येगुरुः । * अन्ताच्च * अन्तेगुरुः ।

१२. अमूर्धमस्तकात्स्वाङ्गादकामे । कण्ठेकालः । उरसिलोमा । नेह :— मूर्धशिखः । मस्तकशिखः । मुखे कामोऽस्य, मुखकामः ।

---

१. ब्राह्मणे विहितानि शस्त्राण्युपचाराद्ब्राह्मणानि तानि शंसतीति द्वितीयार्थे पञ्चम्युपसंख्यानादेव । २. जनार्दनस्त्वात्मचतुर्थ एवेति तु बहुव्रीहिर्बोध्यः । ३. तादर्थ्ये चतुर्थ्येषा । ४. गवियुधिभ्यामिति षः । ५. पूर्वेण सिद्धे नियमार्थम् । कारनाम्न्येव, प्राचामेव, हलादावेवेति । तेनेह न :— अभ्याहितपशुः । यूथपशुः । अविकटोरणः ।

१३. बन्धे च विभाषा। हस्तेबन्धः, हस्तबन्धः। हलदन्तादेव। नेह :- गुप्तिबन्धः।

१४. तत्पुरुषे कृति बहुलम्। स्तम्बेरमः। कर्णेजपः। क्वचिन्न। कुरुचरः।

१५. प्रावृट्शरत्कालदिवां जे[१]। प्रावृषिजः। शरदिजः। कालेजः। दिविजः।

१६. विभाषा वर्षक्षरशरवरात्। वर्षेजः, वर्षजः। क्षरेजः, क्षरजः। शरेजः, शरजः। वरेजः, वरजः।

१७. घकालतनेषु कालनाम्नः। पूर्वाह्णेतरे, पूर्वाह्णतरे। पूर्वाह्णेतमे, पूर्वाह्णतमे, पूर्वाह्णेकाले। पूर्वाह्णकाले। पूर्वाह्णेतने, पूर्वाह्णतने।

१८. शयवासवासिष्वकालात्। खेशयः, खशयः। ग्रामेवासः, ग्रामवासः। ग्रामेवासी, ग्रामवासी। हलदन्तादेव। नेह :- भूमिशयः। * अपो योनियन्मतुषु * अप्सु योनिरुत्पत्तिरस्य, अप्सुयोनिः। अप्सु भवोऽप्सव्यः। अप्सुमन्तावाज्यभागौ।

१९. नेन्सिद्धबध्नातिषु च। स्थण्डिलशायी। सांकाश्यसिद्धः। चक्रबद्धः।

२०. स्थे च भाषायाम्। समस्थः। कूटस्थः। अन्यत्र तु, कृष्णोऽस्याखरेष्ठः।

२१. षष्ठ्या आक्रोशे। चौरस्यकुलम्। * वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु * वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः। * आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च * अमुष्यापत्यमामुष्यायणः[२]। अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका[३]। आमुष्यकुलिका। * देवानां प्रिय इति[४] च * देवानांप्रियः। चाद्देवप्रियः। * शेपपुच्छलाङ्गूलेषु शुनः * शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः। * दिवश्च दासे * दिवोदासः।

२२. पुत्रेऽन्यतरस्याम्। दास्याःपुत्रः, दासीपुत्रः।

२३. ऋतो विद्यायोनिसम्बन्धेभ्यः। होतुरन्तेवासी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः। * विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् * नेह :- होतृधनम्।

---

१. पूर्वस्यायं प्रपञ्चः। २. नडादित्वात्फक्। ३. मनोज्ञादित्वाद् वुञ्। ४. इह मूर्ख इत्यधिकः सिद्धान्तकौमुदीपाठः। भाष्ये तु न तथोपलभ्यते।

२४. विभाषा स्वसृपत्योः । मातुःष्वसा[1], मातुःस्वसा, मातृष्वसा[2]। पितुःष्वसा[1], पितुःस्वसा, पितृष्वसा[2]।

२५. आनङ् ऋतो द्वन्द्वे । होतापोतारौ । होतृपोतृनेष्टोद्गातारः । मातापितरौ । पुत्र[3] इत्यनुवृत्तेः पितापुत्रौ ।

२६. देवताद्वन्द्वे च । मित्रावरुणौ । * वायुशब्दप्रयोगे प्रतिषेधः * अग्निवायू । वाय्वग्नी । पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्य्यस्य परिग्रहार्थम् । नेह :– ब्रह्मप्रजापती[4] ।

२७. ईदग्नेः सोमवरुणयोः । अग्नीषोमौ[5] । अग्नीवरुणौ ।

२८. इद् वृद्धौ । अग्नामरुतौ देवते अस्य, आग्निमारुतं[6] कर्म । अग्नीवरुणौ देवते अस्य, आग्निवारुणं[6] कर्म । नेह :– आग्नेन्द्रः[7] । * विष्णौ न * आग्ना-वैष्णवम् ।

२९. दिवो द्यावा । द्यावाभूमी । द्यावाक्षमे ।

३०. दिवसश्च[8] पृथिव्याम् । द्यौश्च पृथिवी च, दिवस्पृथिव्यौ । द्यावा-पृथिव्यौ । छन्दसि दृष्टानुविधिः । द्यावाचिदस्मै पृथिवी ।

३१. उषासोषसः । उषासासूर्यम् ।

३२. मातरपितरावुदीचाम् । मातरपितरौ । अन्येषां तु मातापितरौ ।

३३. पितरामातरा चच्छन्दसि । आ मा गन्तां पितरामातरा च । चा-द्विपरीतमपि । न मातरापितरा नू चिदिष्टौ ।

३४. स्त्रियाः[9] पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी-प्रियादिषु[10] । चित्रा गावो यस्य स चित्रगुः[6] । रूपवती भार्या यस्य स रूपवद्भार्यः ।

---

१. मातुःपितुर्भ्यामिति वा षः । २. मातृपितृभ्यामिति षः । ३. पुत्रेऽन्य-तरस्यामित्यतो मण्डूकप्लुत्येति भावः । ४. एतद्धि नैकहविर्भागित्वेन श्रुतं नापि लोके प्रसिद्धसाहचर्यम् । ५. अग्नेरिति षः । ६. देवताद्वन्द्वे चेत्युभयपदवृद्धिः । ७. नेन्द्रस्य परस्येत्युत्तरपदवृद्धिनिषेधः । ८. अकारोच्चारणं सकारस्य विकाराभा-वार्थम् । ९. स्त्रीवाचकस्य शब्दस्येत्यर्थः । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यस्मिंस्तथाभूतस्येत्यर्थः । निपातनात्पञ्चम्या अलुक् । षष्ठ्याश्च लुक् । १०. प्रिया, मनोज्ञा, कल्याणी, सुभगा, दुर्भगा, भक्तिः, सचिवा, स्वसा, कान्ता, क्षान्ता, समा, चपला, दुहिता, वामा, अबला, तनयेति–प्रियादिः ।

चित्रा जरत्यो गावो यस्य स चित्राजरद्गुः। जरतीचित्रगुः। कर्मधारयपूर्वपदे जरच्चित्रगुः। कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः। नेह :– गङ्गाभार्यः। वामोरूभार्यः। कल्याणीपञ्चमा रात्रयः। कल्याणीप्रियः। दृढभक्तिरित्यत्र तु दृढं भक्तिरस्येति सामान्ये नपुंसकम्। स्त्रीत्वविवक्षायान्तु दृढाभक्तिरित्येव। * पुंवद्भावप्रतिषेधः प्रधानपूरण्यामेव * नेह :– कल्याणपञ्चमीकः[1] पक्षः।

३५. तसिलादिष्वाकृत्वसुचः। परिगणनं कर्त्तव्यम् :- त्रतसौ। तरप्तमपौ। चरड्जातीयरौ। कल्पब्देशीयरौ। रूपप्पाशपौ। थाल्। तिल्थ्यनौ। बहुत्र। बहुतः। दर्शनीयतरा। दर्शनीयतमा[2]। पटुचरी। पटुजातीया। दर्शनीयकल्पा। दर्शनीयदेशीया। दर्शनीयरूपा। दर्शनीयपाशा। बहुथा। प्रशस्ता वृकी, वृकतिः। अजाभ्यो हिता, अजथ्या। * शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः * बह्वीभ्यो देहि, बहुशः। अल्पाभ्योऽल्पशः। * त्वतलोर्गुण[3]वचनस्य * शुक्लाया भावः, शुक्लत्वम्, शुक्लता। * भस्याढे तद्धिते * हस्तिनीनां समूहो हास्तिकम्। नेह :– रौहिणेयः। समानः पतिः स्वामी यस्याः सा सपत्नी तस्या अपत्यं सापत्यः[4]। सपत्नस्य स्त्री सपत्नी, समानः पतिर्भर्त्ता यस्याः सापि सपत्नी, तयोरपत्यन्तु सापत्नः[5]। * ठक्छसोश्च * भवत्याश्छात्रा भावत्काः, भवदीयाः।

३६. क्यङ्मानिनोश्च। एनीवाचरतीति, एतायते। श्येनीव, श्येतायते। दर्शनीयमानिनी। दर्शनीयमानी चैत्रः।

३७. न कोपधायाः। पाचिकाभार्यः। रसिकाभार्यः। मद्रिकायते। मद्रिकामानिनी। * कोपधप्रतिषेधे तद्धितवुग्रहणम् * नेह :– पाकभार्यः[6]।

३८. संज्ञापूरण्योश्च। दत्ताभार्यः[7]। दत्तामानिनी। पञ्चमीभार्यः। पञ्चमीपाशा।

३९. वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे। स्रौघ्नीभार्यः। माथुरीयते। माथुरीमानिनी। नेह :– काषायकन्थः। हैममुद्रिकः। वृद्धिशब्देन विहिता

---

१. तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया पूरणीह रात्रिरप्रधानम्। २. पटितरा, पटितमेत्यादौ तु घरूपेति वक्ष्यमाणो ह्रस्वः परत्वादिमं पुंवद्भावं बाधते। ३. शरदः कृतार्थतेति तु सामान्ये नपुंसकम्। ४. भाषितपुंस्कत्वादिह पुंवत्। पत्युत्तरपदलक्षणो ण्यत्। ५. भाषितपुंस्कत्वाभावान्नेह पुंवत्। शिवादित्वादण्। पूर्वत्र नायं रूढयोरेव तत्र ग्रहणात्। ६. पाका शिशुर्भार्या यस्य सः। ७. दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति।

वृद्धिरिह गृह्यते । नेह :– तावद्भार्यः । वृद्धिम्प्रति फलोपधानाभावादिह पुंवत् । वैयाकरणभार्यः । सौवश्वभार्यः ।

४०. स्वाङ्गाच्चेतः । सुकेशीभार्यः । * अमानिनीति वक्तव्यम् * सुकेशमानिनी ।

४१. जातेश्च[१] । शूद्राभार्यः । ब्राह्मणीभार्यः ।

४२. पुंवत्कर्मधारयजातीयदेशीयेषु[२] । महानवमी । कृष्णचतुर्दशी । महाप्रिया । पाचकस्त्री । दत्तभार्या । पञ्चमभार्या । स्रौघ्नभार्या । सुकेशभार्या । ब्राह्मणभार्या । पाचकजातीया । पाचकदेशीया । * कुक्कुट्यादीनामण्डादिषु * कुक्कुट्या अण्डम्, कुक्कुटाण्डम् । मृग्याः क्षीरं मृगक्षीरम् । काक्याः शावः, काकशावः ।

४३. घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली[३] । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा । ब्राह्मणिमता । ब्राह्मणिहता ।

४४. नद्याः शेषस्यान्यतरस्याम् । ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा । स्त्रितरा, स्त्रीतरा । * कृन्नद्या न * लक्ष्मीतरा ।

४५. उगितश्च । विदुषितरा, विद्वत्तरा[४] ।

४६. आन्महतः समानाधिकरणजातीययोः । महाब्रह्मः, महाब्रह्मा । महादेवः । महाजातीयः । महाजातीया । नेह :– महतः सेवा, महत्सेवा । आदिति योगविभागादात्वम्[५] । एकादश । * महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च * महतो महत्या वा घासो महाघासः । महाकरः । महाविशिष्टः । * अष्टनः कपाले हविषि * अष्टाकपालः । * गवि च युक्ते * अष्टागवं[६] शकटम् ।

४७. द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । द्वौ च दश च, द्वादश ।

---

१. सौत्रस्यैवायं निषेधः । नेह :– हस्तिनीनां समूहो हास्तिकम्

२. प्रतिषेधार्थोऽयमारम्भः । ३. चेलडादीनि कुत्सनवाचीनि तैः कुत्सितानि कुत्सनैरिति समासः । ४. ह्रस्वाभावपक्षे तसिलादिष्विति पुंवत् । ५. प्रागेकादशभ्य इति निर्देशाद्वा । ६. अच्प्रत्यन्ववेत्यत्राजिति योगविभागाद्बहुव्रीहावप्यच् । अष्टानां गवां समाहारोऽष्टगवम्, तद्युक्तत्वाच्छकटमष्टागवमिति वा ।

द्व्यधिका दशेति वा। द्वाविंशतिः। अष्टादश। अष्टाविंशतिः। नेह :– द्वित्राः। द्व्यशीतिः। * प्राक्शतादिति वक्तव्यम् * नेह :– द्विशतम्। द्विसहस्रम्।

४८. त्रेस्त्रयः। त्रयोदश। त्रयोविंशतिः। बहुव्रीह्यशीत्योस्तु, त्रिर्दश, त्रिदशाः। त्र्यशीतिः। प्राक्शतादित्येव। नेह :– त्रिशतम्। त्रिसहस्रम्।

४९. विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्। द्वाचत्वारिंशत्, द्विचत्वारिंशत्। अष्टाचत्वारिंशत्, अष्टचत्वारिंशत्। त्रयश्चत्वारिंशत्, त्रिचत्वारिंशत्। एवं पञ्चाशत्षष्टिसप्ततिनवतिषु।

५०. हृदयस्य हृल्लेखयदण्लासेषु। हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्येदं हार्दम्। हृल्लासः। लेखेत्यणन्तग्रहणम्[1]। घञि तु, हृदयलेखः।

५१. वा शोकष्यञ्रोगेषु। हृच्छोकः, हृदयशोकः। सौहार्द्यम्[2], सौहृदय्यम्। हृद्रोगः, हृदयरोगः।

५२. पादस्य पदाज्यातिगोपहतेषु। पादाभ्यामजतीति, पदाजिः[3]। पदातिः। पदगः। पदोपहतः।

५३. पद्यत्यतदर्थे। पादौ विध्यन्ति, पद्याः शर्कराः। तदर्थे तु, पादार्थमुदकं पाद्यम्[4]। * इके चरतावुपसंख्यानम् * पादाभ्यां चरति, पदिकः[5]।

५४. हिमकाषिहतिषु च। पद्धिमम्। पत्काषी। पद्धतिः।

५५. ऋचः शे। गायत्र्यीं पच्छः शंसति।

५६. वा घोषमिश्रशब्देषु। पद्घोषः, पादघोषः। पन्मिश्रः, पादमिश्रः। पच्छब्दः, पादशब्दः। * निष्के चेति वाच्यम् * पन्निष्कः, पादनिष्कः।

५७. उदकस्योदः संज्ञायाम्। उदमेघः। * उत्तरपदस्य चेति वक्तव्यम् * क्षीरोदः।

५८. पेषंवासवाहनधिषु च। उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः[6]।

---

१. लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे तदन्तविधिर्नास्तीति। २. हृद्भगेति पूर्वोत्तरपदवृद्धिः। हृदयपर्यायो हृच्छब्दोऽप्यस्ति तेन सिद्धे प्रपञ्चार्थमिदम्। ३. अज्यतिभ्यां पादे चेतीण्। अजेर्व्यभावो निपातनात्। ४. पादार्घाभ्यां चेति यत्। ५. पर्पादित्वात्ष्ठन्। ६. समुद्रे तु पूर्वेण सिद्धम्।

५९. एकहलादौ पूरयितव्येऽन्यतरस्याम्। उदकुम्भः, उदककुम्भः। नेह :– उदकस्थाली।

६०. मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च। उदमन्थः, उदकमन्थः। उदौदनः, उदकौदनः। उदसक्तुः, उदकसक्तुः। उदबिन्दुः, उदकबिन्दुः। उदवज्रः, उदकवज्रः। उदभारः, उदकभारः। उदहारः, उदकहारः। उदवीवधः, उदकवीवधः। उदगाहः, उदकगाहः।

६१. इको ह्रस्वोऽङ्यो गालवस्य[१]। ग्रामणिपुत्रः, ग्रामणीपुत्रः। नेह :– गौरीपतिः * इयङुवङ्भाविनामव्ययानां च नेति वाच्यम् * श्रीमदः। भ्रूभङ्गः। शुक्लीभावः। * अभ्रुकुंसादीनामिति वक्तव्यम् * भ्रुकुंसः[२], भ्रूकुंसः। भ्रुकुटिः[३], भ्रूकुटिः। अकारोऽनेन विधीयत इति व्याख्यान्तरम्। भ्रकुंसः। भ्रकुटिः।

६२. एक तद्धिते च। एकस्या आगतमेकरूप्यम्। एकक्षीरम्।

६३. ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्। रेवतिपुत्रः। अजक्षीरम्।

६४. त्वे च। अजत्वम्, अजात्वम्। रोहिणित्वम्। रोहिणीत्वम्।

६५. इष्टकेषीकामालानां चिततूलभारिषु। इष्टकचितम्। पक्वेष्टकचितम्। इषीकतूलम्। मुञ्जकेषीकतूलम्। मालभारि। उत्पलमालभारि।

६६. खित्यनव्ययस्य। कालिमन्या। शुनिंधयः। नेह :– दोषामन्यमहः। दिवामन्या रात्रिः।

६७. अरुर्द्विषदजन्तस्य मुम्। अरुन्तुदः। द्विषन्तपः। जनमेजयः। अनव्ययस्येत्येव। नेह :- दोषामन्यमहः। दिवामन्या रात्रिः।

६८. इच एकाचोऽम्प्रत्ययवच्च। गाम्मन्यः। स्त्रियम्मन्यः, स्त्रीम्मन्यः। नरम्मन्यः। भुवंमन्यः। श्रिमन्यं[४] कुलमिति तु, भाष्यवचनात् सिद्धम्।

६९. वाचंयमपुरन्दरौ। वाचंयमो मौनव्रती। पुरन्दरः।

७०. कारे सत्यागदस्य। सत्यङ्कारः। अगदङ्कारः। * अस्तोश्चेति वक्तव्यम् * अस्तुङ्कारः। * धेनोर्भव्यायाम् * धेनुम्भव्या। * लोकस्य पृणे *

---

१. गालवग्रहणं पूजार्थम्। अन्यतरस्यामित्यनुवृत्तेः। २. भ्रुवा कुंसो भाषणं शोभा वा यस्य स स्त्रीवेषधारी नर्तकः। ३. भ्रुवः कुटिः, कौटिल्यम्। ४. परित्यक्तस्वलिङ्गः श्रीशब्दोऽत्र कुले वर्त्तते। तेन स्वमोर्नपुंसकादित्यमो लुग्भवति।

द्व्यधिका दशेति वा । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । नेह :– द्वित्राः । द्व्यशीतिः । * प्राक्शतादिति वक्तव्यम् * नेह :– द्विशतम् । द्विसहस्रम् ।

४८. त्रेस्त्रयः । त्रयोदश । त्रयोविंशतिः । बहुव्रीह्यशीत्योस्तु, त्रिर्दश, त्रिदशाः । त्र्यशीतिः । प्राक्शतादित्येव । नेह :– त्रिशतम् । त्रिसहस्रम् ।

४९. विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । द्वाचत्वारिंशत्, द्विचत्वारिंशत् । अष्टाचत्वारिंशत्, अष्टचत्वारिंशत् । त्रयश्चत्वारिंशत्, त्रिचत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु ।

५०. हृदयस्य हृल्लेखयदण्लासेषु । हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः । लेखेत्यणन्तग्रहणम्[1] । घञि तु, हृदयलेखः ।

५१. वा शोकष्यञ्रोगेषु । हृच्छोकः, हृदयशोकः । सौहार्द्यम्[2], सौहृदय्यम् । हृद्रोगः, हृदयरोगः ।

५२. पादस्य पदाज्यातिगोपहतेषु । पादाभ्यामजतीति, पदाजिः[3] । पदातिः । पदगः । पदोपहतः ।

५३. पद्यत्यतदर्थे । पादौ विध्यन्ति, पद्याः शर्कराः । तदर्थे तु, पादार्थमुदकं पाद्यम्[4] । * इके चरतावुपसंख्यानम् * पादाभ्यां चरति, पदिकः[5] ।

५४. हिमकाषिहतिषु च । पद्धिमम् । पत्काषी । पद्धतिः ।

५५. ऋचः शे । गायत्रीं पच्छः शंसति ।

५६. वा घोषमिश्रशब्देषु । पद्घोषः, पादघोषः । पन्मिश्रः, पादमिश्रः । पच्छब्दः, पादशब्दः । * निष्के चेति वाच्यम् * पन्निष्कः, पादनिष्कः ।

५७. उदकस्योदः संज्ञायाम् । उदमेघः । * उत्तरपदस्य चेति वक्तव्यम् * क्षीरोदः ।

५८. पेषंवासवाहनधिषु च । उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः[6] ।

---

१. लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे तदन्तविधिर्नास्तीति । २. हृद्भगेति पूर्वोत्तरपदवृद्धिः । हृदयपर्यायो हृच्छब्दोऽप्यस्ति तेन सिद्धे प्रपञ्चार्थमिदम् । ३. अज्यतिभ्यां पादे चेतीण् । अजेर्व्यभावो निपातनात् । ४. पादार्घाभ्यां चेति यत् । ५. पर्पादित्वात्ष्ठन् । ६. समुद्रे तु पूर्वेण सिद्धम् ।

५९. एकहलादौ पूरयितव्येऽन्यतरस्याम्। उदकुम्भः, उदककुम्भः। नेह :- उदकस्थाली।

६०. मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च। उदमन्थः, उदकमन्थः। उदौदनः, उदकौदनः। उदसक्तुः, उदकसक्तुः। उदबिन्दुः, उदकबिन्दुः। उदवज्रः, उदकवज्रः। उदभारः, उदकभारः। उदहारः, उदकहारः। उदवीवधः, उदकवीवधः। उदगाहः, उदकगाहः।

६१. इको ह्रस्वोऽङ्यो गालवस्य[१]। ग्रामणिपुत्रः, ग्रामणीपुत्रः। नेह :- गौरीपतिः * इयङुवङ्भाविनामव्ययानां च नेति वाच्यम् * श्रीमदः। भ्रूभङ्गः। शुक्लीभावः। * अभ्रुकुंसादीनामिति वक्तव्यम् * भ्रुकुंसः[२], भ्रूकुंसः। भ्रुकुटिः[३], भ्रूकुटिः। अकारोऽनेन विधीयत इति व्याख्यान्तरम्। भ्रकुंसः। भ्रकुटिः।

६२. एक तद्धिते च। एकस्या आगतमेकरूप्यम्। एकक्षीरम्।

६३. ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्। रेवतिपुत्रः। अजक्षीरम्।

६४. त्वे च। अजत्वम्, अजात्वम्। रोहिणित्वम्। रोहिणीत्वम्।

६५. इष्टकेषीकामालानां चिततूलभारिषु। इष्टकचितम्। पक्वेष्टकचितम्। इषीकतूलम्। मुञ्जकेषीकतूलम्। मालभारि। उत्पलमालभारि।

६६. खित्यनव्ययस्य। कालिमन्या। शुनिंधयः। नेह :- दोषामन्यमहः। दिवामन्या रात्रिः।

६७. अरुर्द्विषदजन्तस्य मुम्। अरुन्तुदः। द्विषन्तपः। जनमेजयः। अनव्ययस्येत्येव। नेह :- दोषामन्यमहः। दिवामन्या रात्रिः।

६८. इच एकाचोऽम्प्रत्ययवच्च। गाम्मन्यः। स्त्रियम्मन्यः, स्त्रीम्मन्यः। नरम्मन्यः। भुवंमन्यः। श्रिमन्यं[४] कुलमिति तु, भाष्यवचनात् सिद्धम्।

६९. वाचंयमपुरन्दरौ। वाचंयमो मौनव्रती। पुरन्दरः।

७०. कारे सत्यागदस्य। सत्यङ्कारः। अगदङ्कारः। * अस्तोश्चेति वक्तव्यम् * अस्तुङ्कारः। * धेनोर्भव्यायाम् * धेनुम्भव्या। * लोकस्य पृणे *

---

१. गालवग्रहणं पूजार्थम्। अन्यतरस्यामित्यनुवृत्तेः। २. भ्रुवा कुंसो भाषणं शोभा वा यस्य स स्त्रीवेषधारी नर्त्तकः। ३. भ्रुवः कुटिः, कौटिल्यम्। ४. परित्यक्तस्वलिङ्गः श्रीशब्दोऽत्र कुले वर्त्तते। तेन स्वमोर्नपुंसकादित्यमो लुग्भवति।

लोकम्पृणः। * इत्येऽनभ्याशस्य * अनभ्याशमित्यः[1]। * भ्राष्ट्राग्न्योरिन्धे * भ्राष्ट्रमिन्धः। अग्निमिन्धः। * गिलेऽगिलस्य * तिमिङ्गिलः। नेह :- गिलगिलः। * गिलगिले च * तिमिङ्गिलगिलः। * उष्णभद्रयोः करणे * उष्णङ्करणम्। भद्रङ्करणम्।

७१. **श्येनतिलस्य पाते ञे।** श्येनपातोऽस्यां श्यैनंपाता मृगया। तैलम्पाता स्वधा।

७२. **रात्रेः कृति विभाषा।** रात्रिञ्चरः, रात्रिचरः। रात्रिमटः, रात्र्यटः।

७३. **नलोपो नञः।** न ब्राह्मणः, अब्राह्मणः। * नञो नलोपस्तिङि क्षेपे *। अपचसि त्वं जाल्म।

७४. **तस्मान्नुडचि।** अनश्वः।

७५. **नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या।** न भ्राजत इति, नभ्राट्। न पातीति, नपात्। न वेत्तीति, नवेदाः। न असत्या[2] नासत्याः। न मुञ्चतीति, नमुचिः[3]। न कुलमस्य, नकुलः। न खमस्य, नखम्। न स्त्री पुमान्, नपुंसकम्[4]। न क्षरति, नक्षत्रम्[5]। न क्राम्यति, नक्रः[6]। न अकमस्मिन्निति, नाकः।

७६. **एकादिश्चैकस्य चादुक्।** एकेन न विंशतिः, एकान्नविंशतिः, एकादुनविंशतिः[7]। एकान्नत्रिंशत्, एकादुनत्रिंशत्।

७७. **नगोऽप्राणिष्वन्यतरस्याम्।** नगाः, अगाः पर्वताः। नेह :— अगो वृषलः शीतेन।

७८. **सहस्य सः संज्ञायाम्।** सपलाशम्। नेह :— सहयुध्वा।

७९. **ग्रन्थान्ताधिके च।** समुहूर्तं ज्योतिषमधीते। सद्रोणा खारी।

८०. **द्वितीये चानुपाख्ये[8]।** सराक्षसीका निशा।

८१. **अव्ययीभावे चाकाले।** चक्रेण युगपत्सचक्रम्। नेह :— सहपूर्वाह्णम्।

---

१. दूरतः परिहर्त्तव्य इत्यर्थः। २. सत्सु साधवः सत्याः। न सत्या असत्याः। ३. मुञ्चतेरौणादिकः किः। ४. स्त्रीपुंसयोः पुंसकभावः। ५. क्षीयतेः क्षरतेर्वा क्षत्रम्। ६. क्रमेर्डः। ७. अनुनासिकविकल्पः। ८. न उपाख्यायते, प्रत्यक्षत उपलभ्यत इत्यनुपाख्योऽनुमेयः।

८२. वोपसर्जनस्य । सपुत्रः, सहपुत्रः ।

८३. प्रकृत्याशिषि । स्वस्ति राज्ञे सहपुत्राय सहामात्याय । * अगोवत्सहलेष्विति वाच्यम् * सगवे । सवत्साय । सहलाय ।

८४. समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु । अनुभ्राता सगर्भ्यः[1] । अनुसखा सयूथ्यः । यो नः सनुत्यः । नेह :– समानमूर्धा । समानप्रभृतयः । समानोदर्काः । समानस्येति योगो विभज्यते । तेन सपक्षः । साधर्म्यम् । सजातीयमित्यादि[2] ।

८५. ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः ।

८६. चरणे ब्रह्मचारिणि । सब्रह्मचारी[3] ।

८७. तीर्थे ये । सतीर्थ्यः[4] ।

८८. विभाषोदरे । सोदर्यः[5] । समानोदर्यः ।

८९. दृग्दृशवतुषु[6] । सदृक् । सदृशः । * दृक्षे चेति वक्तव्यम् * सदृक्षः ।

९०. इदंकिमोरीश्की । ईदृक्, ईदृशः । इयान् । कीदृक्, कीदृशः, कियान् । * दृक्षे च * ईदृक्षः । कीदृक्षः ।

९१. आ सर्वनाम्नः । तादृक्, तादृशः । तावान् । तादृक्षः । यादृक्, यादृशः । यावान् । यादृक्षः । अमूदृक्, अमूदृशः, अमूदृक्षः ।

९२. विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । विष्वगञ्चतीति, विष्वद्र्यङ् । देवद्र्यङ् । तद्र्यङ् । यद्र्यङ् । अमुमुयङ्[7], अदमुयङ्[8], अदद्र्यङ्[9] । * छन्दसि स्त्रियां बहुलम् * विश्वाची च घृताची च । देवद्रीचीं नयत देवयन्तः । कद्रीची ।

९३. समः समि । सम्यङ् । सम्यञ्चौ । सम्यञ्चः । समीचः[10] । समीचा ।

---

१. सगर्भसयूथेति यत् । २. यद्वा सदृशार्थः सहशब्दोऽस्ति सदृशः सख्या, ससखीति यथा । ३. ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति, ब्रह्मचारी । समानः स इति । ४. समानतीर्थे वासीति यत् । ५. समानोदर इति यत् । ६. वतुरुत्तरार्थः । ७. अदसोऽसेरिति मत्वोत्वे पृथक् २ । ८. अन्त्यबाधेऽन्त्यसदेशस्येति परस्यैव मुत्वम् । ९. नात्र मुत्वं सूत्रेऽसेरिति दर्शनात् । १०. अच इत्यलोपे चाविति दीर्घः ।

९४. तिरसस्तिर्यलोपे। तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। लोपे तु, तिरश्चः[1]। तिरश्चेत्यादि।

९५. सहस्य सध्रिः। सध्र्यङ्। सध्र्यञ्चौ। सध्र्यञ्चः। सध्रीचः। सध्रीचेत्यादि।

९६. सध मादस्थयोश्छन्दसि। इन्द्र चास्मिन्त्सधमादे। सोमः सधस्थम्।

९७. द्व्यन्तरुपसर्गेभ्योऽप[2] इत्। द्विर्गता आपो यस्मिन्निति, द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। कृतसमासान्तग्रहणान्नेह :– स्वप्, स्वपी। * अवर्णान्ताद्वा * प्रेपम्, प्रापम्। परेपम्, परापम्।

९८. ऊदनोर्देशे। अनूपो देशः।

९९. अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यत्कारकः[3]। अन्यद्रागः। अन्यदीयः[4]।

१००. अर्थे विभाषा। अन्यदर्थः, अन्यार्थः।

१०१. कोः कत्तत्पुरुषेऽचि। कुत्सितोऽश्वः, कदश्वः। कदन्नम्। अन्यत्र तु, कूष्ट्रो राजा। * त्रौ च * कुत्सितास्त्रयः, कत्त्रयः।

१०२. रथवदयोश्च। कद्रथः। कद्वदः।

१०३. तृणे च जातौ। कत्तृणम्।

१०४. का पथ्यक्षयोः। कापथम्। काक्षः[5]।

१०५. ईषदर्थे। ईषज्जलं काजलम्। काम्लः।

१०६. विभाषा पुरुषे। कापुरुषः, कुपुरुषः।

१०७. कवं चोष्णे। कवोष्णम्, कोष्णम्, कदुष्णम्।

१०८. पथि चच्छन्दसि। कवपथः, कापथः, कुपथः।

---

१. अच इत्यलोपः। २. अप इति कृतसमासान्तानुकरणम्। षष्ठ्यर्थे प्रथमा। ३. कारके छे च अषष्ठीति निषेधो न विधानारम्भात्। ४. गहादेराकृतिगणत्वाच्छः। ५. अक्षशब्देन तत्पुरुषः। अक्षिशब्देन बहुव्रीहिर्वा।

१०९. **पृषोदरादीनि यथोपदिष्टम्।** पृषत उदरं पृषोदरम्[1]। वारिवाहको बलाहकः[2]। * दिक्शब्देभ्यस्तीरस्य तारभावो वा * दक्षिणतारम्, दक्षिणतीरम्। उत्तरतारम्, उत्तरतीरम्। * दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वञ्च *। दूडाशः[3]। दूणाशः[4]। दूडभः[5]। दूढयः[6]। बृसी[7]। * षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च * षोडन्। षोडश। * धासु वा षष उत्वमुत्तरपदादेः ष्टुत्वञ्च * षोढा, षड्धा।

११०. **संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ।** द्व्यह्नि, द्व्यहनि, द्व्यह्ने। त्र्यह्नि, त्र्यहनि, त्र्यह्ने। सायाह्नि[8], सायाहनि, सायाह्ने।

१११. **ढ्लोपे पूर्वस्य दीर्घोऽणः[9]।** पुना रमते। हरी रम्यः। शम्भू राजते। लीढः[10]। अजर्घाः।

११२. **सहिवहोरोदवर्णस्य।** सोढा। वोढा। सोढुम्। वोढुम्। सोढव्यम्। वोढव्यम्।

११३. **साढ्यै साढ्वा साढेति निगमे[11]।** साढ्यै समन्तात्। साढ्वा शत्रून्। मरुद्भिरुग्रः पृतनासु साळ्हा[12]। लोके तु, सोढ्वा। सोढा।

११४. **संहितायाम्।** अधिकारोऽयं द्व्यचोऽतस्तिङ इति यावत्।

११५. **कर्णे[13] लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य।** द्विगुणाकर्णः। दात्राकर्णः। नेह :— विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः।

---

१. तलोपः। भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्। २. पूर्वपदस्य ब उत्तरपदादेश्च लत्वम्। ३. दुःखेन दाश्यते। ४. दुःखेन नाश्यते। ५. दम्भेर्नलोपः। ६. दुःखेन ध्यायति। ७. ब्रुवन्तोऽस्यां सीदन्तीति ब्रुवच्छब्दस्य बृ आदेशः। सदेरधिकरणे डट्। आकृतिगणोऽयम्। ८. अह्नः सायः, सायाह्नः। ९. अण्ग्रहणं पूर्वेण णकारेणेति सूचयितुमिहाण्ग्रहणमन्यथा दीर्घपदश्रुत्याच इत्युपस्थितेरेव सिद्धेः। १०. पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्। ११. सहेः क्त्वाप्रत्यये आद्यं रूपद्वयम्, तृनि तृतीयं निपात्यते। १२. अचोर्मध्यस्थस्य डस्य ळः ढस्य ळ्हश्च प्रातिशाख्ये विहितः। आह हि :—द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः। ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा संप्रयुक्तः। १३. दीर्घ इत्यनुवर्त्तते।

११६. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ। उपानत्। नीवृत्। प्रावृट्। मर्माविन्। नीरुक्। ऋतीषट्। तरीतत्।

११७. वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्। कोटरावणम्। मिश्रकावणम्। सिध्रकावणम्। सारिकावणम्। किंशुलकागिरिः। अञ्जनागिरिः।

११८. वले। कृषीवलः। दन्तावलः। आसुतीवलः।

११९. मतौ बह्वचोऽनजिरादीनाम्। अमरावती। नेह :– अजिरवती।

१२०. शरादीनां च। शरावती। धूमावती।

१२१. इको वहेऽपीलोः। ऋषीवहम्। कपीवहम्। * अपील्वादीनामिति वाच्यम् * पीलुवहम्। दारुवहम्।

१२२. उपसर्गस्य घञ्यमनुष्ये बहुलम्। परीपाकः, परिपाकः। मनुष्ये तु, निषादः।

१२३. इकः काशे। वीकाशः। नीकाशः। नेह :– प्रकाशः।

१२४. दस्ति। नीत्तम्। सूत्तम्। नेह :– प्रत्तम्।

१२५. अष्टनः संज्ञायाम्। अष्टावक्रः। अष्टापदम्।

१२६. छन्दसि च[1]। अष्टापदी।

१२७. चितेः कपि। एकचितीकः।

१२८. विश्वस्य वसुराटोः। विश्वावसुः। विश्वाराट्।

१२९. नरे संज्ञायाम्। विश्वानरः।

१३०. मित्रे चर्षौ। विश्वामित्रः। नेह :– विश्वमित्रो माणवकः।

१३१. मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ। अश्वावतीं सोमावतीम्। इन्द्रियावान्मदिन्तमः। विश्वकर्मणा विश्वदेव्यावता।

१३२. ओषधेश्च विभक्तावप्रथमायाम्। यदोषधीभ्यः। अदधात्योषधीषु। प्रथमायान्तु, स्थिरेयमस्त्वौषधिः।

१३३. ऋचि तुनुघमक्षुतङ्[2]कुत्रोरुष्याणाम्। आ तू न इन्द्रः। नू मर्त्तः। उत वा घा स्यालात्। मक्षू गोमन्तमीमहे। भरता जातवेदसम्। कूमनाः। अत्रा ते भद्रा। यत्रा नश्चक्रा। उरुष्या णः।

---

१. असंज्ञार्थमिदम्। २. तङिति थादेशस्य ङित्वपक्षे ग्रहणम्। नेह :– शृणोत ग्रावाणः।

१३४. इकः सुञि । अभीषु[1] णः सखीनाम् ।

१३५. द्व्यचोऽतस्तिङः । विद्मा हि । चक्रा जरसम् ।

१३६. निपातस्य च । एवा हि ते ।

१३७. अन्येषामपि दृश्यते । केशाकेशि । कचाकचि । * शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छेषु दीर्घो वाच्यः * श्वादन्तः । श्वादंष्ट्रः । श्वाकर्णः । श्वाकुन्दः । श्वावराहः । श्वापुच्छः ।

१३८. चौ[2] । दधीचः पश्य । मधूचः पश्य । प्राचः । प्रतीचः ।

१३९. सम्प्रसारणस्य । कारीषगन्धीपुत्रः । कौमुदगन्धीपुत्रः ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
षष्ठाध्यायस्य तृतीयपादः समाप्तः ।



१. सुञ इति षः । नश्च धातुस्थोरुषुभ्य इति णः । २. अञ्चतौ लुप्तनकाराकार इत्यर्थः ।

# अथ षष्ठाध्यायस्य चतुर्थपादः।



१. अङ्गस्य। अधिकारोऽयमा सप्तमाध्यायसमाप्तेः।

२. हलः[1]। हूतः। जीनः। संवीतः। नेह :- निरुतम्।

३. नामि[2]। रामाणाम्। हरीणाम्। भानूनाम्। कर्तॄणाम्।

४. न तिसृचतसृ। तिसृणाम्। चतसृणाम्।

५. छन्दस्युभयथा। धाता धातॄणामिति बह्वृचाः। धातृणामिति तैत्तिरीयाः।

६ नृ च। नॄणाम्, नृणाम्।

७. नोपधायाः। पञ्चानाम्। सप्तानाम्। नवानाम्।

८. सर्वनामस्थाने चासम्बुद्धौ। राजा, राजानौ, राजानः, राजानम्, राजानौ। सम्बुद्धौ तु, हे राजन्।

९. वा षपूर्वस्य निगमे। ऋभुक्षाणम्, ऋभुक्षणम्। लोके तु, तक्षा, तक्षाणौ।

१०. सान्तमहतः[3] संयोगस्य। श्रेयान्, श्रेयांसौ, श्रेयांसः। अजरांसि। यशांसि। महान्, महान्तौ, महान्तः। असम्बुद्धावित्येव। नेह :- हे श्रेयः। हेमहन्।

११. अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्[4]। आपः। कर्त्तारौ, कर्त्तारः कटान्। कर्त्तारौ, कर्त्तारः कटस्य। स्वसारौ, स्वसारः। नप्तारौ, नप्तारः। नेष्टारौ, नेष्टारः। त्वष्टारौ, त्वष्टारः। क्षत्तारौ, क्षत्तारः। होतारौ, होतारः। पोतारौ, पोतारः। प्रशास्तारौ, प्रशास्तारः। नेह :- पितरौ, पितरः। भ्रातरौ, भ्रातर इत्यादि। असम्बुद्धावित्येव। नेह :- हे कर्त्तः। हे स्वसः।

---

१. सम्प्रसारणस्येति वर्त्तते। अङ्गस्य विशेषणतया तदन्तविधिः। तेनाङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्येत्यर्थः। २. आगतनुट्कं षष्ठीबहुवचनमाम्, नाम्। ३. नोपधाया इति वर्त्तते। ४. इहोपधाया इत्येवानुवर्त्तते। नप्त्रादीनां ग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। एवंभूतानां संज्ञाशब्दानामन्येषां दीर्घो मा भूदिति। उद्गातृशब्दस्य तु भवत्येव समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात्।

१२. इन्हन्पूषार्यम्णां शौ[1] । बहुदण्डीनि । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्यमाणि ।

१३. सौ च । दण्डी । वृत्रहा । पूषा । अर्यमा । सम्बुद्धौ तु, हे दण्डिन् । वृत्रहन् । पूषन् । अर्यमन् ।

१४. अत्वसन्तस्य चाधातोः । भवान् । कृतवान् । गोमान् । सुपयाः । चन्द्रमाः । वेधाः । असम्बुद्धावित्येव । नेह :- हे गोमन् । हे सुपयः ।

१५. अनुनासिकस्य क्विझलोः क्ङिति । इदमिवाचरति, इदामति । राजानति । प्रशान् । शान्तः । शान्तिः । शंशान्तः[2] ।

१६. अज्झनगमां सनि । विवीषति । तुष्टूषति । चिकीर्षति । जिघांसति । अधिजिगांसते[3] ।

१७. तनोतेर्विभाषा । वितांसति, तितंसति[4] । नेह :- तितनिषति ।

१८. क्रमश्च क्त्वि । क्रान्त्वा, क्रन्त्वा । नेह :- क्रमित्वा[5] ।

१९. च्छ्वोः शूडनुनासिके च । प्रश्नः । प्राट्[6] । विश्नः । स्योनाति[7] ।

२०. ज्वरत्वरस्रिव्यविमवामुपधायाश्च । जूः, जूरौ, जूरः । जूर्त्तिः । तूः, तूरौ, तूरः । तूर्त्तिः । स्रूः, स्रुवौ, स्रुवः । स्रूतः । स्रूतिः । ऊः, उवौ, उवः । ऊतिः । मूः, मुवौ, मुवः । मूतिः ।

२१. राल्लोपः[8] । मुर्छा—मूः, मुरौ, मुरः । मूर्त्तः[9] । मूर्त्तिः । हुर्छा—हूः, हुरौ, हुरः । हूर्णः । हूर्त्तिः । तुर्वी—तूः, तुरौ, तुरः । तूर्णः । तूर्त्तिः । धुर्वी—धूः, धुरौ, धुरः । धूर्णः । धूर्त्तिः ।

२२. असिद्धवदत्रा भात्[10] । असिद्धवदित्यधिक्रियते आध्यायसमाप्तेः । एधि । शाधि । जहि । समानाश्रय एव । नेह :- पपुषः । चिच्युषः ।

---

१. सिद्धे सत्यारम्भो नियमार्थः । एषां शावेवोपधाया दीर्घो नान्यत्र दण्डिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ । २. यङ्लुगन्तादयं सन् । ३. अजादेशस्य गमेर्ग्रहणं व्याख्यानात् । तेनेङ एतद्रूपम् । गमेस्तु, संजिगंसते । ४. सनीवन्तर्धेति सूत्रे पठितेन तनिपतिदरिद्रातिभ्य इति वार्त्तिकेन वेट् । ५. उदितो वेति वेट् । ६. पृच्छतीति क्विब्वचीति क्विप् दीर्घश्च । अत्रच्छस्य शः । तस्य षत्वे जश्त्वे चर्त्वम् । ७. स्यवधातुः क्र्यादिः । ८. छ्वोरिति वर्त्तते । ९. न ध्याख्यापॄमूर्छिमदामिति निष्ठानत्वाभावः १०. इत ऊर्ध्वमा पादसमाप्तेराभीयं तस्मिन्समानाश्रये कर्त्तव्ये तदसिद्धम् । अत्रेति पदेन समानाश्रयेऽस्मिन्नित्यर्थो भाष्यव्याख्यानाल्लभ्यते ।

२३. श्नान्नलोपः । इन्धे । अनक्ति । भनक्ति । हिनस्ति ।

२४. अनिदितां हल उपधायाः क्ङिति । स्रस्तः । ध्वस्तः । अग्निमत । प्राङ्[1], प्राञ्चौ, प्राञ्चः । * रञ्जेर्णौ मृगरमणे[2] नलोपो वक्तव्यः * रजयति मृगान् । नेह :– रञ्जयति पक्षिणः मृगान्वा तृणदानेन । * असि अकेऽने च रञ्जेर्नलोपो वाच्यः * रजः । रजकः । रजनम् ।

२५. दंशसञ्जस्वञ्जां शपि । दशति, दशतः, दशन्तीत्यादि । सजति । स्वजते । परिष्वजते ।

२६. रञ्जेश्च । रजति, रजतः, रजन्तीत्यादि । रजते, रजेते, रजन्त इत्यादि ।

२७. घञि च भावकरणयोः । रागः । नेह :– रज्यत्यस्मिन् , रङ्गः ।

२८. स्यदो जवे । स्यदो वेगः । अन्यत्र स्यन्दः ।

२९. अवोदैधौद्मप्रश्रथहिमश्रथाः । अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । प्रश्रथः । हिमश्रथः ।

३०. नाञ्चेः पूजायाम् । अञ्चिता गुरवः । प्राङ्[3], प्राञ्चः, प्राञ्चा, प्राङ्भ्यामित्यादि ।

३१. क्त्वि स्कन्दिस्यन्दोः । स्कन्त्वा । स्यन्त्वा[4], स्यन्दित्वा ।

३२. जान्तनशां विभाषा । रङ्क्त्वा, रक्त्वा । भङ्क्त्वा, भक्त्वा । नंष्ट्वा, नष्ट्वा । इटि नशित्वा ।

३३. भञ्जेश्च चिणि । अभाजि, अभञ्जि ।

३४. शास इदङ्हलोः । अशिषत्[5], अशिषताम्, अशिषन् । शिष्टः । तौ शिष्टः ।

३५. शा हौ । शाधि[6] ।

३६. हन्तेर्जः । जहि[7] ।

---

१. नलोपे कृते उगिदचामिति नुम् । संयोगान्तलोपे नुमो नकारस्य क्विन्प्रत्ययस्येति ङः । २. मृगरमणमाखेटकम् । ३. नेह नुम् । ४. ऊदित्वाद्वेट् । ५. इत्वे कृते शासिवसीति षः । ६. शादेशस्यासिद्धत्वाद्धेर्धिः । उपधाया इति निवृत्तम् । ७. जादेशस्यासिद्धत्वादतो हेरिति न लुक् ।

३७. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति । यतः, यतवान्, यतिः । रतः, रतवान्, रतिः । नतः, नतिः । गतः, गतिः । हतः । मतः । वतिः । ततः । क्षतः । क्षितः । ऋतः । तृतः । घृतः । वतः । मतः ।

३८. वा ल्यपि । व्यवस्थितविभाषेयम् । मान्तानिटां वा, नान्तानिटां वनादीनां च नित्यम् । आगत्य, आगम्य । प्रणत्य, प्रणम्य । प्रहत्य । प्रमत्य । प्रवत्य । वितत्य ।

३९. न क्तिचि दीर्घश्च । यन्तिः । रन्तिः । वन्तिः । तन्तिः ।

४०. गमः क्वौ । अङ्गगत् । * गमादीनामिति वक्तव्यम् * परीतत् । संयत् । सुनत् । * ऊङ् च गमादीनामिति वक्तव्यम् * अग्रेगूः । अग्रेभ्रूः ।

४१. विड्वनोरनुनासिकस्यात् । अब्जाः । गोजाः । गोषाः । कूपखाः । विजावा ।

४२. जनसनखनां सञ्झलोः । जातः, जातवान्, जातिः । सिषासति, सातः, सातिः । खातः, खातिः ।

४३. ये विभाषा । जायते, जन्यते । जाजायते, जञ्जन्यते । सायते, सन्यते । सासायते, संसन्यते । खायते, खन्यते । चाखायते, चंखन्यते ।

४४. तनोतेर्यकि । तायते, तन्यते ।

४५. सनः क्तिचि लोपश्चास्यान्यतरस्याम् । सातिः, सतिः, सन्तिः ।

४६. आर्धधातुके । अधिक्रियत इदं न ल्यपीत्यतः प्राक् ।

४७. भ्रस्जो रोपधयोरमन्यतरस्याम् । भ्रष्टा, भर्ष्टा । भ्रक्ष्यति, भर्क्ष्यति । भ्रज्जनम्, भर्जनम् ।

---

१. यमि, रमि, नमि, गमि, हनि, मन्यतयोऽनुनासिकान्ता अनुदात्तोपदेशाः । तनोत्यादयश्च तनु, षणु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनवः । २. तनोतेस्त्वात्वं वक्ष्यति । ३. क्तिच्क्तौ च संज्ञायामिति क्तिच् । ४. लोपश्च । ५. जनेः श्यनि तु ज्ञाजनोर्जा इति नित्यं जादेशः ।

४८. अतो लोपः[1]। गोपायाञ्चकार। गोपायिता। चिकीर्षिता। चिकीर्षकः।

४९. यस्य हलः। बेभिदांचक्रे। बेभिदिता। सोसूचांचक्रे। सोसूचिता।

५०. क्यस्य[2] विभाषा। समिधांचकार, समिध्यांचकार। समिधिता, समिध्यिता। समिधांचक्रे[3], समिध्यांचक्रे।

५१. णेरनिटि। इयङ्यण्गुणवृद्धिदीर्घाणामपवादः। अततक्षत्। आटिटत्। कारणा। कारकः। कार्यते।

५२. निष्ठायां सेटि। भावितः। कारितम्। गणितम्।

५३. जनिता मन्त्रे। यो नः पिता जनिता। लोके तु, जनयिता।

५४. शमिता यज्ञे। शृतं हविः शमितः[4]। लोके शमयितः।

५५. अयामन्ताल्वाय्येत्न्विष्णुषु[5]। कारयाञ्चकार। कामयाञ्चक्रे। मण्डयन्तः। स्पृहयालुः। स्तनयित्नुः। पोषयिष्णवः।

५६. ल्यपि लघुपूर्वात्। विगणय्य। प्रणमय्य। प्रबेभिदय्य। नेह :— संप्रधार्य।

५७. विभाषापः। प्रापय्य, प्राप्य।

५८. युप्लुवोर्दीर्घश्छन्दसि। दान्त्यनुपूर्वं वियूय। यत्रायोदक्षिणा परिप्लूय। लोके तु, वियुत्य। परिप्लुत्य।

५९. क्षियः। प्रक्षीय।

६०. निष्ठायामण्यदर्थे[6]। क्षीणवान्। प्रक्षीणः। क्षीणः। नेह :— क्षितः[7] कामो मया।

६१. वा क्रोशदैन्ययोः। क्षीणायुर्भव, क्षितायुर्भव। क्षीणोऽयं तपस्वी, क्षितोऽयं तपस्वी।

---

१. इहार्धधातुक इत्यधिकृतमावृत्त्या आर्धधातुकोपदेशेऽतो लोप आर्धधातुके परत इत्यर्थबोधकम्। २. क्यच्क्यङोर्ग्रहणम्। ३. आचारे क्यङो रूपे। ४. तृचि सम्बुद्ध्यन्तमेतत्। ५. नेति वक्तव्येऽयूवचनमुत्तरार्थम्। ६. ण्यदर्थो भावकर्मणी ततोऽन्यत्रेत्यर्थः। ७. दीर्घाभावात् क्षियो दीर्घादिति निष्ठानत्वमपि न।

६२. **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च**[1]। भाविष्यते, भविष्यते। अभाविष्यत, अभविष्यत। अन्वभाविषाताम्, अन्वभविषाताम्। भाविषीष्ट, भविषीष्ट। भाविता, भविता। दायिष्यते, दास्यते। अदायिषाताम्, अदासाताम्। दायिषीष्ट, दासीष्ट। दायिता, दाता। शामिष्यते[2], शमिष्यते, शमयिष्यते। शामिता[3], शमिता, शमयिता। घानिष्यते, हनिष्यते। अघानिषाताम्, अहसाताम्। पक्षे अवधिषाताम्। घानिषीष्ट। पक्षे वधिषीष्ट। घानिता, हन्ता। ग्राहिष्यते[4], ग्रहीष्यते। ग्राहिता, ग्रहीता। दर्शिष्यते, द्रक्ष्यते। अदर्शिषाताम्, अदृक्षाताम्। दर्शिषीष्ट, दृक्षीष्ट। दर्शिता, द्रष्टा।

६३. **दीङो युडचि क्ङिति**। *[5] वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ * दिदीये, दिदीयाते, दिदीयिरे।

६४. **आतो लोप इटि च**। पपिथ। तस्थिथ। दधतुः, दधुः। पपतुः, पपुः। गोदः।

६५. **ईद्यति**। देयम्। ग्लेयम्। हेयम्। स्थेयम्।

६६. **घुमास्थागापाजहातिसां हलि**। दीयते। देदीयते। धीयते। मीयते। मेमीयते। स्थीयते। तेष्ठीयते। जेगीयते। अध्यगीष्ट। पीयते। पेपीयते। पातेस्तु, पायते[6]। हीयते। जेहीयते। जिहीतेस्तु, हायते। अवसीयते। सेसीयते। क्ङितीत्येव नेह :- दाता। धाता।

६७. **एर्लिङि**। देयात्। धेयात्। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसेयात्।

६८. **वाऽन्यस्य संयोगादेः**। ग्लेयात्, ग्लायात्। म्लेयात्, म्लायात्। अन्यस्येति नेह :- स्थेयात्।

६९. **न ल्यपि**। प्रदाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। अवसाय।

---

१. चिणीवाङ्गकार्यमित्यर्थः। स्यादीनामिडागमश्च। इहार्धधातुकमित्यधिकृतं सीयुटो विशेषणं नेतरेषामव्यभिचारात्। २. चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपः। ३. चिण्णमुलोर्दीर्घ वा दीर्घः। ४. ग्रहोऽलिटीति चिण्वदिटो न दीर्घत्वम्। प्रकृतस्य वलादिलक्षणस्यैवेटस्तत्र ग्रहणात्। ५. बहिरङ्गत्वेन युटोऽसिद्धत्वाद्यणि प्राप्ते वचनम्। ६. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणात्।

७०. मयतेरिदन्यतरस्याम्। अपमित्य याचते, अपमाय वा।

७१. लुङ्लङ्लृङ्क्ष्वडुदात्तः। अभूत्। अभवत्। अभविष्यत्। अकार्षीत्। अकरोत्। अकरिष्यत्।

७२. आडजादीनाम्। ऐधिष्ट। ऐधत। ऐधिष्यत। आतीत्। आतत। आतिष्यत्।

७३. छन्दस्यपि दृश्यते[1]। आनट्। आवः।

७४. न माङ्योगे। मा भवान् भूत्। मा स्म भवत्, भूद्वा। मा भवानीक्षिष्ट। मा स्म भवानीक्षत।

७५. बहुलं छन्दस्यमाङ्योगेऽपि। जनिष्ठा उग्रः। काममूनयीत्। मा वः क्षेत्रे परबीजान्यवाप्सुः।

७६ इरयो रे। प्रथमं दध्र[2] आपः। बाहुलकान्नेह :– अग्निः कर्माणि चक्रिरे।

७७. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ। आप्नुवन्ति। शक्नुवन्ति। चिक्षियतुः, चिक्षियुः। लुलुवतुः, लुलुवुः। नियौ, नियः। लुवौ, लुवः। भ्रुवौ, भ्रुवः। * तन्वादीनां छन्दसि बहुलम् * तन्वं पुषेम, तनुवं पुषेम। त्र्यम्बकम्, त्रियम्बकम्। स्वर्गो लोकः। सुवर्गः।

७८. अभ्यासस्यासवर्णे। इयेष। उवोख। इयर्त्ति। नेह :–ईषतुः। ऊखतुः।

७९. स्त्रियाः। स्त्रियौ, स्त्रियः। स्त्रीणामित्यत्र तु, परत्वान्नुट्।

८०. वाम्शसोः। स्त्रियम्, स्त्रीं वा पश्य। स्त्रियः, स्त्रीः।

८१. इणो यण्। यन्ति। यन्तु। आयन्।

८२. एरनेकाचोऽसंयोगपूर्वस्य। प्रध्यौ, प्रध्यः। ग्रामण्यौ, ग्रामण्यः। नेह :– नियौ, नियः। यवक्रियौ, यवक्रियः।

८३. ओः सुपि। खलप्वौ, खलप्वः। सुल्वौ, सुल्वः। अनेकाच इत्येव। नेह :– लुवौ, लुवः।

---

१. यत्र विहितस्ततोऽन्यत्रेत्यर्थः। २. रेभावस्याभीयत्वेनासिद्धत्वादालोपः। अत्र रेशब्दस्येटि कृते पुनरपि रेभावः। तदर्थं च सूत्रे द्विवचनान्तमिरयोरिति निर्दिष्टम्।

८४. वर्षाभ्वश्च । वर्षाभ्वौ, वर्षाभ्वः । * दृन्करपुनःपूर्वस्य भुवो यण्वक्तव्यः * दृन्भ्वौ, दृन्भ्वः । करभ्वौ, करभ्वः । पुनर्भ्वौ, पुनर्भ्वः ।

८५. न भूसुधियोः । प्रतिभुवौ, प्रतिभुवः । सुधियौ, सुधियः ।

८६. छन्दस्युभयथा । वनेषु चित्रं विभ्वं विभुवं वा । सुध्यो नव्यमग्ने सुधियो वा ।

८७. हुश्नुवोः सार्वधातुके । जुह्वति, जुह्वतु । सुन्वन्ति, सुन्वन्तु, असुन्वन् । नेह :– जुहुवतुः । असंयोगपूर्वस्येत्येव । नेह :–आप्नुवन्ति ।

८८. भुवो वुग्लुङ्लिटोः । अभूवन्, अभूवम् । बभूव, बभूवतुः, बभूवुः ।

८९. ऊदुपधाया गोहः । गूहति, गूहते । निगूहकः । निगूहनम् । नेह :– जुगुहतुः । गोढा ।

९०. दोषो णौ । दूषयति, दूषयतः, दूषयन्ति ।

९१. वा चित्तविरागे । चित्तं दूषयति, दोषयति वा कामः ।

९२. मितां ह्रस्वः । घटयति । व्यथयति । जनयति । शमयति । ज्ञपयति । केचिदिह वेत्यनुवर्त्य व्यवस्थितविभाषां कल्पयन्ति । तेनेह न :- उत्क्रामयति । संक्रामयतीत्यादि ।

९३. चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । अशमि, अशामि । अतमि, अतामि । शमं शमम्, शामं शामम् । तमं तमम्, तामं तामम् ।

९४. खचि ह्रस्वः । द्विषन्तपः । परन्तपः । पुरन्दरः ।

---

१. कारेति दीर्घपाठे तु कारभ्वौ, कारभ्वः । स्वार्थिकः प्रज्ञादित्वादण् । २. पुनर्भूर्यौगिकः पुंसि । ३. वुक् नित्यत्वाद् गुणवृद्धी बाधते । न च द्विर्वचनेऽचीति तयोर्निषेधान्नेदं युक्तमिति वाच्यम् । स्थानिरूपातिदेशपक्षे तत्प्राप्तिसम्भवात् । ४. गोहरूपप्राप्तिसंभावनाविषये गुणहेतावजादौ प्रत्यय इत्यर्थः । ५. दुष इति वाच्ये दोष इत्युक्तिः प्रक्रमाभेदात् । ६. विरागोऽप्रीतता । ७. णाविति वर्त्तते । घटादयो मित इत्येवमादयो मितः । ८. प्रकृतो ह्रस्व एव तु न विकल्पितः । ण्यन्ताण्णौ ह्रस्वविकल्पस्यासिद्धेः । दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घः सिध्यति । ह्रस्वविधाने तु स्थानिवत्त्वं दुर्वारम् ।

९५. ह्लादो निष्ठायाम्। प्रह्लन्नः। प्रह्लन्नवान्। ह्लाद इति योगविभागात् प्रह्लत्तः।

९६. छादेर्घेऽद्व्युपसर्गस्य। प्रच्छदः[1]। उरश्छदः। दन्तच्छदः। नेह :— समुपच्छदः।

९७. इस्मन्त्रन्क्विषु च। छदिः। छद्म। छत्रम्। तनुच्छत्। धामच्छत्।

९८. गमहनजनखनघसां लोपः क्ङित्यनङि। जग्मतुः, जग्मुः। जघ्नतुः, जघ्नुः। जज्ञे, जज्ञाते। चख्नतुः, चख्नुः। जक्षतुः, जक्षुः। नेह :— गमनम्। अगमत्।

९९. तनिपत्योश्छन्दसि। वितत्निरे कवयः। शकुना इव पप्तिमः।

१००. घसिभसोर्हलि च। सग्धिश्च मे। बब्धां ते हरी धानाः।

१०१. हुझल्भ्यो हेर्धिः। जुहुधि। भिन्धि[2]। छिन्धि। नेह :— क्रीणीहि।

१०२. श्रुशृणुपृकृवृभ्यश्छन्दसि। श्रुधी[3] हवम्। शृणुधी गिरः। रायस्पूर्धि। उरुणस्कृधि। अपावृधि।

१०३. अङितश्च। रारन्धि[4]। अस्मे प्रयन्धि[5]। युयोधि[6] जातवेदः।

१०४. चिणो लुक्। अभावि। अकारि। अप्यायि। अपावि।

१०५. अतो हेः। भव। पच। पठ। गच्छ। नेह :— युहि। रुहि।

१०६. उतश्च प्रत्ययादसंयोगपूर्वात्। चिनु। सुनु। कुरु। धिनु। * छन्दसि वावचनम् * धिनुहि यज्ञपतिम्। कृणुहि।

१०७. लोपश्चास्यान्यतरस्यां म्वोः। सुन्वः, सुनुवः। सुन्मः, सुनुमः।

१०८. नित्यं करोतेः। कुर्वः[7]। कुर्मः।

१०९. ये च। कुर्यात्, कुर्याताम्, कुर्युः।

---

१. पुंसि संज्ञायामिति घः। २. भिन्तादित्यत्र परत्वात्तातङा बाधात् कृते च तातङि सकृद्गताविति न्यायाद्धिभावो न। ३. अन्येषामपीति दीर्घत्वम्। ४. रमेर्व्यत्ययेन परस्मैपदम्। वा छन्दसीति पित्त्वेनास्याङित्त्वम्। शपः श्लुरभ्यासदीर्घश्च। ५. यमेः शपो लुक्। ६. यौतेः शपः श्लुः। ७. हलि चेति दीर्घत्वं न भकुर्छुरामिति निषिध्यते।

११०. अत उत्[1]सार्वधातुके । कुरुतः, कुर्वन्ति, कुरु । क्ङितीत्येव । नेह :– करोति, करोषि, करोमि ।

१११. श्नसोरल्लोपः[2] । रुन्धः, रुन्धन्ति । भिन्तः, भिन्दन्ति । स्तः, सन्ति । क्ङितीत्येव । नेह :– भिनत्ति । अस्ति ।

११२. श्नाभ्यस्तयोरातः । क्रीणते । लुनते । मिमते । जिहते ।

११३. ई हल्यघोः । क्रीणीतः । लुनीतः । पुनीतः । नेह :– लुनाति । दत्तः ।

११४. इद्दरिद्रस्य । दरिद्रितः । दरिद्रिथः । दरिद्रिवः । दरिद्रिमः । * दरिद्रातेरार्धधातुके विवक्षित आलोपो वाच्यः । लुङि वा, सनि ण्वुलि ल्युटि च न * दरिद्रिता । अदरिद्रित्, अदरिद्रासीत् । दिदरिद्रासति । दरिद्रायकः । दरिद्राणम् ।

११५. भियोऽन्यतरस्याम् । बिभितः, बिभीतः । बिभिथः, बिभीथः ।

११६. जहातेश्च । जहितः, जहीतः । जहिथः, जहीथः ।

११७. आ च हौ । जहाहि, जहिहि, जहीहि ।

११८. लोपो यि । जह्यात्, जह्याताम्, जह्युः ।

११९. घ्वसोरेद्धावभ्यासलोपश्च[3] । देहि । धेहि । एधि[4] ।

१२०. अत एकहल्मध्येऽनादेशादेर्लिटि[5] । रेणतुः, रेणुः । पेचतुः, पेचुः । देभे, देभाते, देभिरे । नेह :– चकणतुः, चकणुः । बभणतुः, बभणुः । ररक्षतुः, ररक्षुः । क्ङितीत्येव । नेह :– रराण । पपाच ।

१२१. थलि च सेटि । पेचिथ । रेणिथ । शेकिथ । नेह :– पपक्थ ।

१२२. तॄफलभजत्रपश्च । तेरतुः, तेरुः, तेरिथ । फेलतुः, फेलुः, फेलिथ । भेजतुः, भेजुः, भेजिथ । त्रेपे, त्रेपाते, त्रेपिरे ।

---

१. तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम् । २. श्नसोरिति शकन्ध्वादित्वात्पररूपम् । ३. शिदयं लोपस्तेन सर्वस्याभ्यासस्य भवति । ४. आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । ५. आदेशश्चेह वैरूप्यसम्पादक एवाश्रीयते । शशिददोः प्रतिषेधवचनाज्ज्ञापकात् । तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव ।

१२३. राधो हिंसायाम्। अपरेधतुः, अपरेधुः, अपरेधिथ। अहिंसायां तु रराधतुः, रराधुः, रराधिथ।

१२४. वा जॄभ्रमुत्रसाम्। जेरतुः, जजरतुः। जेरुः, जजरुः। जेरिथ, जजरिथ। भ्रेमतुः, बभ्रमतुः। भ्रेमुः, बभ्रमुः। भ्रेमिथ, बभ्रमिथ। त्रेसतुः, तत्रसतुः। त्रेसुः, तत्रसुः। त्रेसिथ, तत्रसिथ।

१२५. फणां च सप्तानाम्। फेणतुः, पफणतुः। रेजतुः, रराजतुः। भ्रेजे, बभ्राजे। भ्रेशे, बभ्राशे। भ्लेशे, बभ्लाशे। स्येमतुः, सस्यमतुः। स्वेनतुः, सस्वनतुः।

१२६. न शसददवादिगुणानाम्। शशसतुः, शशसुः, शशसिथ। ददde, दददाते, दददिरे। ववमतुः, ववमुः, ववमिथ। शशरतुः, शशरुः, शशरिथ।

१२७. अर्वणस्त्रसावनञः। अर्वन्तौ, अर्वन्तः, अर्वता, अर्वद्भ्याम्। अर्वती। आर्वतम्। नेह :– अनर्वाणौ। अनर्वाणः।

१२८. मघवा बहुलम्। मघवान्, मघवन्तौ, मघवन्तः, मघवता। मघवती। माघवतम्। मघवा, मघवानौ, मघवानः, मघोनः, मघोना, मघवभ्याम्। मघोनी। माघवनम्।

१२९. भस्य। अधिक्रियत इदमाध्यायसमाप्तेः।

१३०. पादः पत्[१]। सुपदः, सुपदा, सुपदे। द्विपदः, द्विपदा, द्विपदे। द्विपदिकां ददाति। वैयाघ्रपद्यः।

१३१. वसोः सम्प्रसारणम्। विदुषः, विदुषा, विदुषे। पेचुषः, पेचुषा। पेचुषे। सेदुषः, सेदुषा, सेदुषे।

१३२. वाह ऊठ्[२]। विश्वौहः, विश्वौहा, विश्वौहे।

१३३. श्वयुवमघोनामतद्धिते। शुनः, शुना, शुने। यूनः, यूना, यूने। मघोनः, मघोना, मघोने। नेह :– शौवनं[३] मांसम्। यौवनम्। माघवनम्।

---

१. लुप्ताकारः पादशब्दो गृह्यते। २. एत्येधत्यूठ्स्विति वृद्धिः। संप्रसारण एव कृते गुणे च वृद्धिरेवीति वृद्धौ विश्वौह इत्यादीनां सिद्धौ ऊठ्ग्रहणं ज्ञापयति असिद्धं बहिरङ्गमन्तरङ्ग इति परिभाषाम्। ३. शुनो विकारे प्राणिरजतादिभ्य इत्यण्। द्वारादित्वादैजागमः।

उत्तरत्र अन इति योगो विभज्यते । तस्य चात्रापि सम्बन्धादन्नन्तानामेवेदम्। नेह :- युवतीः । मघवतः ।

१३४. अल्लोपोऽनः । राज्ञः, राज्ञा, राज्ञे । यूष्णः, यूष्णा, यूष्णे । नेह :- राजकीयम् ।

१३५. षपूर्वहन्धृतराज्ञामणि । औक्ष्णः । ताक्ष्णः । औणघ्नः । धार्तराज्ञः ।

१३६. विभाषा ङिश्योः । राज्ञि, राजनि । यूष्णि, यूषणि । साम्नि, सामनि ।

१३७. न संयोगाद्वमन्तात् । यज्वनः, यज्वना, यज्वने । ब्रह्मणः, ब्रह्मणा, ब्रह्मणे । पर्वणा, पर्वणे ।

१३८. अचः[२] । प्राचः[३], प्राचा, प्राचे । प्रतीचः, प्रतीचा, प्रतीचे । दधीचः, दधीचा, दधीचे ।

१३९. उद ईत् । उदीचः, उदीचा, उदीचे ।

१४०. आतो धातोः । विश्वपः, विश्वपा, विश्वपे । गोपः, गोपा, गोपे । नेह :- खट्वाः । मालाः ।

१४१. मन्त्रेष्वाङ्यादेरात्मनः । त्मना देवेषु । लोके तु आत्मना ।

१४२. ति विंशतेर्डिति । विंशत्या क्रीतः, विंशकः । विंशतेः पूरणो विंशः ।

१४३. टेः । कुमुद्वान् । नड्वान् । वेतस्वान् । उपसरजो मन्दुरजः । त्रिंशकः ।

१४४. नस्तद्धिते । औडुलोमिः[४] । आग्निशर्मिः । अध्यात्मम् । * नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् *[५] सब्रह्मचारिण इमे, साब्रह्मचाराः । पीठसर्पिण इमे, पैठसर्पाः । कलापिना प्रोक्तमधीयते, कालापाः । कौथुमिन इमे,

---

१. अन्नन्तत्वाभावादिति भावः । २. अञ्चतिर्लुप्तनकारो निर्दिश्यते अच इति । ३. नलोपे कृते अच इत्यल्लोपे चाविति दीर्घः । ४. बाह्वादित्वादिञ् । ५. अत्र ये इन्नन्तास्तेषामिनण्यनपत्य इति ये त्वन्नन्तास्तेषामन्निति प्रकृतिभावे प्राप्ते वचनम्।

कौथुमाः । तैतिलाः[1] । जाजलाः । लाङ्गलाः । शैलालाः । शैखण्डाः । सौकरसद्माः । सौपर्वाः । * चर्मणः कोशे * चार्मः कोशः । * अश्मनो विकार उपसंख्यानम् * अश्मनो विकार आश्मः । * शुनः संकोचे * शौवः संकोचः । शौवनोऽन्यः । * अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्यानम् * सायंप्रातिकः । पौनःपुनिकः । बाह्यः । कौतस्कुतः ।

१४५. अह्नष्टखोरेव[2] । उत्तमाहः । द्वयोरह्नोः समाहारः, द्व्यहः । द्वे अहनी अधीष्टो भृता भूतो भावी वा, द्व्यहीनः । त्र्यहीनः । अहीनः क्रतुः । नेह :– अह्ना निर्वृत्तमाह्निकम् ।

१४६. ओर्गुणः[3] । औपगवः । बाभ्रव्यः । माण्डव्यः । शङ्कव्यं दारु । बाहूब इति ।

१४७. ढे लोपोऽकद्र्वाः । कामण्डलेयः[4] । शैतिवाहेयः । जाम्बेयः । नेह :– काद्रवेयो मन्त्रमपश्यत ।

१४८. यस्येति च[5] । दाक्षी । सखी । दौलेयः । आत्रेयः । कुमारी । गौरी । दाक्षिः । सौमित्रिः । * औङः श्यां प्रतिषेधो वाच्यः * ज्ञाने । काण्डे ।

१४९. सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । सूर्येणैकदिक्, सौरी बलाका । तैषमहः । तैषी रात्रिः । अगस्त्यस्यापत्यं स्त्री, आगस्ती[6] । मत्सी[7] । * मत्स्यस्य ङ्याम् * नेह :– मात्स्यं मांसम् । * सूर्यागस्त्ययोश्छे च ङ्यां च * सौरीयः । सौरी । आगस्ती । आगस्तीयः । नेह :– सौर्यं चरुं निर्वपेत् । आगस्त्यः । * तिष्यपुष्ययोर्नक्षत्राणि * तैषः । पौषः ।

१५०. हलस्तद्धितस्य[8] । गार्गी । वात्सी ।

१५१. आपत्यस्य च तद्धितेऽनाति । गर्गाणां समूहो गार्गकम् । गार्गीयाः । नेह :– गार्ग्यायणः ।

---

१. तैतिलिजाजलिनावाचार्यौ तत्कृतं ग्रन्थमधीयत इति, तैतिलाः । जाजलाः । एवं लाङ्गलाः शैलालाः । शिखण्ड्यादिभ्यस्तु शैषिकोऽण् । २. एवग्रहणं विस्पष्टार्थम् । अह्न एव टखोरिति नियमस्तु न स्यात् आत्माध्वानौ ख इति प्रकृतिभावविधानात् । ३. ओरोदिति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्य इति ज्ञापयति । तेन स्वायम्भुवमित्यादिसिद्धिः । ४. चतुष्पाद्भ्यो ढञिति ढञ् । ५. इश्च अश्चानयोः समाहारो यंतस्य । ईति दीर्घे ढरे तद्धिते च लोप इत्यर्थः । ६. ऋषित्वादण् । ७. गौरादित्वान् ङीष् । ८. ईति परतः ।

१५२. क्यच्व्योश्च । गार्गीयति । गार्गीयते । गार्गीभवति । वात्सीभवति ।

१५३. बिल्वकादिभ्यश्छस्य लुक्[1][2] । बिल्वाः सन्ति यस्यां सा, बिल्वकीया—तस्यां भवा बैल्वकाः । वेणुकीया—वैणुकाः । वेत्रकीया—वैत्रकाः ।

१५४. तुरिष्ठेमेयःसु[3] । अतिशयेन कर्त्ता, करिष्ठः । दोहीयसी धेनुः ।

१५५. टेः । पटिष्ठः, पटिमा, पटीयान् । लघिष्ठः, लघिमा, लघीयान् । प्रथिष्ठः, प्रथिमा, प्रथीयान् ।

१५६. स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । स्थविष्ठः, स्थवीयान् । दविष्ठः, दवीयान् । यविष्ठः, यवीयान् । ह्रसिष्ठः, ह्रसीयान्, ह्रसिमा । क्षेपिष्ठः, क्षेपीयान्, क्षेपिमा । क्षोदिष्ठः, क्षोदीयान्, क्षोदिमा ।

१५७. प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । प्रेष्ठः, प्रेमा, प्रेयान् । स्थेष्ठः, स्थेयान् । स्फेष्ठः, स्फेयान् । वरिष्ठः, वरिमा, वरीयान् । बंहिष्ठः, बंहिमा, बंहीयान् । गरिष्ठः, गरिमा, गरीयान् । वर्षिष्ठः, वर्षीयान् । त्रपिष्ठः, त्रपीयान् । द्राघिष्ठः, द्राघिमा, द्राघीयान् । वृन्दिष्ठः, वृन्दीयान्[4] ।

१५८. बहोर्लोपो भू च बहोः । भूयान्, भूमा ।

१५९. इष्ठस्य यिट्[5] च । भूयिष्ठः ।

१६०. ज्यादादीयसः । ज्यायान् ।

१६१. र ऋतो हलादेर्लघोः । प्रथिष्ठः, प्रथीयान्, प्रथिमा । म्रदिष्ठः, म्रदीयान्, म्रदिमा । नेह :- ऋजिष्ठः, ऋजीयान्, ऋजिमा । कृष्णिष्ठः, कृष्णीयान्, कृष्णिमा । परिगणनं कर्त्तव्यम् । पृथुं मृदुं भृशं चैव कृशं च दृढमेव च । परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् । नेह :- कृतमाचष्टे, कृतयति । मातयति । भ्रातयति ।

---

१. नडादिषु बिल्वादयः पठ्यन्ते । त एव कृतकुगागमा बिल्वकादयो भवन्ति । २. छग्रहणं छमात्रस्य लुग् यथा स्यात् कुको निवृत्तिर्मा भूदिति । अन्यथा संनियोगशिष्टत्वात्कुगपि निवर्त्तेत । ३. इमनिज्ग्रहणमुत्तरार्थम् । ४. प्रियोरुगुरुबहुलदीर्घाः पृथ्व्यादिषु पठ्यन्ते । तेनान्येषामिमनिज् न भवतीति नोदाह्रियते । ५. इकार उच्चारणार्थः ।

१७४. दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । हस्तिनोऽपत्यं हास्तिनायनः[1] । दाण्डिनायनः । अथर्वणा प्रोक्तमधीते, आथर्वणिकः[2] । जैह्माशिनेयः[3] । वाशिनोऽपत्यं वाशिनायनिः[4] । भ्रौणहत्यम्[5] । धैवत्यम्[6] । सरय्वां भवं सारवमुदकम्[7] । इक्ष्वाकुषु जनपदेषु भव ऐक्ष्वाकः[8] । मित्रयोरपत्यं मैत्रेयः[9] । हिरण्मयम्[10] ।

१७५. ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि । ऋतौ भवमृत्व्यम् । वास्तुनि भवं वास्त्व्यम्, वास्त्वं च । माध्वीर्नः सन्त्वोषधीः । हिरण्ययेन सविता रथेन ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
षष्ठाध्यायस्य चतुर्थपादः समाप्तः ।



१. हस्तिन्-दण्डिन्-शब्दौ नडादौ पठ्येते । २. वसन्तादिभ्यष्ठक् । इके प्रकृतिभावो निपात्यते । ३. जिह्माशिनोऽपत्यम् । शुभ्रादित्वाड् ढक् । ४. उदीचां वृद्धादिति फिञ् । ५. भ्रूणघ्नो भावः । तत्वं निपात्यते । ६. धीव्नो भावः । ७. सरयू-इत्येतस्याणि अयूशब्दलोपः । ८. कोपधादण् । उलोपः । ९. गृष्ट्यादित्वाड् ढञ् । युलोपः । १०. विकारे मयट् । यलोपः ।

# अथ सप्तमाध्यायस्य प्रथमपादः ।



१. युवोरनाकौ[1] । नन्दनः । रमणः । कारकः । हारकः । वासुदेवकः ।

२. आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्[2] । नाडायनः, चारायणः । सौपर्णेयः, वैनतेयः । कुलीनः । गार्गीयः । क्षत्रियः । नेह :– फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते ।

३. झोऽन्तः । भवन्ति । कुर्वन्ति । प्रत्ययस्येत्येव । नेह :– उज्झिता, उज्झितुम् ।

४ अदभ्यस्तात् । जुह्वति । ददति । जक्षति । जाग्रतु ।

५. आत्मनेपदेष्वनतः । चिन्वते । लुनते । ऐधिषत ।

६. शीङो रुट् । शेरते, शेरताम्, अशेरत ।

७. वेत्तेर्विभाषा । संविद्रते, संविदते । संविद्रताम् , संविदताम् । समविद्रत, समविदत ।

८. बहुलं छन्दसि । देवा अदुह्र । धेनवो दुह्रे । घृतं दुहते । अहश्रमस्य ।

९. अतो भिस ऐस् । रामैः । वृक्षैः । नेह :– अग्निभिः । वायुभिः । रमाभिः ।

१०. बहुलं छन्दसि । अग्निर्देवेभिः ।

११. नेदमदसोरकोः । एभिः । अमीभिः । नेह :– इमकैः । अमुकैः ।

१२. टाङसिङसामिनात्स्याः[3] । रामेण । वृक्षेण । रामात् । वृक्षात् । रामस्य । वृक्षस्य । नेह :– सख्या । पत्या ।

१३. ङेर्यः । रामाय । वृक्षाय । नेह :– सख्ये । पत्ये ।

१४. सर्वनाम्नः स्मै । सर्वस्मै । विश्वस्मै । यस्मै । कस्मै । तस्मै ।

१५. ङसिङ्योः स्मात्स्मिनौ । सर्वस्मात् । विश्वस्मात् । यस्मात् । तस्मात् । सर्वस्मिन् । विश्वस्मिन् । यस्मिन् । कस्मिन् । तस्मिन् ।

---

१. अनुनासिकयवयोर्ग्रहणम् । व्याख्यानात् । नेह :– ऊर्णाया युस् ऊर्णायुः ।
२. शङ्खः, षण्ढ इत्यादौ तु बहुलवचनात् सिद्धम् । ३. अत इत्येव ।

१६. **पूर्वादिभ्यो नवभ्यो वा ।** पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। परस्मात्, परात्। परस्मिन्, परे। एवमवरादयः सप्त।

१७. **जसः शी[1]।** सर्वे। विश्वे। ये। के। ते।

१८. **औङ[2] आपः।** रमे। खट्वे। बहुराजे। कारीषगन्ध्ये।

१९. **नपुंसकाच्च।** ज्ञाने। कुण्डे। दधिनी। मधुनी।

२०. **जश्शसोः[3] शिः।** ज्ञानानि २। कुण्डानि २। दधीनि २। मधूनि २।

२१. **अष्टाभ्य[4] औश्।** अष्टौ २। नेह :- अष्ट २। तदन्तेऽपि परमाष्टौ।

२२. **षड्भ्यो लुक्।** कति। षट्, षड्। षट्, षड्। पञ्च २। सप्त २। नव २। दश २। षट्प्रधानात्तदन्तादपि। परमषट्। उत्तमषट्। उपसर्जनात्तु न :- प्रियषषः। प्रियपञ्चानः।

२३. **स्वमोर्नपुंसकात्।** दधि २। मधु २। वारि २। तत्, तद्।

२४. **अतोऽम्।** ज्ञानम् २। कुण्डम् २। वनम् २।

२५. **अद्ड् डतरादिभ्यः पञ्चभ्यः।** कतरत् २। कतमत् २। अन्यत् २। अन्यतरत् २। इतरत् २ * एकतरात्प्रतिषेधो वक्तव्यः * एकतरम्।

२६. **नेतराच्छन्दसि।** वार्त्रघ्नमितरम्। लोके तु, इतरत्काष्ठम्।

२७. **युष्मदस्मद्भ्यां ङसोऽश्[5]।** तव। मम।

२८. **ङे[6] प्रथमयोरम्।** तुभ्यम्। मह्यम्। त्वम्। अहम्। युवाम्। आवाम्। यूयम्। वयम्। त्वाम्। माम्। युवाम्। आवाम्।

२९. **शसो[7] न।** युष्मान्। अस्मान्।

३०. **भ्यसो[8] भ्यम्।** युष्मभ्यं दीयते। अस्मभ्यम्।

३१. **पञ्चम्या अत्।** युष्मत्। अस्मत्।

---

१. दीर्घोच्चारणमुत्तरार्थम्। त्रपुणी। २. औङित्यौकारविभक्तेः संज्ञा। ३. जसा सहचरितस्य शसो ग्रहणान्नेह :- कुण्डशो ददाति। ४. कृताकारोऽष्टन्-शब्दो गृह्यते। इह कृतात्वनिर्देशो ज्ञापयति अष्टन आ विभक्तावित्यात्वविकल्पम्। ५. शित्करणं सर्वादेशार्थम्। ६. ङे इति लुप्तषष्ठ्यन्तम्। प्रथमयोरित्यस्य प्रथमा-द्वितीयाविभक्त्योरित्यर्थः। ७. शसः सकारस्य नकारादेश इत्यर्थः। ८. भ्यसो भ्यम्, अभ्यम् वादेशः। आद्यः शेषे लोपस्यान्त्यलोप एव। तत्राङ्गवृत्तपरिभाषया एत्वं न। अभ्यन्तु पक्षद्वयेऽपि साधुः।

३२. एकवचनस्य च । त्वत् । मत् ।

३३. साम आकम् । युष्माकम् । अस्माकम् ।

३४. आत औ णलः । पपौ । तस्थौ । जग्लौ । मम्लौ ।

३५. तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्[2] । भवतात् , भवतु । जीवतात् , जीवतु । भवतात् , भव । जीवतात् , जीव ।

३६. विदेः शतुर्वसुः[3] । विद्वान् , विद्वांसौ, विद्वांसः । विदुषी । विदन् , विदन्तौ, विदन्तः ।

३७. समासेऽनञ्पूर्वे क्त्वो ल्यप् । प्रकृत्य । प्रहृत्य । नेह :– अकृत्वा । पर्युदासाश्रयणान्नेह[4] :- परमकृत्वा ।

३८. क्त्वापि छन्दसि । यजमानं परिधापयित्वा ।

३९. सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः । ऋजवः सन्तु पन्थाः[5] । परमे व्योमन्[6] । धीती[7] मती सुष्टुती । या सुरथा[8] रथीतमोभा देवा दिविस्पृशा । अश्विना । नताद्[9] ब्राह्मणम् । या[10] देव विद्म ता त्वा । न युष्मे[11] वाजबन्धवः । अस्मे[11] इन्द्राबृहस्पती । उरुया[12] । धृष्णुया[12] । नाभा[13] पृथिव्याः । ता अनुष्ठ्योच्यावयतात्[14] । साधुया[15] । वसन्ता[16] यजेत । * इयाडियाजीकाराणामुपसंख्यानम् * उर्विया[17] । दार्विया[17] । सुक्षेत्रिया[18] । हृति न शुष्कं सरसी[19] शयानम् । * आड्याजयारामुपसंख्यानम् * प्रबाहवा[20] सिसृतम् । स्वप्नया[21] । स नः सिन्धुमिव नावया[22] ।

---

१. आगतसुट्कस्याम इत्यर्थः । भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः । २. अनेकाल्त्वात्सर्वादेशः । ङिच्चेत्यपवादोऽपि अनन्यार्थङित्सु चरितार्थत्वात्परत्वात्सर्वादेशेनेह बाध्यते । एतद् ङित्वन्तु गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया न व्यर्थम् । ३. अन्यतरस्यामिति वर्त्तते । ४. ततश्च सादृश्यान्नञ्भिन्ने तत्सदृशाव्ययपूर्व इत्यर्थः । ५. पन्थान इति प्राप्ते सुः । ६. व्योमनि इति प्राप्ते ङेर्लुक् । ७. धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णदीर्घः । ८. इह औ-इत्यस्य आकारादेशः । ९. नतमिति प्राप्ते आत् । १०. यमिति प्राप्ते । ११. युष्मासु, अस्मभ्यमिति प्राप्ते शे । १२. उरुणा धृष्णुना इति प्राप्ते या । १३. नाभाविति प्राप्ते डा । १४. अनुष्ठानमनुष्ठा । व्यवस्थावदङ् । आङो ड्या । १५. साध्विति प्राप्ते याच् । १६. वसन्ते-इति प्राप्ते आल् । १७. उरुणा दारुणेति प्राप्ते इया । १८. सुक्षेत्रिणेति प्राप्ते डियाच् । १९. ङेरीकारः । २०. प्रबाहुनेति प्राप्ते आङादेशः । घेर्ङितीति गुणः । २१. स्वप्नेनेति प्राप्ते अयाच् । २२. नावेति प्राप्ते अयार् ।

४०. अमो मश्[1] । वधीं वृत्रम् ।

४१. लोपस्त आत्मनेपदेषु । देवा अदुह[2]। दक्षिणतः शये[3] ।

४२. ध्वमो ध्वात् । अन्तरेवोष्माणं वारयध्वात्[4] ।

४३. यजध्वैनमिति च । यजध्वैनं[5] प्रियमेधाः ।

४४. तस्य तात् । गात्रमस्या नूनं कृणुतात् । कृणुतेति लोके । सूर्यं चक्षुर्गमयतात् । गमयतेति लोके ।

४५. तप्तनप्तनथनाश्च । शृणोत[6] ग्रावाणः । सुनोतन पचत ब्रह्मवाहसे । दधातन द्रविणं चित्रमस्मै । मरुतस्तज्जुजुष्टन[7] । विश्वेदेवासो मरुतो यति ष्ठन[8] ।

४६. इदन्तो मसि । नभो भरन्त एमसि[9] । त्वमस्माकं तव स्मसि[10] ।

४७. क्त्वो यक् । दिवं सुपर्णो गत्वाय ।

४८. इष्ट्वीनमिति च । इष्ट्वीनं[11] देवान् ।

४९. स्नात्व्यादयश्च । स्विन्नः स्नात्वी मलादिव ।

५०. आज्जसेरसुक् । देवासः । ब्राह्मणासः ।

५१. अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । * अश्ववृषयोर्मैथुनेच्छायाम् * अश्वस्यति वडवा । वृषस्यति गौः । * क्षीरलवणयोर्लालसायाम्[12] * क्षीरस्यति बालः । लवणस्यति उष्ट्रः । * सर्वप्रातिपदिकानां लालसायां क्यचि सुगसुकौ * दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति ।

५२. आमि सर्वनाम्नः सुट्[13] । सर्वेषाम् । विश्वेषाम् । येषाम् । तेषाम् । यासाम् । तासाम् । आदित्येव । नेह :– भवताम् ।

५३. त्रेस्त्रयः । त्रयाणाम् ।

---

१. अकार उच्चारणार्थः । शित्त्वं सर्वादेशार्थम् । अस्तिसिच इति ईट् । २. अदुहतेति प्राप्ते । ३. शेते इति प्राप्ते । ४. वारयध्वमिति प्राप्ते । ५. यजध्वमेनमिति स्थाने । ६. शृणुतेति प्राप्ते तप् । ७. जुषध्वमिति प्राप्ते । व्यत्ययेन परस्मैपदं श्लुश्च । ८. यत्संख्याकाः स्थेत्यर्थः । छान्दसो डतिः । अस्तेस्तस्य थन् । ९. इम इति प्राप्ते । १०. स्म इति प्राप्ते । ११. इष्ट्वेति प्राप्ते । १२. तृष्णातिरेको लालसा । १३. आदिति वर्त्तते । आमिति षष्ठीबहुवचनम्, न तु ङेराम् ।

५४. ह्रस्वनद्यापो नुट् । रामाणाम् । हरीणाम् । वायूनाम् । कर्त्तृणाम् । गौरीणाम् । नदीनाम् । लक्ष्मीणाम् । ब्रह्मबन्धूनाम् । रमाणाम् ।

५५. षट्चतुर्भ्यश्च । षण्णाम् । पञ्चानाम् । सप्तानाम् । चतुर्णाम् । बहुवचननिर्देशात्संख्याप्रधानस्य ग्रहणम् । परमषण्णाम् । नेह :– प्रियषषाम् । प्रियचतुराम् ।

५६. श्रीग्रामण्योश्छन्दसि । श्रीणामुदारो धरुणो रयीणाम् । सूतग्रामणीनाम् ।

५७. गोः पादान्ते । विद्मा हि त्वा गोपतिं शूर गोनाम् । नेह :- गवां शता पृक्षयामेषु । पादान्तेऽपि क्वचिन्न[1] । विराजं गोपतिं गवाम् ।

५८. इदितो नुम् धातोः । स्कुदि–स्कुन्दते । कुडि–कुण्डते । नदि–नन्दति ।

५९. शे मुचादीनाम्[2] । मुञ्चति, मुञ्चते । लुम्पति, लुम्पते । विन्दति, विन्दते । लिम्पति, लिम्पते । सिञ्चति, सिञ्चते । कृन्तति । खिन्दति । पिंशति । * शे तृम्फादीनां[3] नुम् वाच्यः * तृम्फति । दृम्फति । गुम्फति । उम्भति । शुम्भति ।

६०. मस्जिनशोर्झलि । मङ्क्ता । मङ्क्तुम् । मङ्क्तव्यम् । नंष्टा । नंष्टुम् । नंष्टव्यम् ।

६१. रधिजभोरचि । रन्धयति । रन्धकः । रन्धः । जम्भयति । जम्भकः । जम्भः । नेह :- रद्धा । जभ्यम् ।

६२. नेट्यलिटि रधेः । रधिता । रधितुम् । रधितव्यम् । लिटि तु, ररन्धिव । ररन्धिम ।

६३. रभेरशब्लिटोः । आरम्भयति । आरम्भकः । आरम्भः । नेह :- आरभते । आरेभे ।

६४. लभेश्च[4] । लम्भयति । लम्भकः । लम्भः । नेह :- लभते । लेभे ।

६५. आङो यि । आलम्भ्यो गौः । आलम्भ्या वडवा । नेह :– लभ्यः ।

---

१. छन्दसि सर्वेषां वैकल्पिकत्वात् । २. मुच्-लुप्-विद्-लिप्-सिच्-खिद्-पिशो मुचादयः । ३. आदिशब्दः प्रकारे तेन येऽत्र नकारानुषक्तास्त एव गृह्यन्ते । नेह :– तृफति । दृफति । ४. पृथग्योगकरणमुत्तरार्थम् ।

६६. उपात्प्रशंसायाम् । उपलम्भ्यः साधुः । उपलम्भ्या विद्या । नेह :- उपलब्धुं शक्य उपलभ्यः ।

६७. उपसर्गात्खल्घञोः । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । प्रलम्भः ।

६८. न सुदुर्भ्यां केवलाभ्याम् । सुलभम् । दुर्लभम् । सुलाभः । दुर्लाभः ।

६९. विभाषा चिण्णमुलोः । अलम्भि, अलाभि । लम्भम् २, लाभम् २ । व्यवस्थितविभाषेयम् । अनुपसृष्टस्य विकल्पः । उपसृष्टस्य नित्यम् । प्रालम्भि । प्रलम्भम् २ ।

७०. उगिदचां सर्वनामस्थानेऽधातोः । भवतु-भवान्, भवन्तौ, भवन्तः । श्रेयान्, श्रेयांसौ, श्रेयांसः । पचन्, पचन्तौ, पचन्तः । प्राञ्चौ, प्राञ्चः । नेह :- दृषत्, दृषदौ । भवतः[1] । श्रेयसः[1] ।

७१. युजेरसमासे । युङ्, युञ्जौ, युञ्जः । नेह :- सुयुक् । अश्वयुक् । युजेरितीकारनिर्देशाद्युज समाधावित्यस्य न । युज्यते समाधत्त इति युक् ।

७२. नपुंसकस्य झलचः । शकृन्ति । यशांसि । ज्ञानानि । कुण्डानि । वारीणि । मधूनि । श्रेयांसि । भूयांसि । * बहूर्जि नुम्प्रतिषेधः * * अन्त्यात् पूर्वो वा नुम् * बहूर्जि । बहूर्ञ्जि[2] ।

७३. इकोऽचि[3] विभक्तौ । वारिणी । वारिणे । मधुनी । मधुने । नेह :- वारिभ्याम् । वारिभिः ।

७४. तृतीयादिषु भाषितपुंस्कं[4] पुंवद् गालवस्य । अनादये, अनादिने । अनादेः, अनादिनः । ग्रामण्या, ग्रामणिना । ग्रामण्ये, ग्रामणिने । ग्रामण्यः, ग्रामणिनः । नेह :- पीलुर्वृक्षस्तत्फलं पीलु तस्मै[5] पीलुने ।

७५. अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । अस्थ्ना, अस्थ्ने । दध्ना, दध्ने । सक्थ्ना, सक्थ्ने । अक्ष्णा, अक्ष्णे । तृतीयादिष्वेव । नेह :- अस्थिनी । दधिनी । अच्येव । नेह :- अस्थिभ्याम् । दधिभ्याम् ।

---

१. शस्येते । २. रजजानां संयोगः । ३. इदमेवाज्ग्रहणं ज्ञापकं न लुमतेति निषेधोऽनित्य इति । तेन हे वारे, हे वारि । हे त्रपो, हे त्रपु इत्यादि । ४. तुल्ये प्रवृत्तिनिमित्त एवेदम् । ५. अर्थभेदादित्यर्थः ।

७६. छन्दस्यपि दृश्यते । इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः ।

७७. ई च द्विवचने । अक्षीभ्यां ते नासिकाभ्याम् ।

७८. नाभ्यस्ताच्छतुः[1] । ददत् , ददतौ, ददतः । दधत् । जक्षत् । जाग्रत् । दरिद्रत् । शासत् । चकासत् ।

७९. वा नपुंसकस्य । ददति, ददन्ति । दधति, दधन्ति । जक्षति , जक्षन्ति । जाग्रति, जाग्रन्ति कुलानि ।

८०. आच्छीनद्योर्नुम् । तुदती तुदन्ती, वा कुले । तुदती, तुदन्ती वा ब्राह्मणी । याती, यान्ती वा कुले । याती, यान्ती वा ब्राह्मणी । नेह :- अदती । घ्नती । लुनती । पुनती । कुर्वती । सुन्वती ।

८१. शप्श्यनोर्नित्यम् । पचन्ती कुले । पचन्ती ब्राह्मणी । दीव्यन्ती कुले । दीव्यन्ती ब्राह्मणी । सीव्यन्ती ।

८२. सावनडुहः । अनड्वान् । हे अनड्वन् ।

८३. दृक्स्ववस्स्वतवसां छन्दसि । कीदृङिन्द्रः । स्ववान् । स्वतवान् ।

८४. दिव[2] औत् । द्यौः । सुद्यौः । नेह :- अक्षद्यूः ।

८५. पथिमथ्यृभुक्षामात्[3] । पन्थाः । मन्थाः । ऋभुक्षाः ।

८६. इतोऽत् सर्वनामस्थाने । पन्थाः, पन्थानौ, पन्थानः । पन्थानम् , पन्थानौ । मन्थाः, मन्थानौ, मन्थानः । मन्थानम्, मन्थानौ । ऋभुक्षाः , ऋभुक्षाणौ, ऋभुक्षाणः । ऋभुक्षाणम् , ऋभुक्षाणौ ।

८७. थो न्थः । पन्थाः, पन्थानौ, पन्थानः । मन्थाः, मन्थानौ, मन्थानः ।

८८. भस्य[4] टेर्लोपः । पथः, पथा, पथे । मथः, मथा, मथे । ऋभुक्षः, ऋभुक्षा, ऋभुक्षे ।

---

१. नुम्-ग्रहणमनुवर्त्तते । २. दिविति प्रातिपदिकमिह गृह्यते निरनुबन्धकम् । धातुस्तु सानुबन्धको न गृह्यते । ३. भाव्यमानेन सवर्णानां न ग्रहणमिति नानुनासिक आकारः । ४. इह सर्वनामस्थानमुत्तरत्र सम्बन्धार्थमनुवर्त्तमानमपि भस्येति विरोधात् न सम्बध्यते ।

८९. पुंसोऽसुङ्[1] । पुमान्, पुमांसौ, पुमांसः । पुमांसम्, पुमांसौ । नेह :– पुंसः, पुंसा ।

९०. गोतो णित्[2] । गौः, गावौ, गावः । * ओतो णिदिति वाच्यम् * * विहितविशेषणञ्च * द्यौः, द्यावौ, द्यावः । सुद्यौः, सुद्यावौ, सुद्यावः । नेह :– हे भानो । भानवः ।

९१. णलुत्तमो वा । अहं चकर, चकार वा । पपच, पपाच ।

९२. सख्युरसम्बुद्धौ । सखायौ, सखायः । नेह :– हे सखे ।

९३. अनङ् सौ । सखा । नेह :– हे सखे ।

९४. ऋदुशनस्पुरुदंशोऽनेहसाञ्च । कर्त्ता । माता । पिता । उशना । पुरुदंशा । अनेहा । नेह :– हे कर्त्तः । हे मातः । हे पितः । हे पुरुदंशः । हे अनेहः । * उशनसः सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः * हे उशन, हे उशनन्, हे उशनः ।

९५. तृज्वत्क्रोष्टुः । क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । क्रोष्टारम्, क्रोष्टारौ । नेह :– क्रोष्टून् । हे क्रोष्टो ।

९६. स्त्रियाञ्च । क्रोष्ट्री । क्रोष्ट्रीभ्याम् । क्रोष्ट्रीभिः ।

९७ विभाषा तृतीयादिष्वचि । क्रोष्ट्रा, क्रोष्टुना । क्रोष्ट्रे, क्रोष्टवे । नेह :– क्रोष्टून् । * नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन * क्रोष्टूनाम् ।

९८. चतुरनडुहोरामुदात्तः[3] । चत्वारः । अनड्वान्, अनड्वाहौ, अनड्वाहः । अनड्वाहम्, अनड्वाहौ । प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः । प्रियचत्वारम्, प्रियचत्वारौ । नेह :– अनडुहः । चतुरः ।

९९. अम् सम्बुद्धौ । हे अनड्वन् । हे प्रियचत्वः ।

१००. ऋत इद्धातोः । किरति । गिरति । विस्तीर्णम् । नेह :– पितॄणाम् ।

१०१. उपधायाश्च । कीर्त्तयति[4], कीर्त्तयतः, कीर्त्तयन्ति ।

---

१. सर्वनामस्थान इति वर्त्तते । २. इहार्थवशात्सर्वनामस्थानमिति विपरिणामः । ३. सर्वनामस्थान इत्यनुवर्त्तते । ४. कृत संशब्दने । रपरत्वम् । उपधायाञ्चेति दीर्घः ।

१०२. उदोष्ठ्यपूर्वस्य[1]। पिपूर्त्तः। पूर्त्तः। पुपूर्षति। मुमूर्षति। * इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन * तरति। आस्तरणम्। निगरणम्। आस्तारकः। निगारकः।

१०३. बहुलं छन्दसि। ततुरिः। जगुरिः पराचैः। पपुरिः।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते सप्तमाध्यायस्य प्रथमपादः समाप्तः।



१. आङ्गमहनजन इति किः, लिड्वद्भावश्च। अनौष्ठ्यपूर्वस्यापि विधानार्थं सूत्रम्।

# अथ सप्तमाध्यायस्य द्वितीयः पादः ।



१. सिचि वृद्धिः परस्मैपदेषु[1] । अचैषीत् । अनैषीत । अवैषीत् । अकार्षीत् । अलावीत् । नेह :– अचेष्ट । अनेष्ट ।

२. अतो ल्रान्तस्य । मा भवानालीत् । अज्वालीत् । अत्सारीत् ।

३. वदव्रजहलन्तस्याचः[2] । अवादीत् । अव्राजीत । अपाक्षीत् । अभैत्सीत् । अरौत्सीत् । अभाङ्क्षीत् ।

४. नेटि । मा भवानतीत् । अदेवीत । असेवीत् । अमोषीत् ।

५. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । अग्रहीत् । अक्रमीत् , अवमीत् । अव्ययीत् । अक्षणीत् । अश्वसीत् । अजागरीत् । ऊनयीत[3] । अश्वयीत् । अलगीत् ।

६. ऊर्णोतेर्विभाषा । और्णावीत् , और्णवीत् , और्णुवीत्[4] ।

७. अतो हलादेर्लघोः । अखादीत् , अखदीत् । अकाणीत् , अकणीत् । नेह :– अदेवीत् । मा भवानटीत् । मा भवानशीत । अतक्षीत् । अरक्षीत् ।

८. नेड् वशि कृति । ईश्वरः । दीप्तः । भस्म । याच्ञा । सुशर्मा । प्रातरित्वा ।

९. तितुत्रतथसिसुसरकसेषु च । तन्तिः[5], दीप्तिः[6] । सक्तुः । पत्त्रम् , तन्त्रम् । हस्तः, पोतः । कुष्ठम् । कुक्षिः । इक्षुः । अक्षरम् । शल्कः । वत्सः । * तितुत्रेष्वग्रहादीनामिति वक्तव्यम् * निगृहीतिः । निपठितिः ।

---

१. इको गुणवृद्धी इतीक्पदोपस्थित्याङ्गस्य विशेषणतया तदन्तविधौ इगन्ताङ्गस्येत्यर्थः । २. हल्ग्रहणं हल्समुदायपरम् । ३. इह नोनयतीति श्लेश्वङ् न । छान्दसमेतत । अत एवाऽपि न । ४. विभाषोर्णोरिति ङित्वपक्ष इदम् । ५. क्तिच् । ६. क्तिन् ।

१०. एकाच उपदेशेऽनुदात्तात् ।

ऊदृदन्तैर्यौति-रु-क्ष्णु-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः ।
वृङ्-वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥
शक्लृ-पच्-मुच्-रिच्-वच्-विच्-सिच्-प्रच्छि-त्यज-निजिर्-भजः ।
भञ्ज-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्-रञ्ज्-विजिर्-स्वञ्जि-सञ्ज्-सृजः ॥२॥
अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः पद्य-भिद्-विद्यतिर्विनद् ।
शद्-सदी स्विद्यति स्कन्दि-हदी क्रुध्-क्षुधि-बुध्यती ॥३॥
बन्धिर्युधि-रुधी राधि-व्यध्-शुधः साधिसिद्ध्यती ।
मन्य-हन्नाप्-क्षिप्-छुपि-तप्-तिपस्तृप्यति-दृप्यती ॥४॥
लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यभ्-रभ्-लभ्-गम्-नम्-यमो रमिः ।
क्रुशिर्दंशि-दिशी दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशः कृषिः ॥५॥
त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो घसिः ।
वसतिर्दह्-दिहि-दुहो नह्-मिह्-रुह्-लिह्-वहिस्तथा ॥६॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥७॥
तृप्-दृपी तौ वारयितुं श्यना निर्देश आदृतः ।
स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ॥८॥
वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ।
णिजिर्-विजिर्-शक्लृ-इति सानुबन्धा अमी तथा ॥९॥
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥१०॥
रञ्जि-मस्जी अदि-पदी तुद क्षुध् शुषि-पुषी शिषिः ।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः ॥११॥

एधांचकृषे । एधांचकृवहे । एधांचकृमहे । कर्त्ता । हर्त्ता । दाता । नेता । चेता स्तोता । नेह :– भविता, लविता । तरिता, तरीता । यविता । रविता । क्ष्णविता । शयिता । स्नविता । नविता । क्षविता । श्वयिता । डयिता । श्रयिता । वरिता, वरीता ।

११. श्र्युकः किति । श्रित्वा । श्रितः । श्रितवान् । भूत्वा । भूतः । भूतवान् । युत्वा । युतः । युतवान् । वृत्वा । वृतः । वृतवान् । तीर्त्वा । तीर्णः ।

---

१. एवमुदात्ता अनुदात्ताश्च विज्ञेयाः ।

तीर्णवान्। भूष्णुः[१]। नेह :— श्रयिता, श्रयितुम्, श्रयितव्यम्।

१२. सनि ग्रहगुहोश्च। जिघृक्षति। जुघुक्षति। बुभूषति। लुलूषति।

१३. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि[२]। चकृव, चकृम। ससृव, ससृम। बभृव, बभृम। ववृव, ववृम। ववृवहे, ववृमहे। तुष्टुव, तुष्टुम। दुद्रुव, दुद्रुम। सुस्रुव, सुस्रुम। शुश्रुव, शुश्रुम। * कृञोऽसुट इति वक्तव्यम् * संचस्करिथ, संचस्करिव, संचस्करिम।

१४. श्वीदितो निष्ठायाम्। शूनः, शूनवान्। ओलजी—लग्नः, लग्नवान्। ओविजी—उद्विग्नः, उद्विग्नवान्। दीपी—दीप्तः, दीप्तवान्।

१५. यस्य विभाषा। विधूतः। विधूतवान्। समक्तः। उदक्तमुदकम्। गूढः, गूढवान्। वृद्धः, वृद्धवान्।

१६. आदितश्च। मिन्नः, मिन्नवान्। क्ष्विण्णः, क्ष्विण्णवान्। स्विन्नः। आश्वस्तः[३]। वान्तः।

१७. विभाषा भावादिकर्मणोः। प्रस्वेदितं प्रस्विन्नं वा तेन। प्रस्वेदितः, प्रस्विन्नो वा चैत्रः। प्रमिन्नं प्रमेदितं वा तेन। प्रमिन्नः, प्रमेदितः।

१८. क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु। क्षुब्धो मन्थः। स्वान्तं मनः। ध्वान्तं तमः। लग्नं[४] सक्तम्। म्लिष्टमविस्पष्टम्[५]। विरिब्धः[५] स्वरः। फाण्टः कषायविशेषः[६]। बाढम् भृशम्। अन्यत्र तु :— क्षुभितम्[७]। स्वनितम्। ध्वनितम्। लगितम्। म्लेच्छितम्। विरेभितम्। फणितम्। बाहितम्।

---

१. गकारस्य चर्त्वेन ककारं प्रश्लिष्य गित्यपि इण्निषेधं वाञ्छन्ति। ग्लाजिस्थश्च ग्स्नुरित्यत्र चाद्भुव इति ग्स्नुः। २. क्रादीनां चतुर्णां ग्रहणं नियमार्थम्। प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति। ततश्चतुर्णां ग्रहणं थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निवृत्त्यर्थम्। ३. चकारोऽनुक्तसमुच्चयार्थः। ४. निष्ठानत्वमपि निपातनात्। ५. म्लेच्छ-रेभृ-अनयोरुपधाया इत्वमपि। ६. माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह। ७. क्षुब्धो राजेति तु आगमशास्त्रस्यानित्यत्वात्।

१९. धृषिशसी वैयात्ये[1]। धृष्टः प्रगल्भः। विशस्तः। अन्यत्र धर्षितः। विशसितः।

२०. दृढः स्थूलबलयोः। दृढः स्थूलो बलवान्वा। अन्यत्र दृहितम्। दृंहितम्।

२१. प्रभौ परिवृढः। परिवृढः कुटुम्बी। अन्यत्र परिवृहितम्, परिवृंहितम्।

२२. कृच्छ्रगहनयोः कषः। कष्टं दुःखं तत्कारणं च। कष्टो मोहः। कष्टं शास्त्रम्।

२३. घुषिरविशब्दने। घुष्टा रज्जुः। नेह :– घुषितं वाक्यम्।

२४. अर्देः सन्निविभ्यः। समर्णः। न्यर्णः। व्यर्णः। नेह :– अर्दितः।

२५. अभेश्चाविदूर्ये[2]। अभ्यर्णम्।

२६. णेरध्ययने[3] वृत्तम्। वृत्तं छन्दश्छात्रेण। वृत्तं पारायणम्।

२७. वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः[4]। दान्तः, दमितः। शान्तः, शमितः। पूर्णः, पूरितः। दस्तः, दासितः। स्पष्टः, स्पाशितः। छन्नः, छादितः। ज्ञप्तः, ज्ञपितः।

२८. रुष्यमत्वरसंघुषास्वनाम्। रुष्टः, रुषितः। आन्तः[5], अमितः। तूर्णः, त्वरितः। संघुष्टः, संघुषितः। आस्वान्तः, आस्वनितः।

२९. हृषेर्लोमसु। हृष्टं हृषितं वा लोम। * विस्मितप्रतिघातयोश्च * हृष्टो हृषितो[6] वा मैत्रः।

३०. अपचितश्च। अपचितः, अपचायितः। * क्तिनि नित्यमिति वाच्यम् * अपचितिः।

३१. हु ह्वरेश्छन्दसि। अहुतमसि हविर्धानम्।

३२. अपरिह्वृताश्च। अपरिह्वृताः सनुयाम वाजम्।

३३. सोमे ह्वरितः[7]। मा नः सोमो ह्वरितः।

---

१. वियातः प्रगल्भः। तस्य भावो वैयात्यम्। २. नातिदूरं नासन्नं वा। ३. ण्यन्ताद् वृतेर्निष्ठायामित्यर्थः। ४. णेरिति वर्त्तते। ५. अनुनासिकस्य क्विझलोरिति दीर्घः। ६. विस्मितः प्रतिहतो वेत्यर्थः। ७. इड्गुणौ निपात्येते।

३४. ग्रसित[1]स्कभितस्तभितोत्तभित[2]चत्तविकस्ता[3] विशस्तृशंस्तृशास्तृ[4]-तरुतृ[5]तरूतृवरुतृवरूतृवरूत्री[6]रुज्ज्वलिति क्षरिति वमित्यमितीति च । [7]युवं शचीभिर्ग्रसितामुञ्चतम् । विष्कभिते अजरे । येन स्वः स्तभितम् । सत्येनोत्तभिता भूमिः। चत्ता इतश्चत्तामुतः । त्रिधा ह श्यावमश्विना विकस्तम । उत्तानाया हृदयं यद्विकस्तम् । एकस्त्वष्टुरश्वस्याविशस्ता । ग्रावग्राभ उत शंस्ता । प्रशास्ता पोता । तरुतारं रथानाम् । तरूतारम् । वरुतारम् , वरूतारम् । वरूत्रीभिः सुशरणो नो अस्तु । अग्निरुज्ज्वलिति । स्तोकं क्षरिति । स्तोमं क्षमिति । यः सोमं वमिति । अभ्यमिति वरुणः । लोके तु, ग्रस्तस्कब्धस्तब्धोत्तब्धचतितविकसिताः । विशसिता । शंसिता । शासिता । तरिता, तरीता । वरिता, वरीता । उज्ज्वलति । क्षरति । क्षमति । वमति । अमति ।

३५. आर्धधातुकस्येड् वलादेः । भविता । बभूविथ । भवितुम् । लविता। पविता । नेह :- भव्यम् । पव्यम् । भवनीयम् । लवनीयम् ।

३६. स्नुक्रमोरनात्मनेपदनिमित्ते[8] । क्रमिता । क्रमिष्यति । अक्रमीत् । स्नविता । स्नविष्यति । अस्नावीत् । नेह :– प्रक्रन्ता[9] । प्रक्रंस्यते । विक्रन्ता । विक्रंस्यते । प्रस्नोषीष्ट[10] । प्रास्नोष्ट । प्रस्नोष्यते । * क्रमेः कर्त्तर्य्यात्मनेपद-विषयात्कृत इण्निषेधो वाच्यः * प्रक्रन्ता । उपक्रन्ता । नेह :- प्रक्रमितव्यम् । उपक्रमितव्यम् ।

३७. ग्रहोऽलिटि दीर्घः । ग्रहीता । ग्रहीतुम् । ग्रहीतव्यम् । गृहीतम् । नेह :- जग्रहिथ । जग्रहिव । प्रकृतस्यैवेटो दीर्घत्वम् । नेह :- ग्राहिता[11] । ग्राहिष्यते ।

---

१. इडादिमत्रये उदित्वाद्वेट्कत्वादिण्निषेधे प्राप्ते इण्निपात्यते । २. उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति । ३. क्तस्येडभावः । विकस्ता इति बहुवचननिपातनं बहुत्वापेक्षम् । ४. शसु-शंसु-शासु-एभ्यस्तृच इडभावः । ५. तरतेर्वृङ्वृञोश्च तृच उट् ऊट् वा निपात्येते । ६. अत्र ङीषन्तनिपातनं प्रपञ्चार्थम् । जसि पूर्वसवर्णदीर्घः सौत्रत्वात् । ७. सूत्रे क्षरतीत्यस्यानन्तरं क्षमितीत्यधिकपाठम्मत्वेदमुदाहार्यम् । ८. प्रतिषेधफलमिदं सूत्रम् । ९. प्रपूर्वो विपूर्वश्च क्रम् आत्मनेपदस्य निमित्तम् । प्रोपाभ्यामिति वेः पादविहरण इत्यात्मनेपदविधानात्। १०. भावकर्मणोरित्यात्मनेपदविधानादिह स्नुरात्मनेपदनिमित्तम् । ११. इह कर्मणि प्रत्यये चिण्वदिट् ।

३८. वृतो वा[1]। वरीता, वरिता। प्रावरीता, प्रावरिता। तरीता, तरिता। आस्तरीता, आस्तरिता। अलिटीत्येव। नेह :— ववरिथ। तेरिथ।

३९. न लिङि। वरिषीष्ट। प्रावरिषीष्ट। आस्तरिषीष्ट।

४०. सिचि च परस्मैपदेषु। प्रावारिष्टाम्। प्रावारिषुः। अतारिष्टाम्। अस्तारिष्टाम्। नेह निषेधः :— प्रावरीष्ट, प्रावरिष्ट। वुवूर्षते।

४१. इट् सनि वा। विवरीषति, विवरिषति, वुवूर्षति। विवरीषते, विवरिषते। तितरीषति, तितरिषति, तितीर्षति। आतिस्तिरीषति, आतिस्तिरिषति, आतिस्तीर्षति।

४२. लिङ्सिचोरात्मनेपदेषु। वरिषीष्ट, वृषीष्ट। प्रावरिषीष्ट, प्रावृषीष्ट। आस्तरीषीष्ट, आस्तरिषीष्ट, आस्तीर्षीष्ट। अवरीष्ट, अवरिष्ट, अवृत। प्रावरीष्ट, प्रावरिष्ट, प्रावृत। आस्तरीष्ट, आस्तरिष्ट, आस्तीर्ष्ट।

४३. ऋतश्च संयोगादेः[2]। ध्वरिषीष्ट, ध्वृषीष्ट। स्मरिषीष्ट, स्मृषीष्ट। अध्वरिषाताम्, अध्वृषाताम्। अस्मरिषाताम्, अस्मृषाताम्।

४४. स्वरतिसूतिसूयतिधूञूदितो वा। स्वरिता, स्वर्ता। प्रसविता, प्रसोता। सविता, सोता। धविता, धोता। गाहू—गाहिता, गाढा। गुपू—गोपिता, गोप्ता। * स्वरत्यादेः श्र्युकः कितीति नित्यमिडभावः पूर्वविप्रतिषेधेन * स्वृत्वा। सूत्वा। धूत्वा।

४५. रधादिभ्यश्च[3]। रधिता, रद्धा। नशिता, नंष्टा। तर्पिता, त्रप्ता, तर्प्ता।

४६. निरः कुषः। निष्कोषिता, निष्कोष्टा। निष्कोषितुम्, निष्कोष्टुम्।

४७. इण्निष्ठायाम्[4]। निष्कुषितः। निष्कुषितवान्।

---

१. वृ च ऋृचानयोः समाहारो वृत् तस्माद् वृत इति। वृ-इति वृङ्वृञोर्ग्रहणम्। २. एकाच उपदेश इत्यत उपदेशग्रहणमनुवर्त्य उपदेशे यः संयोगादिरिति व्याख्यानान्नेह :— संस्कृषीष्ट। समस्कृत। ३. रध्-नश्-तृप्-दृप्-द्रुह्-मुह्-स्नुह्-स्निहो रधादयः। ४. आरम्भसामर्थ्यान्नित्यम्। इड्ग्रहणेऽनुवर्त्तमाने पुनरिड्ग्रहणं नित्यत्वार्थम्।

४८. तीषसहलुभरुषरिषः। एषिता, एष्टा। सहिता, सोढा। लोभिता, लोब्धा। रोषिता, रोष्टा, रेषिता, रेष्टा। नेह :– एषिष्यति।

४९. सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। दिदेविषति, दुद्यूषति। सिसेविषति, सुस्यूषति। अर्दिधिषति, ईर्त्सति। बिभ्रज्जिषति, बिभ्रक्षति, बिभर्जिषति, बिभर्क्षति। दिदम्भिषति, धीप्सति, धिप्सति। शिश्रयिषति, शिश्रीषति। सिस्वरिषति, सुस्वूर्षति। यियविषति, युयूषति, ऊर्णुनविषति, ऊर्णुनूषति। बिभरिषति, बुभूर्षति। जिज्ञपयिषति, ज्ञीप्सति। सिसनिषति, सिषासति। * तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः * तितनिषति, तितांसति, तितंसति। पिपतिषति, पित्सति। दिदरिद्रिषति, दिदरिद्रासति।

५०. क्लिशः क्त्वानिष्ठयोः। क्लिशित्वा, क्लिष्ट्वा। क्लिशितः, क्लिष्टः। क्लिशितवान्, क्लिष्टवान्।

५१. पूङश्च। पवित्वा, पूत्वा। पवितः, पूतः। पवितवान्, पूतवान्।

५२. वसतिक्षुधोरिट्[१]। उषित्वा। उषितः। उषितवान्। क्षुधित्वा। क्षुधितः। क्षुधितवान्।

५३. अञ्चेः पूजायाम्। अञ्चित्वा। अञ्चिता गुरवः। नेह :– उदक्तमुदकं कूपात्।

५४. लुभोऽविमोहने। [१]लोभित्वा। लुभितः। नेह :– लुब्धो वृषलः।

५५. जॄव्रश्च्योः क्त्वि[२]। जरीत्वा, जरित्वा। व्रश्चित्वा।

५६. उदितो वा। शमित्वा, शान्त्वा। तमित्वा, तान्त्वा। दमित्वा, दान्त्वा।

५७. सेऽसिचि कृतचृतच्छृदतृदनृतः। कर्तिष्यति, कर्त्स्यति। अकर्तिष्यत्, अकर्त्स्यत्। चिकर्तिषति, चिकृत्सति। चर्तिष्यति, चर्त्स्यति। छर्दिष्यति, छर्त्स्यति। तर्दिष्यति, तर्त्स्यति, नर्तिष्यति, नर्त्स्यति।

५८. गमेरिट् परस्मैपदेषु। गमिष्यति। अगमिष्यत्। जिगमिषति। नेह :– संगंसीष्ट, संगसीष्ट। संगंस्यते। संजिगंसते।

---

१. रलो व्युपधादिति वा कित्त्वम्। २. जॄधातोः श्र्युकः कितीति निषेधे प्राप्ते व्रश्चेरूदित्वाद्विकल्पे प्राप्ते वचनम्।

५९. न वृद्भ्यश्चतुर्भ्यः। वृतु–वृधु–वर्त्स्यति। अवर्त्स्यत्। विवृत्सति। श्रधु–शर्त्स्यति। स्यन्दू–स्यन्त्स्यति। नेह :– वर्तिष्यते। वर्धिष्यते। शर्धिष्यते। स्यन्दिष्यते।

६०. तासि च क्लृपः। कल्प्ता। कल्प्स्यति। अकल्प्स्यत्। चिक्लृप्सति। परस्मैपदेष्वित्येव। नेह :– कल्पितासे[1]। कल्पिष्यते। अकल्पिष्यत।

६१. अचस्तास्वत्थल्यनिटो नित्यम्। ययाथ। चिचेथ। जुहोथ। नेह :– बिभेदिथ। लुलविथ। जघसिथ[2]।

६२. उपदेशेऽत्वतः। पपक्थ। इयष्ठ। शशक्थ। नेह :– रराधिथ।

६३. ऋतो भारद्वाजस्य[3]। सस्मर्थ। जहर्थ। चकर्थ। ऋदन्तादेव थलो नेड् इति। ययिथ। चिचयिथ। पेचिथ। शेकिथ। अयमत्र संग्रहः :–

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्॥१॥

६४. बभूथाततन्थजगृम्भववर्थेति निगमे[4]। विद्या तमुत्सं यत आबभूथ। येनान्तरिक्षमुर्वाततन्थ। जगृम्भाते दक्षिणमिन्द्र हस्तम्। त्वं ज्योतिषा वितमो ववर्थ।

६५. विभाषा सृजिदृशोः। सस्रष्ठ, ससर्जिथ। दद्रष्ठ, ददर्शिथ।

६६. इडत्त्यर्तिव्ययतीनाम्। आदिथ। आरिथ। विव्ययिथ।

६७ वस्वेकाजाद्घसाम्। आदिवान्। आरिवान्। ददिवान्। जक्षिवान्। नेह :– बभूवान्।

६८. विभाषा गमहनविदविशाम्[5]। जग्मिवान्, जगन्वान्। जघ्निवान्, जघन्वान्। विविदिवान्, विविद्वान्। विविशिवान्, विविश्वान्। * दृशेश्च * ददृशिवान्, ददृश्वान्।

---

१. ऊदित्वाद्वेडिति कल्पासे, कल्प्स्यते, अकल्प्स्यतेति पाक्षिकरूपाणि। २. घसेस्तासाद्यभावात्थलि नित्यमिट्। ३. पूर्वेण सिद्धे नियमार्थं सूत्रम्। तेनान्यस्मात्स्यादेव। ४. लोके तु बभूविथ। आतेनिथ। जगृह्मि। ववरिथ। ५. विशिना साहचर्यात्तौदादिकस्य विदो ग्रहणम्। तेन ज्ञानार्थस्यादादिकस्य विविद्वानित्येव।

६६. सनिंससनिवांसम्[1]। अग्नित्वाग्ने सनिंससनिवांसम्। लोके तु सेनिवांसम्।

७०. ऋद्धनोः स्ये। करिष्यति। हरिष्यति। हनिष्यति।

७१. अञ्जेः सिचि। आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः।

७२. स्तुसुधूञ्भ्यः परस्मैपदेषु। अस्तावीत्। असावीत्। अधावीत्। नेह :- अस्तोष्ट। असोष्ट। अधोष्ट, अधविष्ट।

७३. यमरमनमातां सक्च। अयंसीत्, अयंसिष्टाम्, अयंसिषुः। व्यरंसीत्। अनंसीत्। अयासीत्। अलासीत्। परस्मैपदेष्वेव। नेह :- अरंस्त।

७४. स्मिपूङ्रञ्ज्वशां सनि। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते।

७५. किरश्च पञ्चभ्यः। चिकरिषति। जिगरिषति। * अत्रेटो दीर्घो नेष्टः * दिदरिषते। दिधरिषते[2]। पिप्रच्छिषति।

७६. रुदादिभ्यः[3] सार्वधातुके। रोदिति। स्वपिति। श्वसिति। प्राणिति। जक्षिति। वलादेरित्येव। नेह :- रुदन्ति।

७७. ईशः से। ईशिषे। ईशिष्व[4]।

७८. ईडजनोर्ध्वे[5] च। ईडिध्वे। ईडिध्वम्। ईडिषे। ईडिष्व। जनिध्वे[6]। जनिध्वम्। जनिषे। जनिष्व। ईशिध्वे।

७९. लिङः सलोपोऽनन्त्यस्य[7]। कुर्यात्, कुर्याताम्, कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्। नेह :- क्रियास्ताम्। क्रियासुः।

८०. अतो येयः[8]। पचेत, पचेताम्। भवेत, भवेताम्। नेह :- ह्नुयात्।

८१. आतो ङितः। पचेते। पचेथे। पचेताम्। पचेथाम्। एधेते। एधेताम्। एधेथाम्।

८२. आने मुक्। पचमानः। यजमानः।

---

१. सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिड्। एत्वाभ्यासलोपाभावश्च। २. उद्दिधीर्षुरित्यादौ तु भौवादिको धृङ् धृञ् वा। ३. पञ्चभ्य इति वर्तते। ४. एकदेशविकृतस्यानन्यत्वात्। ५. ईशोऽप्यनुवर्त्तनम्। ६. छान्दसमेतत्। तेनेह श्यनो लुक्। उपधालोपाभावश्च। ७. सार्वधातुक इति वर्तते। ८. सार्वधातुकपदानुवृत्तेर्नेह :- चिकीर्ष्यात्।

८३. ईदासः[1]। आसीनः।

८४. अष्टन आ विभक्तौ। अष्टाभिः। अष्टाभ्यः। अष्टानाम्। अष्टासु। अष्टभिः[2]। अष्टभ्यः। अष्टसु। तदन्तस्यापि। प्रियाष्टाभ्याम्[3]।

८५. रायो हलि। राभ्याम्। राभिः। नेह :— रायौ। रायः।

८६. युष्मदस्मदोरनादेशे। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः। युष्मासु। अस्मासु।

८७. द्वितीयायां च। त्वाम्। माम्। युवाम्। आवाम्। युष्मान्। अस्मान्।

८८. प्रथमायाश्च द्विवचने भाषायाम्। युवाम्। आवाम्। नेह :— युवं वस्त्राणि।

८९. योऽचि। त्वया। मया। त्वयि। मयि। युवयोः। आवयोः। नेह :— युवाभ्याम्। आवाभ्याम्।

९०. शेषे लोपः। त्वम्। अहम्। यूयम्। वयम्। तुभ्यम्। मह्यम्। युष्मभ्यम्। अस्मभ्यम्। त्वत्। मत्। युष्मत्। अस्मत्। तव। मम। युष्माकम्। अस्माकम्। त्वं स्त्री। अहं स्त्री[4]।

९१. मपर्य्यन्तस्य। अधिकारोऽयं प्रत्ययोत्तरपदयोश्चेति यावत्।

९२. युवावौ द्विवचने। युवाम्। आवाम्। युवाभ्याम् ३। आवाभ्याम् ३। युवयोः २। आवयोः २। अतियुवाम्। अत्यावाम्। युवामतिक्रान्तमतियुवाम्। आवामतिक्रान्तमत्यावाम्। अतियुवान्। अत्यावान्। अतियुवया। अत्यावया। अतियुवाभिः। अत्यावाभिः। अतियुवभ्यम्। अत्यावभ्यम्। अतियुवत्। अत्यावत्। अतियुवाकम्। अत्यावाकम्। अतियुवयि। अत्यावयि। अतियुवासु। अत्यावासु। युवामतिक्रान्तोऽतित्वम्[5]। आवामतिक्रान्तोऽत्यहम्। अतियूयम्। अतिवयम्। अतितुभ्यम्। अतिमह्यम्। अतितव। अतिमम।

---

१. आदेः परस्य। २. वैकल्पिकश्चेदमष्टन आत्वमष्टनो दीर्घादिति सूत्रे दीर्घग्रहणात्। ३. प्रियाष्टनो राजवत्सर्वं ह्राहावश्चापरं हलि। ४. इह अन्त्यलोपेऽदन्तत्वाट्टाप् प्राप्तो न भवति। सन्निपातपरिभाषाविरोधात्। अलिङ्गे युष्मदस्मदी इति हेतोर्वा। शेषे लोप इत्यत्र मपर्य्यन्ताच्छेषस्य लोप इत्यपि केचिदिच्छन्ति। ५. त्वाहादीनां विषये परत्वात्त एव।

९३. यूयवयौ जसि । यूयम् । वयम् । परमयूयम् । परमवयम् । अति-यूयम् । अतिवयम् ।

९४. त्वाहौ सौ । त्वम् । अहम् । परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ।

९५. तुभ्यमह्यौ ङयि । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम् । अतिमह्यम् ।

९६. तवममौ ङसि । तव । मम । परमतव । परममम । अतितव । अतिमम ।

९७. त्वमावेकवचने । त्वाम् । माम् । त्वया । मया । त्वत् । मत् । त्वयि । मयि । त्वामतिक्रान्तौ, अतित्वाम् । मामतिक्रान्तौ, अतिमाम् । अतित्वान् । अतिमान् । अतित्वाभ्याम् ३ । अतिमाभ्याम् ३ । अतित्वाभिः । अतिमाभिः । इत्यादि ।

९८. प्रत्ययोत्तरपदयोश्च । तवायं त्वदीयः । ममायं मदीयः । त्वत्तरः । मत्तरः । त्वद्यति । मद्यति । त्वद्यते । मद्यते । त्वत्पुत्रः । मत्पुत्रः । त्वन्नाथः । मन्नाथः । एकवचन इत्येव । नेह :– युष्माकमिदम्, युष्मदीयम् । अस्माकमिदम्, अस्मदीयम् । युष्मत्पुत्रः । अस्मत्पुत्रः ।

९९. त्रिचतुरोः स्त्रियां[१] तिसृचतसृ । तिस्रः । चतस्रः । तिसृभिः । चतसृभिः । प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः । प्रियतिसृ, प्रियतिसृणी, प्रियतिसृणि । नेह :– प्रियास्त्रयस्त्रीणि वा यस्याः सा, प्रियत्रिर्मतिवत् । प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः ।

१००. अचि र ऋतः । गुणदीर्घोत्वानामपवादः । तिस्रः, तिस्रः । चतस्रः, चतस्रः । प्रियतिस्रः स्वम् । प्रियचतस्रः स्वम् ।

१०१. जराया जरसन्यतरस्याम् । जरसौ[२] २, जरे २ । जरसः[३] २, जराः २ । जरसम्, जराम् । जरसा, जरया । जरसे, जरायै । जरसः[४] २, जरायाः २ । जरसोः, जरयोः । जरसाम्, जराणाम् । जरसि, जरायाम् । तदन्तस्यापि । निर्जरसौ[५] २,

---

१. स्त्रियामिति त्रिचतुरोर्विशेषणं नाङ्गस्य । श्रुतानुमितयोः श्रुतसम्बन्धस्य बलीयस्त्वात् । २. प्रथमाद्वितीयाद्विवचनयोः । ३. जश्शसोः । ४. ङसिङसोः, ५. एकदेशविकृतस्यानन्यत्वाज् जरशब्दस्य जरस् ।

निर्जरौ २। निर्जरसः, निर्जराः। निर्जरसम्, निर्जरम्। निर्जरसः, निर्जरान्। निर्जरसा, निर्जरेणेत्यादि[1]। अचीत्येव। नेह :– जराभ्याम्। जराभिः। निर्जराभ्याम्। निर्जरैः।

१०२. त्यदादीनामः। स्यः, त्यौ, त्ये। सः, तौ, ते। यः, यौ, ये। एषः, एतौ, एते। अयम्, इमौ, इमे। असौ, अमू, अमी। द्वौ २। द्वाभ्याम् ३। परमसः, परमतौ, परमते। * द्विपर्यन्तानामेवेष्टिः * नेह :– भवान्, भवन्तौ, भवन्तः। त्यत्[2] नाम कश्चित्। अतित्यत्।

१०३. किमः कः[3]। कः, कौ, के, इत्यादि।

१०४. कु तिहोः[4]। कुतः। कुत्र। कुह।

१०५. क्वाति[5]। क्व।

१०६. तदोः सः सावनन्त्ययोः। स्यः। सः। एषः। असौ।

१०७. अदस औ सुलोपश्च। असौ। * औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च * असकौ, असुकः।

१०८. इदमो मः। अयम्। इयम्।

१०९. दश्च[6]। इमम्, इमौ, इमान्।

११०. यः सौ। इयम्।

१११. इदोऽय् पुंसि। अयं ब्राह्मणः।

११२. अनाप्यकः। अनेन। अनयोः। नेह :– इमकेन। इमकयोः।

११३. हलि लोपः[7]। आभ्याम्। एभिः। एभ्यः। एषाम्। एषु।

११४. मृजेर्वृद्धिः। मार्ष्टि। मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्।

---

१. वृत्तिकृता पूर्वविप्रतिषेधेन टाङस्योरिनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन, निर्जरसादिति रूपे न तु निर्जरसा, निर्जरस इति केचिदित्युक्तम्। तत्सर्वं भाष्यविरोधादुपेक्ष्यम्। २. संज्ञोपसर्जनीभूतानां सर्वादौ त्यदादौ चासंनिवेशात्। ३. विभक्ताविति वर्तत एव। ४. इकार उच्चारणार्थः। ५. ओर्गुणनिवृत्त्यर्थं क्वादेशविधानम्। ६. इह साविति न सम्बध्यते उत्तरत्र तद्ग्रहणात्। ७. नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकार इतीद्भागस्य लोपः।

११५. अचो ञ्णिति । निचायः । निष्पावः । कारः । हारः । गौः, गावौ, गावः । सखायौ, सखायः ।

११६. अत उपधायाः । पाकः । यागः । जगाद । पाचकः । पाठकः ।

११७. तद्धितेष्वचामादेः । गार्ग्यः । औपगवः[1] । दाक्षिः । जागतः[1] ।

११८. किति च । नाडायनः । चारायणः । आक्षिकः ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
सप्तमाध्यायस्य द्वितीयपादः समाप्तः ।



१. आदिवृद्धिरन्त्योपधावृद्धो बाधते ।

# अथ सप्तमाध्यायस्य तृतीयपादः ।



१. देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । देविकायां भवमुदकं दाविकम् । दाविकाकूलाः शालयः । शिंशपाया विकारश्चमसः शांशपः । दित्यौह इदं दात्यौहम् । दार्घसत्रम् । श्रेयसि भवं श्रायसम् ।

२. केकयमित्रयुप्रलयानां यादेरियः । केकयस्यापत्यं कैकेयः । मित्रयु-भावेन, मैत्रेयिकया[1] श्लाघते । प्रलयादागतं प्रालेयमुदकम् ।

३. न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् । व्यसने भवं वैयसनम् । वैयाकरणः । सौवश्वः ।

४. द्वारादीनां[2] च । द्वारे नियुक्तो दौवारिकः । दौवारपालम् । स्वरमधिकृत्य कृतो ग्रन्थः, सौवरः । सौवस्तिकः ।

५. न्यग्रोधस्य[3] च केवलस्य । नैयग्रोधश्चमसः । नेह :– न्याग्रोधमूलाः शालयः ।

६. न कर्मव्यतिहारे । व्यावक्रोशी । व्यावहासी । व्यावलेखी ।

७. स्वागतादीनां[4] च । स्वागतमित्याह, स्वागतिकः । स्वाध्वरिकः । व्याडिः । व्याड्गिः । व्यावहारिकः । स्वापतेयम् ।

८. श्वादेरिञि[5] । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । * इकारादाविति वाच्यम् * श्वागणिकः । श्वायूथिकः ।

९. पदान्तस्यान्यतरस्याम् । श्वापदस्येदं श्वापदम् , शौवापदम् ।

१०. उत्तरपदस्य । अस्याधिकारो हनस्तोऽचिण्णलोरित्यतः प्राक् ।

---

१. गोत्रचरणाच्छ्लाघेति वुञ् । २. द्वार-स्वर-स्वाध्याय-व्यल्कश-स्वस्ति-स्वर्-स्फ्यकृत्-स्वादुमृदु-श्वन्-स्वे-ति द्वारादिः । ३. न्यग्रोहयतीति, न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थं सूत्रम् । अव्युत्पत्तिपक्षे तु विध्यर्थम् । ४. स्वागत-स्वध्वर-स्वङ्ग-व्यङ-व्यवहार-स्वपती-ति स्वागतादिः । ५. द्वारादौ स्वशब्देन तदादिविधि-रित्यत्रेदमेव ज्ञापकम् ।

११. अवयवादृतोः। पूर्ववार्षिकम्[1]। पूर्वहैमनः। नेह :– पूर्वासु वर्षासु भवः, पौर्ववर्षिकः[2]।

१२. सुसर्वार्धाज्जनपदस्य। सुपाञ्चालकः[3]। सर्वपाञ्चालकः। अर्धपाञ्चालकः।

१३. दिशोऽमद्राणाम्। पूर्वपाञ्चालकः। दक्षिणपाञ्चालकः। नेह :– पौर्वमद्रः। आपरमद्रः।

१४. प्राचां ग्रामनगराणाम्। पूर्वेषुकामशम्यां भवः, पूर्वैषुकामशमः। अपरैषुकामशमः। पूर्वस्मिन् पाटलिपुत्रे भवः, पूर्वपाटलिपुत्रकः। अपरकान्यकुब्जः।

१५. संख्यायाः संवत्सरसंख्यस्य च। द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा, द्विसांवत्सरिकः। द्विषाष्टिकः। द्विसाप्ततिकः।

१६. वर्षस्याभविष्यति। द्वे वर्षे अधीष्टो भृतो भूतो वा, द्विवार्षिकः। त्रिवार्षिकः। नेह :– त्रीणि वर्षाणि भावीति, त्रैवर्षिकम्। द्वैवर्षिकः।

१७. परिमाणान्तस्यासंज्ञाशाणयोः। द्वाभ्यां निष्काभ्यां क्रीतं द्विनैष्किकम्। द्वौ कुडवौ प्रयोजनमस्य, द्विकौडविकः। परमनैष्किकः।

१८. जे[4] प्रोष्ठपदानाम्। प्रोष्ठपदासु जातः, प्रोष्ठपादः। भाद्रपादः[5]।

१९. हृद्भगसिन्ध्वन्ते पूर्वपदस्य च। सुहृदोऽपत्यं सौहार्दः। सौभाग्यम्। दौर्भाग्यम्। सुभगाया अपत्यं सौभागिनेयः। दौर्भागिनेयः। साक्तुसैन्धवः। पानसैन्धवः।

२०. अनुशतिकादीनां[6] च। अनुशतिकस्येदमानुशातिकम्। अनुहोडेन चरति, आनुहौडिकः। आनुसांवत्सरिकः। पौष्करसादिः। ऐहलौकिकः। पारलौकिकः। सार्वलौकिकः। सार्वपौरुषम्। सार्वभौमः। सौखशायनिकः। पारदारिकः। आधिदैविकम्। आधिभौतिकम्।

२१. देवताद्वन्द्वे च। आग्निमारुतीमनड्वाहीमालभेत। आग्निमारुतं कर्म।

---

१. ऋतोर्वृद्धिमद्विधावयवानामिति तदन्तविधिः। २. इह तु नावयवत्वाभावात्। ३. जनपदवाचित्वाद्वुञ्। ४. जातार्थबोधकं जपदम्। ५. बहुवचननिर्देशात्पर्यायोऽपि गृह्यते। ६. अनुशतिकादिराकृतिगणः।

२२. नेन्द्रस्य परस्य। सौमेन्द्रः। नेह :— ऐन्द्राग्नः।

२३. दीर्घाच्च वरुणस्य। ऐन्द्रावरुणम्। मैत्रावरुणम्। नेह :— आग्निवारुणीमनड्वाहीमालभेत।

२४. प्राचां नगरान्ते। सुह्मनगरे भवः, सौह्मनागरः। पौण्ड्रनागरः। नेह :— माद्रनगरः[1]।

२५. जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्। कुरुजङ्गलेषु भवं कौरुजाङ्गलम्, कौरुजङ्गलम्। वैश्वधैनवम्, वैश्वधेनवम्। सौवर्णवालजः, सौवर्णवलजः।

२६. अर्धात्परिमाणस्य पूर्वस्य तु वा। अर्धद्रोणेन क्रीतम्, आर्धद्रौणिकम्, अर्धद्रौणिकम्। आर्धकौडविकम्, अर्धकौडविकम्।

२७. नातः परस्य। अर्धप्रस्थिकम्, आर्धप्रस्थिकम्। अर्धकंसिकः, आर्धकंसिकः। नेह :— आर्धकौडविकः।

२८. प्रवाहणस्य ढे। प्रावाहणेयः[2], प्रवाहणेयः।

२९. तत्प्रत्ययस्य च। प्रवाहणेयस्यापत्यं प्रावाहणेयिः[3], प्रवाहणेयिः।

३०. नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्। आशौचम्, अशौचम्। आनैश्वर्यम्, अनैश्वर्यम्। आक्षैत्रज्ञम्, अक्षैत्रज्ञम्। आकौशलम्, अकौशलम्। आनैपुणम्, अनैपुणम्।

३१. यथातथयथापुरयोः पर्यायेण। आयथातथ्यम्, अयाथातथ्यम्। आयथापुर्यम्, अयाथापुर्यम्।

३२. हनस्तोऽचिण्णलोः[4]। घातयति। घातकः। घातः। घातं घातम्। नेह :— अघानि। जघान।

३३. आतो युक् चिण्कृतोः। दायिता। अदायि। दायः। दायकः। अधायि। धायः। धायकः।

---

१. मद्रनगरमुदक्षु। २. प्रवाहणस्यापत्यमिति शुभ्रादिभ्यश्चेति ढक्। ३. इञ्प्रत्ययनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः। ४. तद्धितेष्विति तत्सम्बद्धं कितीति च निवृत्तम्। ञ्णितीति च वर्त्तते। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्। तेनेह न :— वार्त्रघ्नम्।

३४. नोदात्तोपदेशस्य मान्तस्यानाचमेः[1] । अशमि । अतमि । अदमि । शमकः । तमकः । दमकः । नेह :–[2] रामकः । यामकः । आचामकः । आचामः । * अनाचमिकमिवमीनामिति वक्तव्यम् * अकामि । अवामि । कामः । वामः ।

३५. जनिवध्योश्च[3] । अजनि । जनकः । जनः । अवधि । वधकः । वधः ।

३६. अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । क्नोपयति । क्ष्मापयति । दापयति । धापयति ।

३७. शाच्छासाह्वाव्यावेपां युक् । शाययति । छाययति । साययति । ह्वाययति । व्याययति । वाययति । पाययति । * पातेर्णौ लुग्वक्तव्यः * पालयति । * धूञ्प्रीञोर्नुग्वक्तव्यः[4] * धूनयति । प्रीणयति ।

३८. वो विधूनने जुक् । वाजयति । नेह :– केशान्वापयति ।

३९. लीलोर्नुग्लुकावन्यतरस्यां[5] स्नेहविपातने । विलीनयति, विलाययति, विलालयति, विलापयति वा घृतम् । नेह :– लोहं विलापयति, विलाययति वा ।

४०. भियो[6] हेतुभये षुक् । मुण्डो भीषयते । जटिलो भीषयते । नेह :– कुञ्चिकयैनं भाययति । मुण्डो भापयते ।

४१. स्फायो वः । स्फावयति ।

४२. शदेरगतौ तः । पुष्पाणि शातयति । नेह :– गाः शादयति[7] गोविन्दः ।

४३. रुहः पोऽन्यतरस्याम् । रोपयति, रोहयति ।

---

१. यदुक्तं तन्नेति वृद्धिर्निषिध्यते । २. कथमुपरम उद्यम इति चेत्, यम उपरमे, अड उद्यमे इति निपातनात्समाधेयम् । ३. वधिः प्रकृत्यन्तरम् न हनादेश एव । तस्य त्वदन्तत्वादेव सिद्धेः । ४. अयं स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्चेति कविरहस्ये । ५. ली-ई-इतीकारप्रश्लेषात्कृतात्वस्य न नुक् । ६. इहापि भी-ई-इतीकारप्रश्लेषादीकारान्तस्यैव भियः षुक् । ७. गमयतीत्यर्थः ।

४४. प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः । कारिका । हारिका । सर्विका । नेह :– शका । नन्दना । कटुका । नौका । राका । कारकः । बहुपरिव्राजका नगरी । * मामकनरकयोरुपसंख्यानम् * मामिका । नरिका[1] । * त्यक्त्यपोश्च[2] * दाक्षिणात्यिका । इहत्यिका ।

४५. न यासयोः । यका । सका । यकाम् । तकाम् । * त्यकनश्च निषेधः * अधित्यका । उपत्यका । * आशिषि वुनश्च न * जीवका । भवका । * उत्तरपदलोपे च * देवदत्तिका, देवका । * क्षिपकादीनां चोपसंख्यानम् * क्षिपका । ध्रुवका । कन्यका । चटका । * तारका ज्योतिषि * तारका । अन्यत्र तारिका । * वर्णका तान्तवे * वर्णका प्रावरणभेदः । अन्यत्र वर्णिका । * वर्तका शकुनौ प्राचाम् * वर्तका । उदीचां तु, वर्तिका । * अष्टका पितृदैवत्ये * अष्टका । नेह :– अष्टिका खारी । * सूतकापुत्रिकावृन्दारकाणां वेति[3] वक्तव्यम् * सूतका, सूतिका । पुत्रका, पुत्रिका । वृन्दारका, वृन्दारिका ।

४६. उदीचामातः स्थाने यकपूर्वायाः । आर्यका, आर्यिका । चटकका, चटकिका । इभ्यका, इभ्यिका । मूषिकका, मूषिकिका । नेह :– सांकाश्ये भवा, सांकाश्यिका[4] । अश्विका * धात्वन्तयकोस्तु नित्यम् * सुनयिका । सुपाकिका ।

४७. भस्त्रैषाजाज्ञाद्वास्वा[5] नञ्पूर्वाणामपि । निर्भस्त्रका[6], निर्भस्त्रिका । अभस्त्रका, अभस्त्रिका । एषका[7], एषिका । अनेषका । परमैषका । अजका, अजिका । अनजका, अनजिका । ज्ञका, ज्ञिका । अज्ञका, अज्ञिका । द्वके[7], द्विके । अद्वके । परमद्वके । स्वका[8], स्विका । निःस्वका, निःस्विका ।

---

१. नरान्कायतीति । २. उदीचामातः स्थान इति विकल्पबाधनार्थमिदम् । ३. इह वा अ इतिच्छेदः । तेन पुत्रिकाशब्दे ङीनः पक्षेऽकारः । अन्यत्रेत्वबाधनार्थमकारस्यैव पक्षेऽकारः । ४. शुभं यातीति शुभंयाः । अज्ञाता शुभंयाः, शुभंयिका । ५. स्वेत्यन्तं लुप्त-षष्ठीकं पदम् । ६. भस्त्राग्रहणमुपसर्जनार्थमन्यस्य तूत्तरसूत्रेण सिद्धम् । ७. एषा-द्वा-एतयोस्तु सपूर्वयोरेत्वम् । अन्तवर्तिनीं विभक्तिमाश्रित्यासुप इति निषेधात् । कृतषत्वनिर्देशान्नेह :— एतिके । एतिकाः । ८. स्वशब्दग्रहणं संज्ञोपसर्जनार्थम् । इह हि आतः स्थान इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम् । न तु द्वयोरसम्भवात् । नाप्यन्येषामव्यभिचारात् । स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः । अर्थान्तरे तु न स्त्री । संज्ञोपसर्जनीभूतस्तु कप्रत्ययान्तत्वाद्भवत्युदाहरणम् ।

४८. अभाषितपुँस्काच्च। खट्वका, खट्विका। गङ्गका, गङ्गिका। नेह :—अज्ञाताखट्वा, अखट्विका[1]। शैषिके कपि तु, विकल्प एव। अखट्वका, अखट्विका।

४९. आदाचार्याणाम्। गङ्गाका। खट्वाका।

५०. ठस्येकः। आक्षिकः। लावणिकः। रैवतिकः।

५१. इसुसुक्तान्तात्कः। सार्पिष्कः। धानुष्कः। नैषादकर्षुकः। मातृकम्। औदश्वित्कः। * दोष उपसंख्यानम् * दौष्कः।

५२. चजोः कु घिण्ण्यतोः। पाकः। त्यागः। रागः। पाक्यम्।

५३. न्यङ्क्वादीनां च। न्युङ्कुः[2]। मद्गुः। भृगुः। श्वपाकः। अनुषङ्गः। मेघः। उपसर्गः। इत्यादि।

५४. हो हन्तेर्ञ्णिन्नेषु। घातयति। घातकः। घातः। घातं घातम्। घ्नन्ति। अघ्नन्।

५५. अभ्यासाच्च। जिघांसति। जघान। जङ्घन्यते।

५६. हेरचङि[3]। प्रजिघाय। प्रजिघीषति। जेघीयते। नेह :—अजीहयत्।

५७. सन्लिटोर्जेः। जिगीषति। जिगाय। नेह :— जेजीयते।

५८. विभाषा चेः। चिकीषति, चिचीषति। चिकाय, चिचाय। नेह :—चेचीयते।

५९. न क्वादेः। कूजः। खर्जः। गर्जः। कूज्यम्। खर्ज्यम्। गर्ज्यम्।

६०. अजिव्रज्योश्च। समाजः। उदाजः। परिव्राजः। परिव्राज्यम्।

६१. भुजन्युब्जौ पाण्युपतापयोः। भुजः पाणिः। न्युब्जो[4] रोगः। नेह :—भोगः। समुद्गः।

६२. प्रयाजानुयाजौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः।

६३. वञ्चेर्गतौ। वञ्च्यम्। नेह :—वङ्क्यं[5] काष्ठम्।

---

१. बहुव्रीहेर्विहितस्य तु नित्यम्। न खट्वा यस्या इति भाषितपुंस्कत्वादित्यर्थः। २. नावञ्चेरित्युः। ३. अचङ्ग्रहणं ज्ञापयति प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति। ४. न्युब्जिताः शेरतेऽस्मिन्। ५. कुटिलीकृतमित्यर्थः।

६४. ओक उचः के[1]। ओकः शकुन्तवृषलौ।

६५. ण्य आवश्यके। अवश्यपाच्यम्। अवश्यवाच्यम्। नेह :– पाक्यम्।

६६. यजयाचरुचप्रवचर्चश्च। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यम्। अर्च्यम्। * त्यजेश्च * त्याज्यम्।

६७. वचोऽशब्दसञ्ज्ञायाम्। वाच्यम्। शब्दाख्यायान्तु, वाक्यम्।

६८. प्रयोज्यनियोज्यौ शक्यार्थे। प्रयोक्तुं शक्यः, प्रयोज्यः। नियोज्यो भृत्यः।

६९. भोज्यं भक्ष्ये। भोज्य ओदनः। भोग्यमन्यत्।

७०. घोर्लोपो लेटि वा। दधद्रत्नानि दाशुषे। सोमो ददद्गन्धर्वाय। यद्-ग्निरग्नये ददात्।

७१. ओतः श्यनि। श्यति[2]। छ्यति[3]। द्यति[4]। अवस्यति[5]।

७२. क्सस्याचि। अधुक्षाताम्। अधुक्षाथाम्। अधुक्षि। नेह :– अधुक्षत्।

७३. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। अदुग्ध, अधुक्षत। अदुग्धाः, अधुक्षथाः। अदुग्ध्वम्, अधुक्षध्वम्। अदुह्वहि, अधुक्षावहि। अदिग्ध, अधिक्षत। अलीढ, अलिक्षत। अगूढ, अघुक्षत।

७४. शमामष्टानां दीर्घः श्यनि। शाम्यति। ताम्यति। दाम्यति। श्राम्यति। भ्राम्यति। क्षाम्यति। क्लाम्यति। माद्यति। नेह :– भ्रमति[6]।

७५. ष्ठिवुक्लमुचमां शिति। ष्ठीवति। क्लाम्यति। आचामति। * आङि चम इति वक्तव्यम्। नेह :– चमति। विचमति।

७६. क्रमः परस्मैपदेषु। क्राम्यति, क्रामति। नेह :–आक्रमते सूर्यः।

७७. इषुगमियमां छः। इच्छति। गच्छति। यच्छति। नेह :– इष्यति। इष्णाति।

७८. पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठ-मनयच्छपश्यर्च्छधौशीयसीदाः। पिबति[7]। जिघ्रति। धमति। तिष्ठति।

---

१. गुणकुत्वे निपात्येते। २. शो तनूकरणे। ३. छो छेदने। ४. दो अवखण्डने। ५. षोऽन्तकर्मणि। ६. वा भ्राशेति श्यन्विकल्पः। ७. पिबादेशोऽदन्तस्तेन न गुणः। अथवा अङ्गवृतेः पुनर्वृत्तावविधिः।

मनति । यच्छति । पश्यति । ऋच्छति । धावति । शीयते । सीदति । सरतेर्वेगितायां गतौ धावादेशः । नेह :– सरति । अनुसरति ।

७९. ज्ञाजनोर्जा । जानाति । जायते ।

८०. प्वादीनां ह्रस्वः[1] । पुनाति । लुनाति । स्तृणाति । कृणाति । वृणाति । जिनाति ।[2]

८१. मीनातेर्निगमे । प्रमिणन्ति व्रतानि । लोके तु, प्रमीणन्ति ।

८२. मिदेर्गुणः[3] । मेद्यति । नेह :– मिमिदे ।

८३. जुसि च । अजुहवुः । अबिभयुः । अबिभरुः ।

८४. सार्वधातुकार्धधातुकयोः[4] । भवति । तरति । नयति । कर्त्ता । चेता । स्तोता ।

८५. जाग्रोऽविचिण्णल्ङित्सु । जागरयति । जागरकः । जागरं जागरम् । जागरः । जागरितो वर्त्तते । जागर्त्तिः । नेह :– जागृविः । अजागारि । जजागार । जागृतः । जागृथः ।

८६. पुगन्तलघूपधस्य च[5] । क्लेदयति । ह्रेपयति । क्नोपयति । भेत्ता । छेत्ता । भेदनम् । छेदनम् ।

८७. नाभ्यस्तस्याचि पिति सार्वधातुके[6] । नेनिजानि । अनेनिजम् । वेविषाणि । अवेविषम् । नेह :– नेनेक्ति । * बहुलं छन्दसीति वक्तव्यम् * अनुषग् जुजोषत् ।

८८. भूसुवोस्तिङि । अभूत् । अभूः । सुवै । सुवावहै । नेह :– भवति ।[7]

८९. उतो वृद्धिर्लुकि हलि[8] । यौति । यौषि । यौमि । नौति । स्तौति । नेह :- युतः । स्तुतः ।

९०. ऊर्णोतेर्विभाषा[9] । ऊर्णौति, ऊर्णोति । ऊर्णौषि, ऊर्णोषि । नेह :- ऊर्णुतः । ऊर्णवानि ।

---

१. प्वादयः क्र्यादौ पूञ् पवन इत्यारभ्य प्ली गताविति यावत् । २. हल इति दीर्घे कृतेऽनेन ह्रस्वः । ३. शितीति वर्त्तते । तदादिविधौ शिदादौ प्रत्यय इत्यर्थः । ४. गुण इदश्रुत्येक उपस्थित्याङ्गस्य विशेषणतया तदन्तविधौ इगन्ताङ्गस्येति बोध्यम् । ५. इक्पदोपस्थित्या इक एव गुणः । ६. लघूपधस्येति वर्त्तते । ७. इह शपा व्यवधानम् । ८. सार्वधातुके पितीति च वर्त्तते । ९. हलीति वर्त्तते ।

९१. गुणोऽपृक्ते । वृद्ध्यपवादः । और्णोत् । और्णोः ।

९२. तृणह इम् । तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् ।

९३. ब्रुव ईट् । ब्रवीति । ब्रवीषि । ब्रवीमि । अब्रवीत् । नेह :– ब्रूतः । ब्रवाणि ।

९४. यङो वा[१] । बोभवीति, बोभोति । लालपीति । वावदीति । रोरवीति । न च भवति । वर्वर्त्ति । चर्कर्त्ति ।

९५. तुरुस्तुशम्यमः सार्वधातुके[२] । तवीति, तौति । तुवीतः, तुतः । रवीति, रौति । रुवीतः, रुतः । स्तवीति, स्तौति । स्तुवीतः, स्तुतः । शमीध्वम्, शाम्यध्वम् । अभ्यमीति, अभ्यमति ।

९६. अस्तिसिचोऽपृक्ते[३] । आसीत् । आसीः । अकार्षीत् । असावीत् ।

९७. बहुलं छन्दसि । सर्वमा[४] इदम् ।

९८. रुदश्च पञ्चभ्यः[५] । अरोदीत् । अरोदीः । अस्वपीत् । अश्वसीत् । प्राणीत् । अजक्षीत् । अपृक्त इति नेह :– रोदिति । स्वपिति ।

९९. अड्गार्ग्यगालवयोः । अरोदत् । अरोदः । अस्वपत् । अश्वसत् । प्राणत् । अजक्षत् ।

१००. अदः सर्वेषाम् । आदत् । आदः । अपृक्तस्येत्येव नेह :– अत्ति ।

१०१. अतो दीर्घो यञि । भवामि । भवावः । भवामः । पचामि । भविष्यामि । पक्ष्यामि । नेह :– भवतः । पचतः । चिनुवः । केशवः ।

१०२. सुपि च[६] । रामाभ्याम् । वृक्षाभ्याम् । रामाय । वृक्षाय । नेह :– अग्निभ्याम् । रामस्य ।

---

१. यङन्ताद्धलादेः पितः सार्वधातुकस्यासम्भवाद्यङ्लुगन्तोदाहरणानि । २. पुनः सार्वधातुकग्रहणमपिदर्थम् । शम्यमाबहुलं छन्दसीति विकरणलुकि उदाहरणम् । ३. अभूदित्यत्र स्थानिवद्भावेन सिज्बुद्ध्या प्राप्त ईट् द्विसकारको निर्देश इति कृत्वा सान्तस्यास्तेः सिचश्च ग्रहणाद् वारितो भाष्ये । सिच्च अस् चेति समाहारद्वन्द्वः । अस्तीत्यव्ययेन कर्मधारयः । तेन विद्यमानात् सिचोऽस्तेश्चेत्यर्थाश्रयणेन तद्वारणोपायः प्रदर्शितः शब्दस्वारस्यविदाममोदाय । ४. आसीदिति प्राप्ते । ५. रुद्, स्वप्, श्वस्, अन्, जक्ष्, इति पञ्च । ६. यञीति वर्त्तते ।

१०३. बहुवचने झल्येत्[१]। रामेभ्यः। वृक्षेभ्यः। रामेषु। सर्वेषाम्। नेह :- रामाभ्याम्। रामाणाम्। सुपीत्येव। नेह :- यजध्वम्। पचध्वम्।

१०४. ओसि च[१]। रामयोः। वृक्षयोः।

१०५. आङि चापः[२]। रमया। रमयोः। खट्वया। खट्वयोः। बहुराजया। बहुराजयोः। कारीषगन्ध्यया। कारीषगन्ध्ययोः।

१०६. सम्बुद्धौ च। हे रमे। हे खट्वे। हे बहुराजे। हे कारीषगन्ध्ये।

१०७. अम्बार्थनद्योर्ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल। हे गौरि हे नदि। हे शार्ङ्गरवि। हे ब्रह्मबन्धु। * असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न * हे अम्बाडे। हे अम्बाले। हे अम्बिके।

१०८. ह्रस्वस्य गुणः। हे हरे। हे अग्ने। हे भानो। ह्रस्वविधानसामर्थ्यान्नेह[३] :- हे गौरि। हे नदि।

१०९. जसि च। हरयः। अग्नयः। भानवः। पटवः। धेनवः। बुद्धयः * जसादिषु छन्दसि वा वचनम् प्राङ् णौ चङ्युपधायाः * अधा शतक्रत्वो यूयम्। शतक्रतवः। पश्वे नृभ्यो यथा गवे। पशवे।

११०. ऋतो ङिसर्वनामस्थानयोः। कर्त्तरि। मातरि। पितरि क्रोष्टरि। कर्त्तारौ। मातरौ। पितरौ। क्रोष्टारौ। कर्त्तारः। मातरः। पितरः क्रोष्टारः।

१११. घेर्ङिति। हरये। अग्नये। भानवे। वायवे। हरेः। भानोः। नेह :- सख्ये। पत्ये। सुपीत्येव। नेह :- पट्वी।

११२. आण्नद्याः[४]। गौर्यै। नद्यै। बहुश्रेयस्यै। ब्रह्मबन्ध्वै। गौर्याः। ब्रह्मबन्ध्वाः।

११३. याडापः। रमायै। बहुराजायै। कारीषगन्ध्यायै।

११४. सर्वनाम्नः स्याड्ढ्रस्वश्च। सर्वस्यै। विश्वस्यै। यस्यै। तस्यै। कस्यै। सर्वस्याः। विश्वस्याः। यस्याः। तस्याः। कस्याः। आप एव नेह :- भवते। भवतः।

---

१. अत इति वर्त्तते। २. आङिति टाविभक्तेः संज्ञा प्राचाम्। ३. यदि गुण इष्टः स्यात्। अम्बार्थानां ह्रस्वः, नद्योर्ह्रस्वयोर्गुण इत्येव ब्रूयात्। ४. ङितीत्यनुवृत्तं पञ्चम्यन्ततया विपरिणम्यते ङित इति।

११५ विभाषा द्वितीयातृतीयाभ्याम्[1]। द्वितीयस्यै, द्वितीयायै। तृतीयस्यै, तृतीयायै। द्वितीयस्याः, द्वितीयायाः। तृतीयस्याः, तृतीयायाः।

११६. ङेराम् नद्याम्नीभ्यः। गौर्याम्। नद्याम्। बहुश्रेयस्याम्, ब्रह्मबन्ध्वाम्। रमायाम्। बहुराजायाम्। कारीषगन्ध्यायाम्। सेनान्याम्। ग्रामण्याम्।

११७. इदुद्भ्याम्[2]। मत्याम्। बुद्ध्याम्। धेन्वाम्।

११८. औत्। सख्यौ। पत्यौ।

११९. अच्च घेः। हरौ। अग्नौ। भानौ। वायौ। मतौ। धेनौ।

१२०. आङो नाऽस्त्रियाम्। हरिणा। अग्निना। भानुना। वायुना। नेह :- मत्या। धेन्वा।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते सप्तमाध्यायस्य तृतीयपादः समाप्तः।



१. इदं सूत्रं त्यक्तुं शक्यम्। तीयस्य ङित्सूपसंख्यानात्। २. पक्षे अच्च घेः। मतौ। बुद्धौ। धेनौ।

# अथ सप्तमाध्यायस्य चतुर्थपादः ।



१. णौ चङ्युपधाया ह्रस्वः । अचीकरत् । अजीहरत् । अचीक्रमत । अलीलवत् । अपीपठत् ।

२. नाग्लोपिशास्वृदिताम् । मालामाख्यत् , अममालत् । अत्वरराजत् । अशशासत् । बाधृ-अबबाधत् । याचृ-अययाचत् । ढौकृ-अडुढौकत् ।

३. भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । अबिभ्रजत् , अबभ्राजत् । अबीभसत् , अबभासत् । अबीभषत् , अबभाषत् । अदीदिपत् , अदिदीपत् । अजीजिवत् , अजिजीवत् । अमीमिलत् , अमिमीलत् । अपीपिडत् , अपिपीडत् । * काण्यादीनां वेति वक्तव्यम् * अचीकणत् , अचकाणत् । अवीवणत्, अववाणत् ।

४. लोपः पिबतेरीच्चाभ्यासस्य । अपीप्यत् , अपीप्यताम् , अपीप्यन् ।

५. तिष्ठतेरित् । अतिष्ठिपत् , अतिष्ठिपताम् , अतिष्ठिपन् ।

६. जिघ्रतेर्वा । अजिघ्रिपत् , अजिघ्रपत् । अजिघ्रिपताम् , अजिघ्रपताम् ।

७. उर्ऋत् । इररारामपवादः । अचीकृतत् , अचिकीर्त्तत् । अवीवृतत् , अववर्त्तत् । अमीमृजत् , अममार्जत् ।

८. नित्यं छन्दसि । अवीवृधत् पुरोडाशेन ।

९. दयतेर्दिगि लिटि । दिग्ये, दिग्याते, दिग्यिरे ।

१०. ऋतश्च संयोगादेर्गुणः । जह्वरतुः । जह्वरुः । सस्वरतुः । सस्वरुः । सस्मरतुः, सस्मरुः । नेह :- चक्रतु ।

११. ऋच्छत्यृताम् । आनर्च्छ, आनर्च्छतुः, आनर्च्छुः । आर, आरतुः, आरुः । कृ-चकार, चकरतुः, चकरुः । गॄ-जगरतुः ।

---

१. ण्यन्ताः कणरणभणश्रणलुपहेठाः काण्यादयः षड् भाष्ये उक्ताः । ह्वायिवाणिलोटिलोचयश्चत्वारोऽधिका न्यासे । वाणिलोठो अप्यन्यत्र । इत्थं द्वादश ।
२. दिग्यादेशेन द्वित्वबाधनमिष्यते । ३. दयतेरिति देङो ग्रहणम् । दयतेस्तु दयांचक्रे ।

यासश्चेत्यामि दयांचक्रे । ४. वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते ।

१२. शृदृप्रां ह्रस्वो वा । शश्रतुः, शशरतुः[1] । शश्रुः, शशरुः । दद्रतुः, ददरतुः । दद्रुः, ददरुः । पप्रतुः, पपरतुः । पप्रुः, पपरुः ।

१३. केऽणः । ज्ञका । कुमारिका । किशोरिका । नेह :- गोका । नौका ।

१४. न कपि । कल्याणपञ्चमीकः । बहुकुमारीकः । बहुवधूकः ।

१५. आपोऽन्यतरस्याम् । बहुमालाकः, बहुमालकः[2] ।

१६. ऋदृशोऽङि गुणः । असरत् । अहं तेभ्योऽकरं नमः । अदर्शम्, अदर्शताम् ।

१७. अस्यतेस्थुक् । आस्थत्, आस्थताम्, आस्थन् ।

१८. श्वयतेरः । अश्वत्, अश्वताम्, अश्वन् ।

१९. पतः पुम् । अपप्तत्, अपप्तताम्, अपप्तन् ।

२०. वच उम् । अवोचत् । अवोचताम् । अवोचन् ।

२१. शीङः सार्वधातुके गुणः । शेते, शयाते, शेरते । नेह :- शिश्ये ।

२२. अयङ् यि क्ङिति । शय्यते । शाशय्यते । प्रशय्य ।

२३. उपसर्गाद्ध्रस्व ऊहतेः । ब्रह्म समुह्यात् । अग्निं समुह्य । समुह्यते । अभ्युह्यते । नेह :- ऊह्यते । क्ङितीत्येव । नेह :-अभ्यूह्योऽयमर्थः ।

२४. एतेर्लिङि । उदियात् । समियात् । अन्वियात् । नेह :- ईयात्[3] ।

२५. अकृत्सार्वधातुकयोर्दीर्घः । क्षीयात् । क्षीयते । चीयात् । चीयते । भृशायते । सुखायते । स्तूयते । तोष्टूयते । नेह :- प्रकृत्य । प्रहृत्य । चिनुयात् सुनुयात् ।

२६. च्वौ च । शुचीकरोति । शुचीभवति । पटूस्यात् ।

२७. रीङ् ऋतः । मात्रीयति । मात्रीयते । चेक्रीयते । पित्र्यम् ।

२८. रिङ् शयग्लिङ्क्षु । आद्रियते । आध्रियते । क्रियते । ह्रियते । क्रियात् । ह्रियात् । नेह :-बिभृयात् । कृषीष्ट ।

२९. गुणोऽर्त्तिसंयोगाद्योः[4] । अर्यते । अर्यात् । स्मर्यते । स्मर्यात् । यीत्येव नेह :- स्वृषीष्ट । ध्वृषीष्ट । असार्वधातुक इत्येव । नेह :- इयृयात्[5] ।

---

१. पक्षे गुणः । २. कबभावे बहुमालः । ३. अकृत्सार्वेति दीर्घः । पूर्वत्र दीर्घे कृतेऽनेन ह्रस्वः । ४. ऋतो यकि लिङि इति च वर्त्तते । ५. ऋधातोर्विधिलिङि रूपम् ।

३०. यङि च । अरार्यते । सास्वर्यते । सास्मर्यते । * हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः । जेघ्नीयते । नेह :– जङ्घन्यते ।

३१. ई घ्राध्मोः । जेघ्रीयते । देध्मीयते ।

३२. अस्य च्वौ । शुक्लीभवति । कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् । * अव्ययस्य च्वावीत्वं नेति वाच्यम् * दोषाभूतमहः । दिवाभूता रात्रिः ।[1]

३३. क्यचि च । पुत्रीयति । घटीयति । खट्वीयति । मालीयति ।[2]

३४. अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु । अशनायति । उदन्यति । धनायति । अन्यत्र तु, अशनीयति । उदकीयति । धनीयति ।

३५. नच्छन्दस्यपुत्रस्य । मित्रयुः । सुम्नयुः । नेह :- पुत्रीयन्तः सुदानवः । * अपुत्रादीनामिति वक्तव्यम् * जनीयन्तोऽन्वग्रवः ।

३६. दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति । अवियेना दुरस्युः । द्रविणस्युर्विपन्यया । वृषण्यति । रिषण्यति ।[3]

३७. अश्वाघस्यात् । अश्वायन्तो मघवन् । मा त्वा वृका अघायवः ।[4]

३८. देवसुम्नयोर्यजुषि काठके । देवायन्तो यजमानाः । सुम्नायन्तो हवामहे । नेह :- देवाञ्जिगाति सुम्नयुः ।

३९. कव्यध्वरपृतनस्यर्चि लोपः । सपूर्व्या निविदा कव्यतायोः । अध्वर्युं वा मधुपाणिम् । दमयन्तं पृतन्युम् ।

४०. द्यतिस्यतिमास्थामित्ति किति । निर्दितः । निर्दितवान् । अवसितः । मितः । स्थितः । नेह :– अवदाय । अवदाता ।

४१. शाच्छोरन्यतरस्याम्[5] । निशितम् , निशातम् । छितम् , छातम् संशितम्[6] व्रतम् । संशितो[7] ब्राह्मणः ।

४२. दधातेर्हिः । अभिहितम् । निहितम् । हित्वा ।

४३. जहातेश्च क्त्वि । हित्वा राज्यं वनं गतः । जिहीतेस्तु, हात्वा ।

---

१. एतदव्ययीभावश्चेति सूत्रे भाष्य उक्तम् । २. अकृत्सार्वधातुकयोर्दीर्घ इत्यस्यापवादः । ३. लोके दुरीयति । द्रविणीयति । वृषीयति । रिष्टीयते । लोके उक्तप्रत्ययाभावादिदमुदाहरणम् । ४. न छन्दसीति निषेधो नेत्वस्यैव किन्तु दीर्घस्यापीति इदं सूत्रं ज्ञापयति । ५. व्यवस्थितविभाषाश्रयणाद् व्रतविषये नित्यम् । ६. सम्यक् संपादितम् । ७. व्रतविषयकयत्नवानित्यर्थः ।

४४. विभाषा छन्दसि। हित्वा शरीरं हात्वा वा।

४५. सुधित[1] वसुधित नेमधित धिष्व धिषीय च। गर्भं माता सुधितं वक्षणासु। वसुधितमग्नौ। नेमधिता न पौंस्या। * क्तिन्यपि दृश्यते * उत श्वेतं वसुधितिं निरेके। धिष्व[2] वज्रं दक्षिण इन्द्र हस्ते। सुरेता रेतो धिषीय[3]।

४६. दो दद् घोः। दत्तः। दत्तवान्। दत्तिः। नेह :- दाप्-दातं बर्हिः। दैप्-अवदातं मुखम्।

४७. अच उपसर्गात्तः[4]। प्रत्तः। अवत्तः। नीत्तम्। सूत्तम्। * अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमिति चेष्यते * अवदत्तम्[5] इत्यादि।

४८. अपो भि। अद्भिः। अद्भ्यः। नेह :- अप्सु। * मासश्छन्दसीति वक्तव्यम् * माद्भिः। शरद्भिः। * स्ववःस्वतवसोरुषसश्चेष्यते * स्ववद्भिः[6]। स्वतवद्भिः[7]। समुषद्भिरजायथाः[8]।

४९. सः स्यार्धधातुके। वत्स्यति। अवत्स्यत्। विवत्सति। जिघत्सति। नेह :- वासः। वासः।

५०. तासस्त्योर्लोपः। भवितासि। कर्त्तासि। व्यतिसे[9]।

५१. रि च। भवितारौ, भवितारः। कर्त्तारौ, कर्त्तारः। व्यतिरे[10]।

५२. ह एति। एधिताहे। कर्त्ताहे। व्यतिहे।

५३. यीवर्णयोर्दीधीवेव्योः। आदीध्य। आवेव्य। आदीध्यते। आवेव्यते। आदीधिता। आवेविता। आदीधीत[11]। आवेवीत। नेह :- आदीध्यनम्। आवेव्यनम्।

---

१. सुवसुनेमपूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते। २. लोके धत्स्वेति ३. धासीयेति। ४. इह अच इत्यस्यावृत्त्याजन्तादुपसर्गा दिति दा-इत्यस्य घोरच इति च गम्यते। ५. उपसर्गविभक्तिस्वरप्रतिरूपकाश्चेति चादित्वमिति नोपसर्गत्वं वा। ६. अवतेरसुन् शोभनमवो येषां ते स्ववसस्तैः। ७. तु इति सौत्रो धातुस्तस्मादसुन् स्वं तवो येषां तैः। ८. मिथुनेऽसिः वसेः किच्चेत्यसिरिति हरदत्तः। पञ्चपादीरीत्या तु उषः किदिति बोध्यम्। ९. अस्तेरकारसकारयोर्लृतयोः से इति प्रत्ययमात्रमेतत्पदम्। १०. अन्तर्ङिटि प्रथमपुरुषबहुवचने छान्दसं रूपम्। इरयो रे इति रेभावः। ११. लिङि रूपम्।

५४. सनि मीमाघुरभलभशकपतपदामच इस्[1] । मित्सति २ । मित्सते २ मा-मित्सति । माङ्मेङोः मित्सते । दो-दाण्-दित्सते । दाञ्-दित्सति, दित्सते । देङ्-दित्सते । धेट्-धित्सति । धाञ्-धित्सति, धित्सते । रिप्सते । लिप्सते । शिक्षति । पित्सति । पित्सते । * राधो हिंसायां सनीस् वाच्यः * रित्सति । नेह :- आरिरात्सति ।

५५. आप्ज्ञप्यृधामीत्[3] । ईप्सति । ज्ञीप्सति । ईर्त्सति ।

५६. दम्भ इच्च । धीप्सति, धिप्सति ।

५७. मुचोऽकर्मकस्य गुणो वा । मोक्षते, मुमुक्षते वा वत्सः स्वयमेव । नेह :- मुमुक्षति वत्सं कृष्णः ।

५८. अत्र[4] लोपोऽभ्यासस्य । मित्सतीत्यारभ्य मोक्षत इत्यन्तमुदाहार्यम् ।

५९. ह्रस्वः । ढौकृ-डुढौके । डुढौकिषते । त्रौकृ-तुत्रौके । तुत्रौकिषते । अडुढौकत । अतुत्रौकत् ।

६०. हलादिः[5] शेषः । बभूव । जग्लौ । पपाच । आट, आटतुः ।

६१. शर्पूर्वाः खयः । चुश्च्योत । तस्थौ । चुश्च्योतिषति । तिष्ठासति । पस्पर्धे ।

६२. कुहोश्चुः । चकार । चखान । जगाम । जघान । जहार । जहौ ।

६३. न कवतेर्यङि । कोकूयते । कौतिकुवत्योस्तु, चोकूयते ।

६४. कृषेश्छन्दसि । करिकृष्यते ।

६५. दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतो दविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च । दाधर्ति, दर्धर्ति । दर्धर्षि[6] । बोभूतु[7] ।

---

१. मी-इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते । कृतदीर्घस्य मिनोतेरपि मीरूपत्वाविशेषात् । २. गामादाग्रहणेष्वविशेषात् । ३. पक्षे दिदम्भिषति । ४. सनि मीमेत्यारभ्य मुचोऽकर्मकस्येति यावदत्रपदेन गृह्यते । अभ्यासस्येति आध्यायपरिसमाप्तेरधिकृतं बोध्यम् । ५. अभ्यासस्यादिश्चेद्धल् शिष्यते । अन्ये हलो लुप्यन्त इत्यर्थः । ६. आद्यास्त्रयो धृञो धारयतेर्वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं गिलोपश्च । ७. भवतेर्यङ्लुगन्तस्य गुणाभावः । तेन भाषायां गुणो लभ्यते ।

तेतिक्ते[1]। अलर्षि[2] युध्म खजकृत्पुरन्दर। आपनीफणत्[3]। संसनिष्यदत्[4]। करिक्रत्[5]। कनिक्रदज्जनुषम्[6]। वि यो भरिभ्रदोषधीषु[7]। दविध्वतो[8] रश्मयः सूर्यस्य। दविद्युतद्दीद्यच्छोशुचानः[9]। सहोर्जा तरित्रतः[10]। सरीसृपतम्[11]। वरीवृजत्[12]। मर्मृज्य[13]। वक्षन्तो वेदाऽगनीगन्ति[14] कर्णम्।

६६. उरत्। ववश्च[15]। ववृते। ववृधे। नर्नर्त्ति। नरिनर्त्ति। नरीनर्त्ति।

६७. द्युतिस्वाप्योः सम्प्रसारणम्। दिद्युते। दिद्युतिषते। दिद्योतिषते। देद्युत्यते। सुष्वापयिषति।

६८. व्यथो लिटि। विव्यथे, विव्यथाते, विव्यथिरे।

६९. दीर्घ इणः किति। ईयतुः, ईयुः। नेह :– इयाय।

७०. अत आदेः। ह्रस्वापवादः। आत, आततुः। आट, आटतुः।

७१. तस्मान्नुड् द्विहलः। आनञ्ज, आनञ्जतुः। आनर्द, आनर्दतुः।

७२. अश्नोतेश्च। आनशे, आनशाते। अश्नातेस्तु, आश। आशतुः।

७३. भवतेरः। बभूव, बभूवतुः। लिटीत्येव। नेह :– बुभूषति। बोभूयते।

७४. ससूवेति निगमे। गृष्टिः ससूव स्थविरम्। लोके सुषुवे।

७५. णिजां त्रयाणां[16] गुणः श्लौ। नेनेक्ति, नेनिक्तः। वेवेक्ति, वेविक्तः। वेवेष्टि। वेविष्टः, नेह :– निनेज।

---

१. तिजेर्यङ्लुगन्तात्तङ्। २. इयर्तेर्लेटि हलादिःशेषापवादो रेफस्य लत्वमित्वाभावश्च। सिपा निर्देशो न तन्त्रम्। अलर्ति दक्ष उत। ३. फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमः। ४. संपूर्वस्य स्यन्देर्यङ्लुकि शतरि अभ्यासस्य निक् धातुसकारस्य षत्वम्। ५. करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः। ६. क्रन्देर्लुङि च्लेरङ्। द्वित्वमभ्यासस्य चुत्वाभावो निगागमश्च। अक्रन्दीदित्यर्थः। ७. बिभर्तेरभ्यासस्य जश्त्वाभावः। ८. ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च। ९. द्युतेरभ्यासस्य संप्रसारणाभावाऽत्वं विगागमश्च। १०. तरतेः शतरि श्लौ अभ्यासस्य रिगागमः। ११. सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्य रीगागमः। १२. वृजेः शतरि श्लौ अभ्यासस्य रीक्। १३. मृजेर्लिटि णल् अभ्यासस्य रुक्। धातोश्च युक्। १४. गमेराङ्पूर्वस्य लटि हलादभ्यासस्य चुत्वाभावो नीगागमश्च। १५. इहाङ्गाधिकारात्प्रत्यये परत इत्यूह्यते। अतश्चारत्वे कृते स्थानिवद्भावेन न सम्प्रसारणे सम्प्रसारणमिति न पुनः सम्प्रसारणम्। १६. णिज्-विज्-विष्-इत्येतेषामित्यर्थः।

७६. भृञामित्[1]। बिभर्ति। मिमीते। जिहीते। । नेह :- जहाति। हलावेव। नेह :- बभार।

७७. अर्तिपिपर्त्योश्च। इयर्ति। पिपर्ति।

७८. बहुलं छन्दसि। पूर्णां विवष्टि। जनिमा विवक्ति। जिघर्ति सोमम्

७९. सन्यतः। पिपठिषति। पिपक्षति। यियक्षति। पिपासति। नेह :- लुलूषति। पापचिषते।

८०. ओः पुयण्ज्यपरे[3]। पिपविषति। अपीपवत्[4]। पिपावयिषति। अबीभवत। बिभावयिषति। यियविषति। अयीयवत्। यियावयिषति। अरीरवत्। रिरावयिषति। अलीलवत। लिलावयिषति। अजीजवत्। जिजावयिषति[5]। नेह :- बुभावयिषति। बुभूषति।

८१. स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा। असिस्रवत, असुस्रवत। सिस्रावयिषति, सुस्रावयिषति। अशिश्रवत, अशुश्रवत। शिश्रावयिषति, शुश्रावयिषति। अदिद्रवत, अदुद्रवत्। दिद्रावयिषति, दुद्रावयिषति। अपिप्रवत्, अपुप्रवत। पिप्रावयिषति, पुप्रावयिषति। अपिप्लवत, अपुप्लवत। पिप्लावयिषति, पुप्लावयिषति। अचिच्यवत्, अचुच्यवत। चिच्यावयिषति, चुच्यावयिषति।

८२. गुणो यङ्लुकोः। बोभूयते। चेचीयते। बोभवीति, बोभोति।

८३. दीर्घोऽकितः। पापच्यते। पापचीति। अटाट्यते। यायज्यते। यायजीति। नेह :- यंयम्यते। यंयमीति। रंरम्यते। रंरमीति।

८४. नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्। वनीवच्यते। वनीवञ्चीति। सनीस्रस्यते। सनीस्रंसीति। दनीध्वस्यते। दनीध्वंसीति। बनीभ्रस्यते। बनीभ्रंसीति। चनीकस्यते। चनीकसीति। पनीपत्यते। पनीपतीति। पनीपद्यते। पनीपदीति। चनीस्कद्यते। चनीस्कन्दीति।

८५. नुगतोऽनुनासिकान्तस्य[6]। * पदान्तवच्चेति वक्तव्यम् * यँयम्यते[7], यंयम्यते। यँयमीति, यंयमीति। जङ्गम्यते, जंगम्यते। जङ्गमीति, जंगमीति। नेह :- तेतिम्यते।

---

१. भृञ् माङ्-आङाङां त्रयाणामेव। २. वशेरेतद्रूपम्। ३. परयोरिति वक्तव्ये वर्णप्रत्याहारजग्रहो ज्ञापयति। णिच्यच आदेशो न स्याद् द्वित्वे कार्ये इति। तेन औननदित्यादिसिद्धिः। ४. सन्वद्भावफलमिदम्। ५. जु-इति सौत्रो धातुः। ६. नुकाऽनुस्वारो लक्ष्यते। ७. वा पदान्तस्येति परसवर्णविकल्पः।

८६. जपजभदहदशभञ्जपशां च । जंजप्यते । जंजपीति । जंजभ्यते । जंजभीति । दंदह्यते । दन्दहीति । दंदश्यते । दन्दशीति । बंभज्यते । बंभजीति । पंपश्यते[1] । पंपशीति ।

८७. चरफलोश्च । चञ्चूर्यते । चंचुरीति । पंफुल्यते । पंफुलीति ।

८८. उत्परस्यातः । चञ्चूर्यते । चञ्चुरीति । पंफुल्यते । पंफुलीति ।

८९. ति च । चूर्तिः । प्रफुल्तिः । प्रफुल्तः[2] ।

९०. रीगृदुपधस्य च । वरीवृत्यते । वरीवृतीति । वरीवृध्यते । वरीवृधीति । नरीनृत्यते[3] । नरीनृतीति । * रीगृत्वत इति वक्तव्यम् * वरीवृश्च्यते । परीपृच्छ्यते ।

९१. रुग्रिकौ च लुकि । नर्नर्ति, नरिनर्ति, नरीनर्ति । वर्वर्ति, वरिवर्ति, वरीवर्ति ।

९२. ऋतश्च । चर्कर्ति, चरिकर्ति, चरीकर्ति । जर्हर्ति, जरिहर्ति, जरीहर्ति । नेह :- कॄ-चाकर्ति ।

९३. सन्वल्लघुनि चङ्परेऽनग्लोपे[4] । अचीकमत । अचीकरत । अपीपचत् । अपीपठत् । अबीभवत् । अयीयवत् । अजीजवत् । नेह :- अततक्षत् । अजजागरत् । णिङभावपक्षे अचकमत । अचकथत्[5] ।

९४. दीर्घो लघोः[6] । अचीकमत । अचीकरत् । अजीहरत् । नेह :- अबिभ्रजत् । अततक्षत् ।

९५. अत्[7] स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् । असस्मरत् । अददरत् । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ।

---

१. पश इति सौत्रो धातुः । २. प्रफुल्लमिति तु फुल्ल विकसने पचाद्यच् । ३. क्षुभ्नादित्वान्न णः । ४. चङ् परो यस्मादिति बहुव्रीहिः । णिरित्यर्थः । स चाङ्गस्येति च द्वयमप्यावर्तते । अङ्गसंज्ञानिमित्ते चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसतीत्यर्थः । अथवाङ्गस्येति नावर्तते । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् । ५. अदन्तोपदेशत्वादग्लोपित्वम् । ६. पूर्वस्मिन्नेव विषये । ७. अत्वविधानादित्वं बाध्यते । तपरत्वाद्दीर्घोऽपि ।

९६. विभाषा वेष्टिचेष्ट्योः । अववेष्टत्, अविवेष्टत् । अचचेष्टत, अचिचेष्टत् ।

९७. ई च गणः । अजीगणत् । अजगणत ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
सप्तमाध्यायस्य चतुर्थपादः समाप्तः ।



# अथाष्टमाध्यायस्य प्रथमपादः ।



१. सर्वस्य द्वे । इदमधिक्रियते पदस्येत्यतः प्राक् ।

२. तस्य परमाम्रेडितम् । चौर चौर[1] ३ घातयामि त्वाम् । वृषल वृषल ३ ।

३. अनुदात्तञ्च । दिवे दिवे । भुङ्क्ते भुङ्क्ते ।

४. नित्यवीप्सयोः[2] । पचति पचति । जल्पति जल्पति । भुक्त्वा २, भोजम् २ व्रजति । लुनीहि लुनीहीत्येवायं लुनाति । वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः ।

५. परेर्वर्जने । परि परि वङ्गेभ्यो[3] वृष्टो देवः । * परेर्वर्जने वा वचनम् * परि वङ्गेभ्यः ।

६. प्रसमुपोदः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे । उपोप मे परामृश । किन्नोदुदु हर्षसे ।

७. उपर्यध्यधसः सामीप्ये । उपर्युपरि ग्रामम्[4] । अध्यधि सुखम् । अधोऽधो लोकम्[5] ।

८. वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु[6][7] । सुन्दर सुन्दर वृथा ते सौन्दर्यम् । देव देव वन्द्योऽसि । दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि । धानुष्क धानुष्क वृथा ते धनुः । चोर चोर घातयिष्यामि त्वाम् ।

९. एकं बहुव्रीहिवत् । एकैकमक्षरम्[8] । एकैकयाहुत्या[9] । एकैकस्मै देहि ।

१०. आबाधे च । गतगतः । गतगता । पतितपतितः ।

---

१. आम्रेडितं भर्त्सन इति प्लुतभावः । २. आभीक्ष्ण्यमिह नित्यता तच्च तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । ३. वङ्गान्परिहृत्येत्यर्थः । ४. ग्रामस्योपरिष्टात्समीपे देशे । ५. लोकस्याधस्तात्समीप इत्यर्थः । ६. एकार्थः पदसमूहो वाक्यम् । ७. असूया गुणेषु दोषारोपः । संमतिः पूजा । ८. बहुव्रीहिवद्भावात्सुपोलुकि पुनः प्रातिपदिकत्वात्सुप् । ९. न बहुव्रीहावित्ति सर्वनामसंज्ञानिषेधस्त्विह न । अलौकिके विग्रहवाक्य एव तत्प्रवृत्तेः सिद्धान्तितत्वात । १०. विरहात्पीड्यमानस्योक्तिः ।

११. कर्मधारयवदुत्तरेषु । पटुपटुः । पटुपट्वी ।

१२. प्रकारे गुणवचनस्य । पटुपटुः । पटुपट्वी । शुक्लशुक्लं रूपम् । शुक्लशुक्लः पटः । * आनुपूर्व्ये द्वे वाच्ये * मूले मूले स्थूलः । * सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः * सर्पः सर्पः । बुध्यस्व बुध्यस्व । सर्पः सर्पः सर्पः । बुध्यस्व बुध्यस्व बुध्यस्व । * क्रियासमभिहारे च * लुनीहि लुनीहीत्येवायं लुनाति । * डाचि विवक्षिते द्वे बहुलम् * पटपटाकरोति । पटपटायते । * कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् * * असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः * अन्योन्यं विप्रा नमन्ति । अन्योन्यौ । अन्योन्यान् । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । परस्परम् । इतरेतरम् । परस्परेण इतरेतरेणेत्यादि । * स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः * अन्योन्याम्, अन्योन्यम्, परस्पराम्, परस्परम्, इतरेतराम्, इतरेतरम्, वा इमे ब्राह्मण्यौ कुले वा भोजयतः ।

१३. अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । प्रियप्रियेण ददाति । सुखसुखेन । प्रियेण सुखेन वा ।

१४. यथास्वे यथायथम् । यथायथं ज्ञाता ।

१५. द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । द्वन्द्वं मन्त्रयते । आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति । द्वन्द्वं व्युत्क्रान्ताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं संकर्षणवासुदेवौ ।

१६. पदस्य । अधिकारोऽयं प्रागपदान्ताधिकारात् ।

---

१. कर्मधारयवद्भावात्सुब्लोपपुंवद्भावान्तोदात्तत्वानि भवन्ति । २. पटुसदृश ईषत्पटुरिति यावत् । ३. गुणवाचिनो गुणोपसर्जनद्रव्यवाचिनश्च गृह्यन्ते । ४. नित्यवीप्सयोरिति सिद्धे भृशार्थे द्वित्वार्थमिदम् । पौनःपुन्येऽपि लोटा सह समुच्चित्य द्योतकतां लब्धुं वा । ५. बहुलग्रहणादन्यपरयोर्न समासवत् । इतरस्य तु नित्यम् । सर्वं बाहुलकेन समाधेयम् । ६. अतिप्रियमपि वस्तु अनायासेन ददातीत्यर्थः । ७. वीप्सायामव्ययीभावः । योऽययात्मा यच्चात्मीयं तद्यथास्वम् । ८. यथास्वभावमित्यर्थः । ९. रहस्यमित्यर्थः । १०. माता पुत्रेण पौत्रेण प्रपौत्रेणापि मिथुनं गच्छतीत्यर्थः । ११. व्युत्क्रमणं पृथगवस्थानम् । १२. अभिव्यक्तौ साहचर्येणेत्यर्थः ।

१७. पदात् । अधिक्रियत इदं कुत्सने च सुप्यगोत्रादाविति प्राक् ।

१८. अनुदात्तं सर्वमपादादौ । गोपायतं नः । अधिक्रियत इदमा पादसमाप्तेः ।

१९. आमन्त्रितस्य च । षाष्ठस्यापवादः । पचसि देवदत्त । इमं मे गङ्गे यमुने सरस्वति । नेह :– अुतुद्दि स्तोमम् । अग्न इन्द्र । * समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः * नेह :– अयं दण्डो हरानेन । ओदनं पच तव भविष्यति । ओदनं पच मम भविष्यति ।

२०. युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ । ग्रामो वां स्वम् । ग्रामो नौ स्वम् । ग्रामो वां दीयते । ग्रामो नौ दीयते । जनो वां पश्यति । जनो नौ पश्यति । स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव । नेह :– इति युष्मत्पुत्रोऽस्मत्पुत्रः ।

२१. बहुवचनस्य वस्नसौ । ग्रामो वः स्वम् । ग्रामो नः स्वम् । ग्रामो वो दीयते नो दीयते । जनो वः पश्यति नोऽपि ।

२२. तेमयावेकवचनस्य । ग्रामस्ते स्वं मेऽपि । ग्रामस्ते दीयते मेऽपि ।

२३. त्वामौ द्वितीयायाः । जनस्त्वा पश्यति मापि ।

२४. न चवाहाहैवयुक्ते । ग्रामस्तव च स्वं मम च स्वम् । हरिस्त्वां मां च रक्षतु, ग्रामस्तव वा स्वं मम वा । ग्रामस्तव ह स्वं मम ह स्वम् । ग्रामस्तवाह स्वं ममाह स्वम् । ग्रामस्तवैव स्वं ममैव स्वम् । युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । नेह :– हरो हरिश्च मे स्वामी ।

२५. पश्यार्थैश्चानालोचने । चेतसा त्वां समीक्षते । भक्तस्तव रूपं ध्यायति मम रूपं ध्यायति ।

२६. सपूर्वायाः प्रथमाया विभाषा । भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् । त्वा मेति वा । ग्रामे कम्बलस्त स्वम् तव वा । ग्रामे कम्बलो मे स्वं

१. इन्द्रादीनां न निघातः । आमन्त्रितं पूर्वमविद्यमानवदिति अविद्यमानवद्भावेन पदात्परत्वाभावात् । २. एकतिङ् वाक्यम् । ३. वचनान्तरैरादेशान्तरविधानाद् द्विवचनान्तयोरेवादेशाविमौ । ४ पश्यार्था दर्शनार्थाः । दर्शनं ज्ञानम् । आलोचनं चाक्षुषज्ञानम् । ५. परम्परायोगेऽप्ययं निषेधः ।

वा। * एते वांनावादय आदेशा अनन्वादेशे[1] वा वक्तव्याः * धाता ते
ोऽस्ति, धाता तव भक्तोऽस्ति वा। तस्मै ते नम इत्येव।

२७. तिङो गोत्रादीनि[2] कुत्सनाभीक्ष्ण्ययोः। पचति गोत्रम्। पचति
ति गोत्रम्। जल्पति ब्रुवम्[3]। जल्पति जल्पति ब्रुवम्। नेह :— पचति पापम्।
ाति गोत्रं समेत्य कूरम्।

२८. तिङ्ङतिङः। अग्निमीळे। देवदत्तः पचति। नेह :— नीलमुत्पलम्।

२९. न लुट्। श्वः कर्त्ता, श्वः कर्त्तारौ।

३०. निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्[4]। यदग्ने स्या-
त्वम्। युवा यदीकृथः। हन्त करोति। कुविदङ्ग आसन्। नेज्जिह्मायन्तो नरकं
ाम। स चेद्भुङ्क्ते। अयं च मरिष्यति। अचित्तिमिश्रक्रमा कच्चित्। पुत्रासो यत्र
ारो भवन्ति।

३१. नह प्रत्यारम्भे[5]। नह भोक्ष्यसे? नेह :— नह वै तस्मिन् लोके
ृणमिच्छन्ति।

३२. सत्यं प्रश्ने। सत्यं भोक्ष्यसे? नेह :— सत्यमिद्वा उ तं वयमिन्द्रं
वाम।

३३. अङ्गाप्रातिलोम्ये। अङ्ग कुरु। अङ्ग पठ। नेह :— अङ्ग कूजसि वृषल
ार्नीं ज्ञास्यसि जाल्म[6]।

३४. हि च। आ हि ष्मा याति। आ हि रुहन्तम्।

३५. छन्दस्यनेकमपि साकाङ्क्षम्। अनृतं हि मत्तो वदति पाप्मा चैनं
पुनाति[7]।

३६. यावद्यथाभ्याम्। यावद्भुङ्क्ते। यथाचित्कण्वमावतम्।

---

१. अन्वादेशे तु नित्यमित्यर्थः। २. अनुदात्तानि भवन्तीत्यर्थः। गोत्रप्रवचनप्र-
ानप्रहसनप्रत्यायनब्रुवप्रचक्षणप्रायविचक्षणावचक्षणस्वाध्यायभूयिष्ठेति गोत्रादीनि।
ब्रुवः कन्निपातनाद्वच्यादेशाभावश्च। ४. चण्शब्दो णित् चेदर्थे।
प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः। ६. अनभिप्रेतमसौ कुर्वन् प्रतिलोमो भवति।
तिङन्तद्वयमपि नानुदात्तम्।

३७. **पूजायां नानन्तरम्**[1]। यावत्पचति शोभनम्। यथा पचति शोभनम्। नेह :– यावद्भुङ्क्ते। यावद्देवदत्तः पचति शोभनम्[2]।

३८. **उपसर्गव्यपेतं च**। यावत्प्रपचसि शोभनम्। यथा करोति चारु। अनन्तरमित्येव। नेह :– यावद्देवदत्तः पचति शोभनम्।

३९. **तुपश्यपश्यताहैः पूजायाम्**। माणवकस्तु भुङ्क्ते शोभनम्। पश्य माणवको भुङ्क्ते शोभनम्। पश्यत माणवको भुङ्क्ते शोभनम्। आदह स्वधामनु पुनर्गर्भत्वमेरिरे।

४०. **अहो च**। अहो देवदत्तः पचति शोभनम्।

४१. **शेषे**[3] **विभाषा**। अहो कटं करिष्यति।

४२. **पुरा च परीप्सायाम्**[4]। अधीष्व माणवक पुरा विद्योतते विद्युत्। नेह :– न तेन स्म पुराधीयते।

४३. **नन्वित्यनुज्ञैषणायाम्**[5]। ननु गच्छामि भोः[6]? नेह :– अकार्षीः कटं त्वम्? ननु करोमि[7]।

४४. **किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्**। किं द्विजः पचत्याहोस्विद्गच्छति? नेह :– किं भक्तं पचत्यपूपान्वा[8]? किं प्रपचति उत प्रकरोति? किं द्विजो न पचति?

४५. **लोपे**[9] **विभाषा**। देवदत्तः पचत्याहोस्वित्पठति?

४६. **एहि मन्ये प्रहासे लृट्**[10]। एहि मन्ये भक्तं भोक्ष्यसे न हि भोक्ष्यसे भुक्तं तत्त्वतिथिभिः। अन्यत्र तु नेह :– एहि मन्यसे ओदनं भोक्ष्ये इति सुष्ठु मन्यसे।

४७. **जात्वपूर्वम्**। जातु भोक्ष्यसे। नेह :– कटं जातु करिष्यसि।

४८. **किंवृत्तं च चिदुत्तरम्**। कश्चिद् भुङ्क्ते। कतरश्चिद् भुङ्क्ते। कतमश्चिद् भुङ्क्ते। नेह :– को भुङ्क्ते। अपूर्वमित्येव। नेह :– रामः किञ्चित्पठति।

---

१. अनुदात्तं न भवतीति न अर्थादनुदात्तमेव भवति। २. पूर्वेण सूत्रेणात्र निघातः प्रतिषिध्यते। ३. पूजातिरिक्तं शेषः। ४. परीप्सा त्वरा। ५. अनुज्ञैषणानुप्रार्थना। ६. अनुजानीहि मां गच्छन्तमित्यर्थः। ७. पृष्टप्रतिवचनमेतत्। ८. साधनप्रश्नः। ९. किमोऽप्रयोग इत्यर्थः। १०. गत्यर्थलोटा लृडित्यनेनैव सिद्धे नियमार्थोऽयमारम्भः। एहिमन्येयुक्ते प्रहास एव नान्यत्र। एहि मन्यसे ओदनं भोक्ष्य इति।

४९. आहो उताहो चानन्तरम् । आहो भुङ्क्ते । उताहो भुङ्क्ते । अपूर्वमित्येव । नेह :– देव आहो भुङ्क्ते ।

५०. शेषे[1] विभाषा । आहो देवः पचति ।

५१. गत्यर्थलोटा लृण् न चेत्कारकं सर्वान्यत्[2] । आगच्छ देव ग्रामं द्रक्ष्यसि । उह्यन्तां शालयो देवदत्तेन रामेण भोक्ष्यन्ते । नेह :– पच[3] देव ओदनं भोक्ष्यसेऽन्नम् । आगच्छेर्देव[4] ग्रामं द्रक्ष्यस्येनम् । आगच्छ देव ग्रामं पश्यस्येनम्[5] । आगच्छ देव ग्रामं पिता[6] ते ओदनं भोक्ष्यते । आगच्छ देव ग्रामं त्वं चाहं च द्रक्ष्याव[7] एनम् ।

५२. लोट् च[8] । आगच्छ देव ग्रामं पश्य । नेह :– पच देवौदनं भुङ्क्ष्वैनम् । आगच्छ देव ग्रामं पश्यसि ।

५३. विभाषितं सोपसर्गमनुत्तमम्[9] । आगच्छ देव ग्रामं प्रविश । नेह :– आगच्छानि देव ग्रामं प्रविशानि ।

५४. हन्त च[8] । हन्त प्रविश । नेह :– हन्त कुरु[10] । हन्त प्रभुञ्जावहै ।

५५. आम एकान्तरमामन्त्रितमनन्तिके[11] । आम् पचसि देवदत्त ३ । नेह :– आं प्रपचसि देवदत्त ३ । अन्तिके तु आम् पचसि देवदत्त ।

५६. यद्धितुपरं छन्दसि । उदसृजो यदङ्गिरः । उशन्ति हि । आख्यास्यामि तु ते । नियमार्थमिदम्[12] । एतैरेव परभूतैर्योगे नान्यैरिति । जाये स्वारोहावैहि[13] ।

५७. चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः । देवः पचति चन । देवः पचति चित् । देवः पचतीव । देवः पचति गोत्रं ब्रुवं प्रवचनं वा । देवः पचतिकल्पम् । देवः पचति पचति । नेह :– देवः प्रपचति चन ।

---

१. व्यवहित इत्यर्थः । २. यत्रैव कारके लोट् तत्रैव लृडपि चेदित्यर्थः । ३. गत्यर्थत्वाभावादित्यर्थः । ४. इह लोटा योगाभावः । ५. इह लृण्नास्तीति । ६. गत्यर्थलोटः कर्त्ता त्वं लृटस्तु पितेति भेदः । ७. यल्लोटः कारकं तच्चान्यच्च लृट इति नेह प्रवृत्तिः । ८. गत्यर्थलोटेत्यनुवर्तते । योगविभाग उत्तरार्थः । ९. इह पूर्वसूत्रं सर्वमनुवर्त्तते । १०. निपातैर्यद्यदीति निघातप्रतिषेधः । ११. नानुदात्तं भवतीत्यर्थः । १२. निपातैर्यदिति हि चेति तुपश्येति च सिद्ध इति भावः । १३. एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति ।

५८. चादिषु च[1]। देवः पचति च खादति च। देवः पचति वा खादति वा। अगतेरित्येव। नेह :— देवः प्रपचति च प्रखादति च।

५९. चवायोगे प्रथमा[2]। गाश्च चारयति वीणां वा वादयति। इतो वा सातिमीमहे?

६०. हेति क्षियायाम्[3]। स्वयं ह रथेन याति ३[4] उपाध्यायं पदातिं गमयति। स्वयं ह्यौदनं भुङ्क्ते ३ उपाध्यायं सक्तून् पाययति।

६१. अहेति विनियोगे च[5]। त्वमह ग्रामं गच्छ। स्वयमह रथेन याति ३ उपाध्यायं पदातिं गमयति।

६२. चाहलोप एवेत्यवधारणम्। देव एवारण्यं गच्छतु। देव एव ग्रामं गच्छतु[6]। राम एवारण्यं गच्छतु। राम एव ग्रामं[7] गच्छतु। नेह :—देव क्वेव भोक्ष्यसे[8]?

६३. चादिलोपे विभाषा। इन्द्र वाजेषु नोऽव[9]। शुक्ला व्रीहयो भवन्ति। श्वेता गा आज्याय दुहन्ति। व्रीहिभिर्यजेत, यवैर्यजेत[9,10]।

६४. वैवावेति च छन्दसि। अहर्वै देवानामासीत्। अयं वाव हस्त आसीत्।

६५. एकान्याभ्यां समर्थाभ्याम्। अजामेकां जिन्वति। प्रजामेकां रक्षति। तयोरन्यः पिप्पलं स्वाद्वत्ति। नेह :—[11]एको देवानुपातिष्ठत्।

६६. यद्वृत्तान्नित्यम्। यो भुङ्क्ते। यद्वयङ् वायुर्[12]वाति। यं भोजयति। * याथाकाम्ये वेति वक्तव्यम् * यत्र क्वच यजन्ते[13]।

---

१. चादयश्चवाहाहैवाः। २. प्रथमा तिङ् विभक्तिर्नानुदात्तेत्यर्थः। उत्तरवाक्यानुसञ्जनीयतिङन्तापेक्षया प्रथमात्वम्। ३. धर्मव्यतिक्रम आचारभेद इति यावत्। ४. क्षियाशीःप्रैषेष्विति प्लुतः। ५. चात् क्षियायामपि। विविधप्रयोजनो नियोगो विनियोगः। ६. ग्राममरण्यञ्च गच्छत्वित्यर्थः। इह चलोपः। ७. अरण्यं केवलं ग्रामं केवलमित्यर्थः। इह केवलार्थोऽहशब्दो लुप्तः। ८. न क्वचिदित्यर्थः। ९. एषु चलोपः। १०. इह वालोपः। ११. इह एक इति संख्यापरं नान्यार्थम्। १२. अत्र व्यवहितेऽपि कार्यमिष्यते। १३. स्थाननियमाभावादिह याथाकाम्यम्।

६७. पूजनात्पूजितमनुदात्तं[1] काष्ठादिभ्यः । काष्ठाध्यापकः । * मलोपश्च वक्तव्यः * दारुणाध्यापकः[2] । अज्ञाताध्यापकः ।

६८. सगतिरपि तिङ्[3] । यत्काष्ठं प्रपचति । * गतिग्रहण उपसर्गग्रहणम् * नेह :— यत्काष्ठं शुक्लीकरोति ।

६९. कुत्सने च सुप्यगोत्रादौ । पचति पूति । प्रपचति पूति । पचति मिथ्या । नेह :— प्रपचति शोभनम् । पचति क्लिश्नाति । पचति गोत्रम् । * क्रियाकुत्सन इति वाच्यम् * नेह :— पचति पूतिर्देवदत्तः । * पूतिश्चानुबन्ध[4] इति वाच्यम् * वा बह्वर्थमनुदात्तमिति वाच्यम् * पचन्ति पूति ।

७०. गतिर्गतौ । अभ्युद्धरति । नेह :— दत्तः पचति ।

७१. तिङि चोदात्तवति[5] । यत्प्रपचति । नेह :— प्रपचति ।

७२. आमन्त्रितं पूर्वमविद्यमानवत् । अग्ने तव । अग्न इन्द्र वरुण देवास्मान् पाहि । अग्ने नय ।

७३. नामन्त्रिते समानाधिकरणे सामान्यवचनम्[6] । हरे दयालो नः पाहि । अग्ने तेजस्विन् ।

७४. विभाषितं विशेषवचने । अत्र भाष्यम्—बहुवचनमिति वक्ष्यामीति । यूयं प्रभवः । देवाः शरण्याः युष्मान् भजे वो भजे वा । नेह :— माणवक जटिलक ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते

अष्टमाध्यायस्य प्रथमपादः समाप्तः ।



---

१. समासान्तोदात्तत्वापवादः । काष्ठादयोऽद्भुतवचनाः सन्तः पूजनवचनाः । पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम् । एतदेव ज्ञापकमत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयत इति । २. दारुणमध्यापक इत्यसमासेऽपि सूत्रप्रवृत्तिः । ३. काष्ठादिभ्य इति वर्तते । तिङ्ङतिङ इति निघातस्य निपातैर्यदिति निषेधे प्राप्ते विधिरयम् । सगतिग्रहणाच्च गतिरपि निहन्यते । ४. तेनायं चकारानुबन्धत्वादन्तोदात्तः । ५ गतिरनुदात्त इत्यर्थः । ६. विशेष्यमित्यर्थः ।

# अथाष्टमाध्यायस्य द्वितीयपादः ।



१. पूर्वत्रासिद्धम्[1] । अधिकारोऽयं[2] विधिश्च । हर इह । विष्ण इह श्रिया उद्यतः । गुरा उत्कः ।

२. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । राजभ्याम्, राजभिः । राज[3]वती । पञ्च ब्राह्मण्यः । वृत्रहभ्याम्[4], वृत्रहभिः । नियमार्थमिदम् । नलोप एष्वेवासिद्धो नान्यत्र :-- राजाश्वः । राजीयति । राजायते ।

३. न मु ने[5] । अमुना । * सिज्लोप एकादेशे सिद्धो वक्तव्यः * आतीत् । अलावीत् । * निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः । वृक्णः[6] । वृक्णवान् । क्षीबः[7] । * श्चुत्वं धुटि सिद्धं वक्तव्यम् * अट्श्च्योतति । रट्श्च्योतति ।

४. उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य । अभ्यभि[8] हि । खलप्व्याशा । कुमार्यः ।

५. एकादेश उदात्तेनोदात्तः[9] । अग्नी । वायू । क्व वोऽश्वाः ।

६. स्वरितो वानुदात्ते पदादौ । वीदं[10] ज्योतिर्हृदये । सूत्थितः । वीक्षते । अस्य श्लोको दिवीयते । तेऽवदन्[11] । सोऽयमागात् ।

---

१. सपादसप्ताध्याय्यामित्यर्थः । परमित्यर्थाद् गम्यते । तेन त्रिपादीत्यर्थः । २. तेन त्रिपाद्यामपि पूर्वं प्रति परमसिद्धमित्यर्थोऽपि । ३. नलोपस्यासिद्धत्वादन्तोऽवत्या इति न भवति । ४. अत्र नलोपस्यासिद्धत्वाद्ध्रस्वस्य पिति कृतीति तुग् न भवति । ५. नाभावे कर्त्तव्ये कृते च इत्यर्थः । तेन मुभावस्यासिद्धत्वाभावाद्घिसंज्ञया नाभावः । कृते च नाभावेऽसिद्धत्वाभावात्सुपि चेति दीर्घो न । ६. नत्वस्यासिद्धत्वाद् व्रश्चेति षत्वं प्राप्तम् । कुत्वे कर्त्तव्ये त्वसिद्धत्वमेव । ७. स्वरप्रत्ययेड्विधिष्विदमुदाह्रियते । ८. प्रथमोऽभिशब्दोऽन्तोदात्तः । द्वितीयोऽनुदात्तः । अस्य स्वरितस्यासिद्धत्वाच्छेषनिघातो न । ९. अनुदात्तस्येति वर्त्तते । १०. पक्षे पूर्वेणोदात्तः । व्यवस्थितविभाषात्वात्त्रादिकारयोः स्वरितः । दीर्घप्रवेशे पक्षे तूदात्तः । ११. एङः पदान्तादिति पूर्वरूपे स्वरित एव ।

७. नलोपः[1] प्रातिपदिकान्तस्य । राजा । राजभ्याम् । यूयभ्याम् । राजता । नेह :- अहन् । राजानौ ।

८. न ङिसम्बुद्ध्योः । परमे व्योमन्[2] । हे राजन् । हे दण्डिन् । * ङावुत्तरपदे प्रतिषेधो वक्तव्यः * चर्मतिलः[3] । ब्रह्मनिष्ठः । * वा नपुंसकानाम् * हे सुपथिन् , हे सुपथि । हे चर्मन् , हे चर्म ।

९. मादुपधायाश्च[4] मतोर्वोऽयवादिभ्यः[5] । किंवान् । शंवान् । ज्ञानवात् । विद्यावान् । लक्ष्मीवान् । शमीवान् । यशस्वान् । भास्वान् । नेह :- यवमान् । भूमिमान् ।

१०. झयः । विद्युत्वान्[6] बलाहकः । मरुत्वान् इन्द्रः ।

११. संज्ञायाम् । अहीवती[7] । मुनीवती ।

१२. आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । आसन्दीवान् ग्रामः । अष्ठीवान्नाम ऋषिः । चक्रीवान्नाम राजा । कक्षीवान् ऋषिः । रुमण्वान् पर्वतः । चर्मण्वती नदी । असंज्ञायान्तु आसन्नवान् । अस्थिमान् । चक्रवान् । कक्ष्यावान् । लवणवान् । चर्मवती ।

१३. उदन्वानुदधौ च[8] । उदन्वान् समुद्र ऋषिश्च ।

१४. राजन्वान् सौराज्ये । राजन्वती भूः । अन्यत्र राजवान् ।

१५. छन्दसीरः । हरीवते हर्यश्वाय । हरिवो मेदिनं त्वा । गीर्वान् ।

१६. अनो नुट् । अक्षण्वन्तः कर्णवन्तः । अस्थन्वन्तं यदनस्था ।

१७. नाद् घस्य । सुपथिन्तरः । * भूरिदाव्नस्तुड्वाच्यः * भूरिदावत्तरो जनः । * ईद्रथिनः * रथीतमं रथीनाम् ।

---

१. पदस्येति वर्त्तते । नेति प्रातिपदिकेति च लुप्तषष्ठ्यन्तम् । २. छन्दस्त्वात् सुपां सुलुगिति लुक् । ३. चर्मणि तिला अस्य । ४. प्रातिपदिकपदमनुवर्त्त्य मादित्यनेन विशिष्यते । तेन मकारान्तादवर्णान्ताच्च प्रातिपदिकात्तदुपधाच्चेत्यर्थः । ५. यवादिराकृतिगणः । ६. तसौ मत्वर्थ इति भत्वादपदान्तत्वान्न जश्त्वम् । ७. शरादीनां चेति दीर्घः । ८. चात्संज्ञायामपि ।

१८. कृपो रो लः।[1] कल्पते। कल्सा। चक्लृपे। क्लृप्तः।[2]

१९. उपसर्गस्यायतौ। प्लायते। पलायते। निर्-निलयते। दुर्-दुलयते। निस्दुसोस्तु निरयते।[3] दुरयते।

२०. ग्रो यङि। जेगिल्यते।

२१. अचि विभाषा। गिलति, गिरति। निगलनम्, निगरणम्।

२२. परेश्च घाङ्कयोः।[4] परिघः, पलिघः। पर्यङ्कः, पल्यङ्कः।

२३. संयोगान्तस्य लोपः।[5] गोमान्। यवमान्। कृतवान्। हृतवान्। * यणः प्रतिषेधो वाच्यः * सुद्ध्युपास्यः। दध्यत्र। मध्वत्र।

२४. रात्सस्य। क्रोष्टुः। पितुः। मातुः। नियमार्थमिदम्। रात्सस्यैव लोपो नान्यस्येति। नेह :- ऊर्क्, ऊर्ग्। अमार्ट्।[6]

२५. धि च। एधिताध्वे। अलविध्वम्। ऐधिध्वम्।

२६. झलो झलि। असैद्धाम्। अरुद्धम्। अभित्त। अभैत्ताम्। नेह :- अभित्साताम्।

२७. ह्रस्वादङ्गात्। अकृत। अकृथाः। अहृत। अहृथाः। नेह :- अच्योष्ट।

२८. इट ईटि। आतीत्। असेवीत्। अक्रोषीत्।

२९. स्कोः संयोगाद्योरन्ते च।[7] भ्रट्, भ्रड्। लग्नः। तट्, तड्। तष्टवान्।

३०. चोः कुः। पक्ता। पक्तुम्। सुयुक्। वाक्।

३१. हो ढः। लिट्, लिड्। सोढा। वोढा। तुराषाट्।

३२. दादेर्धातोर्घः।[8] धुक्, धुग्। दग्धा। दग्धुम्। औपदेशिकस्य दादेर्धातोर्ग्रहणान्नेह :- दामलिट्।[9] इह तु स्यादेव अधोक्।

---

१. कृप उः इति छेदः। कृपे रेफस्य ऋकारावयवरेफस्य च ल इत्यर्थः। २. कृपा-कृपाण-कृपणादौ तु कृपणादीनां प्रतिषेध इति भाष्यम्। ३. रुत्वस्यासिद्धत्वाद्रेफाभावादिति भावः। प्रत्यय इति त्विगो रूपम्। ४. घ इति स्वरूपग्रहणमङ्केष्यते न तग्रहमपौ घ इति। ५. पदस्येति वर्त्तते। ६. मृजेर्लङि। ७. पदस्येति वर्त्तते। झलि चेति। ८. दादेरित्यस्यावृत्त्यायमर्थो लभ्यः। ९. दामलिहमात्मन इच्छति दामलिह्यति ततः क्विप्।

३३. वा द्रुहमुहष्णुहष्णिहाम्। ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्। द्रोग्धा, द्रोढा। मित्रध्रुक्, मित्रध्रुट्। मुक्, मुग्, मुट्, मुड्। मोग्धा, मोढा। स्नुक्, स्नुट्। स्नोग्धा, स्नोढा। स्निक्, स्निट्। स्नेग्धा, स्नेढा।

३४. नहो धः। उपानत्। परीणत्। नद्धा। नद्धव्यम्।

३५. आहस्थः। आत्थ। झलीत्येव[4]। नेह :- आह, आहतुः।

३६. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। व्रष्टा। व्रष्टुम्। व्रष्टव्यम्। भ्रष्टा। भ्रष्टुम्। भृट्। स्रष्टा। स्रष्टुम्। रज्जुसृट्। मार्ष्टा। मार्ष्टुम्। कंसपरिमृट्। यष्टा। यष्टुम्। देवेट्। उपयट्। राट्। सम्राट्। स्वराट्। विभ्राट्। फणादेरेव भ्राजेर्ग्रहणादन्यस्य[1] न। विभ्राक्[2]। प्रष्टा। प्रष्टुम्। प्राट्। वेष्टा। वेष्टुम्। विट्। * परौ व्रजेः षः पदान्ते *[3] परिव्राट्।

३७. एकाचो बशो भष् झषन्तस्य स्ध्वोः। धुत्, धुद्। धोत्स्यते। धुक्। धोक्ष्यते। ध्रुट्। अजर्घाः। गर्धप्। नेह :- दामलिट्। दास्यति।

३८. दधस्तथोश्च। धत्तः। धत्थः। धत्से। धद्ध्वम्। नेह :- दधाति।

३९. झलां जशोऽन्ते[4]। वागीशः। वाग्घरिः।

४०. झषस्तथोर्धोऽधः। लब्धा। लब्धुम्। अदुग्ध। अदुग्धाः। लेढा। लेढुम्। नेह :- धत्तः।

४१. षढोः कः सि। वेवेक्षि। वेक्ष्यति। अवेक्ष्यत्। लेक्षि। लेक्ष्यति। लिलिक्षति।

४२. रदाभ्यां निष्ठातो नः पूर्वस्य च दः। शीर्णः। विस्तीर्णः। निगीर्णः। छिन्नः। भिन्नः। शीर्णवान्। विस्तीर्णवान्। भिन्नवान्।

४३. संयोगादेरातो धातोर्यण्वतः। द्राणः। स्त्यानः। ग्लानः।

४४. ल्वादिभ्यः। लूनः। लूनवान्। जीनः। धूनः। * ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः * कीर्णिः। लूनिः। धूनिः। * दुग्वोर्दीर्घश्च * दूनः। गूनः। * पूञो विनाशे * पूना[5] यवाः। पूतमन्यत्। * सिनोतेर्ग्रासकर्मकर्तृकस्य * सिनो ग्रासः। नेह :- सिता पाशेन सूकरी। सितो ग्रासो देवदत्तेन।

---

१. राजेः साहचर्यादिति भावः। २. एजृ-भ्रेजृ-भ्राजृ-दीप्तावित्यस्येदम्। ३. परावुपपदे व्रजेः क्विप्, दीर्घः, पदान्ते षश्च। इदमुणादौ द्वितीयपाद उपलभ्यते। ४. झलीति निवृत्तम्। ५. विनष्टा इत्यर्थः।

४५. ओदितश्च। भुजो—भुग्नः। ओलस्जी—लग्नः। टुओश्वि—उच्छूनः। ओविजी—उद्विग्नः। सूनः[१]। दूनः। दीनः। उड्डीनः[२]।

४६. क्षियो दीर्घात्। क्षीणस्तपस्वी[३]। क्षीणवान्। नेह :— क्षितः कामो मया।

४७. श्योऽस्पर्शे। शीनं घृतम्। संश्यानो वृश्चिकः[४]। नेह :— शीतं जलम्। शीतो वायुः।

४८. अञ्चोऽनपादाने। समक्नः[५]। नेह :— उदक्तमुदकं कूपात्।

४९. दिवोऽविजिगीषायाम्। आद्यूनः। परिद्यूनः। नेह :— द्यूतम्।

५०. निर्वाणोऽवाते। निर्वाणोऽग्निर्मुनिश्च। नेह :— निर्वातो वातः।

५१. शुषः कः। शुष्कः। शुष्कवान्।

५२. पचो वः। पक्वः। पक्ववान्।

५३. क्षायो मः। क्षामः। क्षामवान्।

५४. प्रस्त्योऽन्यतरस्याम्। प्रस्तीमः, प्रस्तीतः। नेह :— स्त्यानः।

५५. अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः। ञिफला—फुल्लः। फुल्लवान्[६]। क्षीबो मत्तः। कृशस्तनुः। उल्लाघो नीरोगः। नेह :— प्रफुल्तः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। * उत्फुल्लसंफुल्लयोरुपसंख्यानम् * उत्फुल्लः। संफुल्लः।

५६. नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्। नुन्नः, नुत्तः। विन्नः[७], वित्तः। उन्नः, उत्तः। त्राणः, त्रातः। घ्राणः, घ्रातः। ह्रीणः, ह्रीतः।

५७. न ध्याख्यापॄमूर्छिमदाम्। ध्यातः। ध्यातवान्। ख्यातः। पूर्तः। मूर्तः। मत्तः।

५८. वित्तो भोगप्रत्यययोः। वित्तं धनम्। वित्तः पुरुषः। नेह :— विन्नः[८]।

---

१. स्वादय ओदित इत्युक्तम्। २. ओदित्मध्ये डीङः पाठसामर्थ्यान्नेट्। ३. निष्ठायामण्यदर्थे इति दीर्घः। ४. शीतात्संकुचित इत्यर्थः। ५. उदितो वेति क्त्वायां वेट्त्वादिह नेट्। ६. प्रफुल्लामित्यादौ तु फुल्ल विकसने पचाद्यच्। ७. विद विचारण इति रौधादिकस्येह ग्रहणम् उन्दिना परेण साहचर्यात्। विद्यते-र्विन्न इत्येव। वेत्तेस्तु विदितः। ८. विभाषा गमहनेति क्सौ वेट्त्वादिह नेट्।

५९. भित्तं शकलम् । भित्तं पतति । अन्यत्र भिन्नम् ।

६०. ऋणमाधमर्ण्ये । ऋणं धारयति । ऋतमन्यत् ।

६१. नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि । नसत्तमञ्जसा । निषत्तमन्य चरतः । अनुत्तमा ते मघवन् । प्रतूर्तम् । सूर्तम् । गूर्तम् । लोके तु असन्नम् । निषण्णम् । अनुन्नम् । प्रतूर्णम् । सूर्णम् । गूर्णम् ।

६२. क्विन्प्रत्ययस्य कुः[1][2] । घृतस्पृक् । मन्त्रस्पृक् । युङ् । स्पृक् ।

६३. नशेर्वा[1] । नक्, नग्, नट्, नड् । नग्भ्याम्, नड्भ्याम् । पदस्येत्येव । नेह :– नशौ ।

६४. मो नो धातोः । प्रशान्[3] । प्रतान् । प्रदान् । नेह :– इदम् । प्रशामौ ।

६५. म्वोश्च । अगन्म[4] । अगन्व । जगन्वान् । क्षमूष्-चक्षण्महे । चक्षण्वहे ।

६६. ससजुषो रुः । जश्त्वापवादः । अग्निरत्र । वायुरत्र । शिवोऽर्च्यः । शिवो वन्द्यः ।

६७. अवयाः श्वेतवाः पुरोडाश्च[5] । हे अवयाः । हे श्वेतवाः । हे पुरोडाः ।

६८. अहन्[6] । अहोभ्याम्, अहोभिः । तदन्तस्यापि । दीर्घाहा[7] निदाघः । हे दीर्घाहो निदाघ । नेह :– दीर्घाहानौ । दीर्घाहानः । * रूपरात्रिरथन्तरेषु रुत्वं वाच्यम् * अहोरूपम् । अहोरात्रिः । अहोरात्रः[8] । अहोरथन्तरम् ।

६९. रोऽसुपि । अहर्भाति । अहरहः । अहर्गणः । नेह :– अहोभ्याम् ।

७०. अम्नरूधरवरित्युभयथा छन्दसि । अम्न एव[9], अम्नरेव । ऊध एव, ऊधरेव । अव एव, अवरेव । * अहरादीनां पत्यादिषूपसंख्यानम् * अहर्पतिः, अहःपतिः[10] । गीर्पतिः, गीष्पतिः । धूर्पतिः, धूःपतिः ।

---

१. पदस्येति वर्त्तते । २. क्विनः कुरिति सिद्धे प्रत्ययग्रहणात्क्विन्प्रत्ययो यस्माद्विहित इति बहुव्रीह्याश्रयणात्क्विप्यपि कुत्वम् । ३. नत्वस्यासिद्धत्वान्नलोपो न । ४. गमेर्लङि बहुलं छन्दसीति शपो लुक् । ५. सम्बुद्धौ दीर्घार्थमेते निपात्यन्ते । श्वेतवहादीनां डस्पदस्येति डस्प्रत्ययान्ता एते । ६. नलोपमकृत्वा निर्देशो ज्ञापको नलोपाभावो यथा स्यादिति । तेन अहः, अहोभ्यामित्यादौ रुत्वरुत्वयोरसिद्धत्वान्नलोपः प्राप्तो न भवति। ७. दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः । ८. एकदेशविकृतस्यानन्यत्वात् । ९. पक्षे रुत्वे यत्वे लोपः । १० पक्षे उपध्मानीयः ।

७१. भुवश्च महाव्याहृतेः । भुवरिति, भुव इति ।[1]

७२. वसुस्रंसुध्वंस्वनडुहां दः ।[2] विद्वद्भ्याम, विद्वद्भिः । पपिवद्भ्याम् । उखास्रत्, उखास्रद्भ्याम् । पर्णध्वत्, पर्णध्वद्भ्याम् । अनडुद्भ्याम्, अनडुद्भिः । स्वनडुत् । नेह :– विद्वान् ।

७३. तिप्यनस्तेः ।[3] अचकात्, अचकाद् । नेह :– आप एवेदं सलिलं सर्वमाः ।[4]

७४. सिपि धातो रुर्वा । अचकाः, अचकात्, अचकाद् ।

७५. दश्च । अभिनः, अभिनत्, अभिनद् । अच्छिनः, अच्छिनत् ।

७६. र्वोरुपधाया दीर्घ इकः । गीः, गीर्भ्याम्, गीर्भिः । धूः । पूः । आशीः ।

७७. हलि च ।[5] आस्तीर्णम् । विशीर्णम् । अवगूर्णम् । दीव्यति । सीव्यति । धातोरित्येव । नेह :– दिवमिच्छति, दिव्यति । चतुर इच्छति, चतुर्यति ।

७८. उपधायां च ।[6] उर्द—ऊर्दते, ऊर्दांचक्रे । कुर्द—कूर्दते । खुर्द—खूर्दते । हुर्छा—हूर्छिता । नेह :– विव्यतुः ।[7] विव्युः ।

७९. न भकुर्छुराम् । धुरि साधुः, धुर्यः । दिव्यम् । कुर्यात् । छुर्यात् ।

८०. अदसोऽसेर्दादु दो मः ।[8] अमुम्, अमू, अमून् । अमुना, अमूभ्याम् । नेह :– अदस्यति ।

अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥

अमुमुयङ्, अदमुयङ्, अदद्रयङ् ।

---

१. भुवरित्यव्ययमन्तरिक्षवाचि । २. इह ससजुषो रुरित्यतः स इति वर्त्तते । तेन सान्तस्य वस्वन्तस्येत्यर्थः । ३. इह पदस्येति स इति च वर्तते । तेन पदान्तस्य सस्येत्यर्थः । ४. आ इति अस्तेर्लङि तिपि बहुलं छन्दसीति ईड् न कृतः । ५. अपदान्तार्थ एष आरम्भः । ६. हलीति वर्तते । ७. यणादेशस्य स्थानिवत्त्वेन हल्परत्वाभावात् । न च दीर्घविधौ तन्निषेध इति वाच्यम् तत्र स्वरदीर्घयलोपेषु लोपरूपाजादेशस्यैव ग्रहणात् । ८. उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः । आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः ।

८१. एत ईद् बहुवचने । अमी । अमीभिः । अमीभ्यः । अमीषाम् ।

८२. वाक्यस्य टेः प्लुत उदात्तः । अधिकारोऽयमा पादपरिसमाप्तेः ।

८३. प्रत्यभिवादे[1]ऽशूद्रे । अभिवादये देवदत्तोऽहम् । भो आयुष्मानेधि देवदत्त ३ । * स्त्रियां न * अभिवादये गार्ग्यहम् । भो आयुष्मती भव गार्गि । नेह :— आयुष्मानेधि । * भोराजन्यविशां वेति वाच्यम् * आयुष्मानेधि[2] भोः ३ । आयुष्मानेधीन्द्रवर्म३न् । आयुष्मानेधीन्द्रपालित ३ ।

८४. दूराद्धूते[3] च । सक्तून् पिब देवदत्त ३ । यत्र वाक्यान्ते सम्बोधनपदं तत्रायं प्लुत इष्यते । नेह :— देवदत्त सक्तून् पिब ।

८५. हैहेप्रयोगे हैहयोः । है ३ राम, राम है ३ । हे ३ राम, राम हे ३ ।

८६. गुरोरनृतोऽनन्त्यस्याप्येकैकस्य[4] प्राचाम् । दे३वदत्त , देवद३त्त , देवदत्त ३ । नेह :— कृष्ण ३ ।

८७. ओमभ्यादाने[5] । ओ३मग्निमीळे पुरोहितम् । नेह :— ओमित्येकाक्षरं ब्रह्म ।

८८. ये यज्ञकर्मणि । ये ३ यजामहे । स्वाध्यायकाले तु न । ये यजामहे ।

८९. प्रणवष्टेः । अपां रेतांसि जिन्वतो३म् ।

९०. याज्यान्तः[6] । जिह्वामग्ने चकृषे हव्यवाहा३म् ।

९१. ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः । अग्नयेऽनुब्रू३हि । अग्ने गोमयानि प्रे३ष्य । अस्तु श्रौ३षट् । सोमस्याग्ने वीही वौ३षट् । अग्निमा३वह ।

९२. अग्नीत्प्रेषणे परस्य च । ओ३ श्रा३वय ।

९३. विभाषा पृष्टप्रतिवचने हेः । अकार्षीः कटम् ? अकार्षं हि ३, अकार्षं हि । नेह :— कटं करिष्यति हि ।

९४. निगृह्यानुयोगे च । अद्यामावास्येत्यात्थ ३ ।

९५. आम्रेडितं भर्त्सने । चोर चोर ३ दस्यो दस्यो ३ घातयिष्यामि त्वाम् ।

---

१. नाम गोत्रं वा यत्र प्रत्यभिवादवाक्ये प्रयुज्यते तत्रैव प्लुत इष्यते । २. पक्षे प्लुतरहितानि । ३. हूतमाह्वानम् । ४. एकैकग्रहणं पर्यायार्थम् । प्राचामिति योगं विभज्य सर्वः प्लुतो विकल्प्यते । ५. अभ्यादानमारम्भः । ६. याज्या नाम केचिन्मन्त्राः । इहान्तग्रहणाद् याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः प्लुतो न भवति ।

९६. अङ्गयुक्तं तिङाकाङ्क्षम्। अङ्ग कूज३ इदानीं ज्ञास्यसि। नेह :- अङ्ग[1] पच।

९७. विचार्यमाणानाम्[2]। होतव्यं दीक्षितस्य गृहा३इ। न होतव्य३-मिति।

९८. पूर्वं तु भाषायाम्[3]। अहिर्नु३ रज्जुर्नु।

९९. प्रतिश्रवणे[4] च। गां देहि भोः। हन्त ते ददामि३। नित्यः शब्दो भवितुमर्हति३। दत्त किमात्थ३।

१००. अनुदात्तं प्रश्नाभिपूजितयोः। अग्निभूत३इ। पट३उ। शोभनः खल्वसि माणवक३।

१०१. चिदिति चोपमार्थे प्रयुज्यमाने। अग्निचिद्भाया३त्[5]। नेह :- कथंचिदाहुः।

१०२. उपरिस्विदासीदिति च। उपरि स्विदासी३त्[6]।

१०३ स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु। अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्। अभिरूपक३ अभिरूपक शोभनोऽसि। अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म। शाक्तीक३ शाक्तीक रिक्ता ते शक्तिः।

१०४ क्षियाशीःप्रैषेषु[7] तिङाकाङ्क्षम्। स्वयं ह रथेन याति३ उपाध्यायं पदातिं गमयति। पुत्रांश्च लप्सीष्ट३ धनं च तात। कटं कुरु३ ग्रामं गच्छ। नेह :- दीर्घायुरसि।

१०५. अनन्त्यस्यापि प्रश्नाख्यानयोः। अगमः३ पूर्वा३न् ग्रामा३न्? अगम३म् पूर्वा३न् ग्रामा३न्।

१०६. प्लुतावैच इदुतौ[8]। ऐ४तिकायन। औ४पगव।

---

१. नैतदपरमाकाङ्क्षति। २. प्रमाणेन वस्तुपरीक्षणं विचारः। ३. भाषाग्रहणात्पूर्वयोगश्छन्दसीति गम्यते। ४. प्रतिश्रवणमभ्युपगमः, प्रतिज्ञानं, श्रवणाभिमुख्यञ्च। ५. अग्निरिव भायादित्यर्थः। ६. अधः स्विदासी३दित्यत्र तु विचार्यमाणानामिति उदात्तः प्लुतः। ७. क्षिया आचारभेदः। ८. अ + इ३ = ऐ४ चतुर्मात्रावत्र ऐचौ संपद्येते।

१०७. एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ। * प्रश्नाभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव * अगमः ३ पूर्वा३न् ग्रामा३न् अग्निभूत३इ ? करोषि पट३उ। होतव्यं दीक्षितस्य गृह३इ। न होतव्य३म् इति। आयुष्मानेधि अग्निभूत३इ। स्तोमैर्विधेमाग्नया३इ। * आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः * अग्न३इ पत्नो वः।

१०८. तयोर्य्वावचि संहितायाम्। अग्न३याशा। अग्न३यिन्द्रम्। पट३वुदकम्। नेह :- अग्ना३इवरुणौ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
अष्टामाध्यायस्य द्वितीयपादः समाप्तः।



१. अदूराद्धूत इति न वक्तव्यं पदान्तग्रहणं तु कर्त्तव्यम्। इह मा भूत् भद्रं करोषि गौरिति। २. संहितामित्याध्यायसमाप्तेरधिकारः।

# अथाष्टमाध्यायस्य तृतीयपादः ।



१. मतुवसो रु सम्बुद्धौ छन्दसि । इन्द्र मरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । मीढ्वस्तोकाय तनयाय । इन्द्र साह्वः । * वन उपसंख्यानम् * यस्त्वायन्तं वसुना प्रातरित्वः । * विभाषा भवद्भगवदघवतामोच्चावस्य * हे भोः, हे भवन् । हे भगोः , हे भगवन् । हे अघोः , हे अघवन् ।[1]

२. अत्रानुनासिकः पूर्वस्य तु वा । सँस्कर्त्ता । सँस्कर्त्तुम् । सँस्कर्त्तव्यम् ।

३. आतोऽटि नित्यम् । महाँ इन्द्रः । महाँ असि ।

४. अनुनासिकात्परोऽनुस्वारः ।[2] संस्कर्त्ता । संस्कर्त्तुम् । संस्कर्त्तव्यम् ।

५. समः सुटि ।[3] * संपुंकानां सो वक्तव्यः । सँस्स्कर्त्ता, संस्स्कर्त्ता । * समो वा लोपमेके * इति भाष्यम् । सँस्कर्त्ता, संस्कर्त्ता ।[4]

६. पुमः खय्यम्परे । पुँस्कोकिलः, पुंस्कोकिलः । पुँस्कामा, पुंस्कामा ।

७. नश्छव्यप्रशान् । शार्ङ्गिँश्छिन्धि, शार्ङ्गिंश्छिन्धि । चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । नेह :— प्रशान् तनोति । भवान्त्सरुः ।

८. उभयथर्क्षु । पशूँस्ताँश्चक्रे । तस्मिन् त्वा दधाति ।

९. दीर्घादटि समानपादे ।[5] देवाँ अच्छा सुमती । महाँ इन्द्रो य ओजसा । उभयथेत्यनुवृत्तेर्नेह :—आदित्यान्याचिषामहे ।

१०. नॄन् पे । नॄँः पाहि,[6] नॄंः पाहि , नॄन्पाहि । नॄँः प्रीणीहि, नॄंः प्रीणीहि , नॄन्प्रीणीहि ।

११. स्वतवान्पायौ । स्वतवाँः पायुरग्ने ।

---

१. सामान्येन छन्दसि भाषायाञ्चेदम् । यद्वा भो भगो इति निपातनात् सिद्धम् । २. अनुनासिकं विहाय पक्षान्तर इत्यर्थः । ३. रु इति वर्तते । ४. अस्य लोपस्यापि रुप्रकरणस्थत्वाद्वानुनासिकानुस्वारौ । ५. तौ चेन्नाटौ । ६. पक्षे कुप्वोः ≍क≍पौ चेत्यपि ।

१२. कानाम्रेडिते । काँस्कान्[1], कांस्कान् ।

१३. ढो[2] ढे लोपः । गाढा[3] । लेढि । लीढः । उपगूढः ।

१४. रो रि । पुना रमते । हरी रम्यः । शम्भू राजते ।

१५. खरवसानयोर्विसर्जनीयः । विष्णुस्त्राता । रामः ।

१६. रोः सुपि । यशःछ । पयःछ । छपि रोरेव रेफस्येति । नेह :- गीर्षु । पूर्षु ।

१७. भोभगोअघोअपूर्वस्य योऽशि । भो देवाः । भगो नमस्ते । अघो याहि । देवा इह, देवायिह ।

१८. व्योर्लघुप्रयत्नतरः[4] शाकटायनस्य । भोयच्युत । भगोयत्र । अघोयत्र । कयास्ते । असावादित्यः । द्वावत्र ।

१९. लोपः शाकल्यस्य । विष्ण इह, विष्णविह । हर इह । हरयिह, क आस्ते, कयास्ते ।

२०. ओतो गार्ग्यस्य[5] । भो अच्युत । भो अत्र । भगो अत्र । अघो अत्र ।

२१. उञि च पदे । स उ एकाग्निः । नेह :- तन्त्रयुतम्[6] ।

२२ हलि सर्वेषाम् । भो देवाः । भो लक्ष्मि । भो विद्वद्वृन्द । भगो नमस्ते । अघो याहि । देवा नम्याः । देवा यान्ति ।

२३. मोऽनुस्वारः[7] । हरिं वन्दे । वनं हसति । पदस्येति नेह :- गम्यते । शाम्यते ।

२४. नश्चापदान्तस्य झलि । यशांसि । आक्रंस्यते ।

२५. मो राजि समः क्वौ । सम्राट् । साम्राज्यम् ।

२६. हे मपरे वा । किम् ह्मलयति, किं ह्मलयति । * यवलपरे यवला वा * किय्ँ ह्यः, किं ह्यः । किव्ँ ह्वलयति, किं ह्वलयति । किल्ँ ह्लादयति, किं ह्लादयति ।

---

१. संपुंकानामिति सः । कस्कादौ पाठाद्वा । २. इह पदस्येति न सम्बद्धम-सम्भवात् । ३. ष्टुत्वस्यात्र सिद्धत्वमाश्रयाद् द्रष्टव्यम् । ४. यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यम् । ५. गार्ग्यग्रहणं पूजार्थम् । ६. उतमिति वेञः क्तप्रत्यये रूपम । ७. पदस्येति वर्त्तते ।

२७. नपरे नः । किन्ह्नुते । किंह्नुते ।

२८. ङ्णोः कुक्टुक् शरि । प्राङ्क्षष्ठः[१], प्राङ्षष्ठः । सुगण्ट्षष्ठः, सुगण्षष्ठः ।

२९. डः सि धुट्[२] । षट्त्सन्तः, षट्सन्तः । षट्त्सु, षट्सु ।

३०. नश्च[३] । सन्त्सः, सन्सः । महान्त्साये, महान्साये ।

३१. शि तुक्[४] । सञ्च्छम्भुः, सञ्च्शम्भुः[५], सञ्छम्भुः, सञ्शम्भुः ।

३२. ङमो ह्रस्वादचि ङमुण्नित्यम् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ।

३३. मय उञो वो वा । किम्वुक्तम्, किमुउक्तम् ।

३४. विसर्जनीयस्य सः[६] । विष्णुस्त्राता । वृक्षस्तत्र । नेह :– वृक्षः ।

३५. शर्परे विसर्जनीयः । कःत्सरुः । घनाघनः क्षोभणः[७] । वासःक्षौमम् ।

३६. वा शरि । हरिश्शेते, हरिःशेते । * खर्परे शरि वा विसर्गलोपः * रामस्थाता[८] । हरिस्फुरति ।

३७. कुप्वोः ≍क≍पौ च[९] । क≍करोति, कःकरोति । क≍खनति, कःखनति । क≍पचति, कःपचति । क≍फलति, कःफलति ।

३८. सोऽपदादौ । * पाशकल्पककाम्येष्विति वाच्यम् * पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति । * अनव्ययस्येति वाच्यम् * प्रातःकल्पम् । नेह :– पयः कामयते । पयः पिबति । * काम्ये रोरेवेति वाच्यम् * नेह :– गीःकाम्यति । धूःकाम्यति ।

---

१. चयो द्वितीया इति द्वितीयत्वे प्राङ्ख्षष्ठः सुगण्ठ्षष्ठ इत्यपि । २. पञ्चम्यन्तात्परत्वात्सीति सस्येति सम्पद्यते । ३. इहापि सीति वर्त्तते । न इति पञ्चमीति नान्तात् सस्येत्यर्थः । ४. इह न इत्यनुवृत्तमर्थवशात्षष्ठ्यन्तमिति तस्यैव तुक् । ५. शश्छोऽटीति वा छत्वम् । ६. इह खरवसानयोरित्यतः मण्डूकप्लुत्या खरीत्यनुवर्त्तते । ७. इह कुप्वोरिति जिह्वामूलीयो न । ८. पक्षे विसर्गे सत्वे च त्रैरूप्यम् । ९. चाद्विसर्गः । अत्र कपावुच्चारणार्थौ ।

३९. इणः षः । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्कास्यति ।

४०. नमस्पुरसोर्गत्योः । नमस्करोति, नमः करोति । पुरस्करोति । नेह :— पुरः प्रवेक्ष्यन्ते ।

४१. इदुदुपधस्य चाप्रत्ययस्य । निष्प्रत्यूहम् । आविष्कृतम् । दुष्कृतम् । नेह :— अग्निः करोति । वायुः करोति । एकादेशशास्त्रनिमित्तकस्य न षत्वम् । मातुः कृपा । पितुः कृपा । * मुहुसः प्रतिषेधः * मुहुःकामा ।

४२. तिरसोऽन्यतरस्याम् । तिरस्कर्त्ता, तिरःकर्त्ता । गतेरित्येव । नेह :— तिरःकृत्वा काण्डं गतः ।

४३. द्विस्त्रिश्चतुरिति कृत्वोऽर्थे । द्विष्करोति, द्विःकरोति । त्रिष्करोति, त्रिःकरोति । चतुष्पचति, चतुःपचति । नेह :— चतुष्कपालः[४] ।

४४. इसुसोः सामर्थ्ये । सर्पिष्करोति, सर्पिः करोति । धनुष्करोति, धनुः करोति । नेह :— तिष्ठतु सर्पिः पिब त्वमुदकम् ।

४५. नित्यं समासेऽनुत्तरपदस्थस्य । सर्पिष्कुण्डिका । धनुष्कपालम् । नेह :— परमसर्पिःकुण्डिका ।

४६. अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्पात्रम् । अयस्कुशा । अयस्कर्णी । नेह :— गीःकारः । स्वःकामः । समास इत्येव । नेह :— यशः करोति । अनुत्तरपदस्थस्येत्येव । नेह :— परमयशःकारः ।

४७. अधःशिरसी पदे । अधस्पदम् । शिरस्पदम् । समास इत्येव । नेह :— अधः पदम् । शिरः पदम् ।

४८. कस्कादिषु[५] च । कस्कः । कौतस्कुतः । भ्रातुष्पुत्रः ।

४९. छन्दसि वाऽप्राम्रेडितयोः । अग्ने त्रातर्ऋतस्कविः । गिरिर्न विश्वतस्पृथुः । वसुनः पूर्व्यः पतिः । नेह :— अग्निः प्रविद्वान् । पुरुषः पुरुषः ।

---

१. पूर्वसूत्रविषये । २. साक्षात्प्रभृतित्वाद्विभाषा गतिसंज्ञेति तदभाव इदम् । ३. कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठ इदं ज्ञापयति । ४. इह कस्कादिपाठान्नित्यं षत्वम् । ५. इह इणः षः । अन्यत्र स इति व्याख्येयम् ।

५०. कःकरत्करतिकृधिकृतेष्वनदितेः । प्रदिवो अपस्कः । यथा नो वस्यसस्करत । सुपेशस्करति । उरुणस्कृधि । सोमं न चारु मघवत्सु नस्कृतम् । नेह :– यथा नो अदितिःकरत ।

५१. पञ्चम्याः परावध्यर्थे । दिवस्परि प्रथमं जज्ञे । नेह :– दिवस्पृथिव्याः पर्योजः ।

५२. पातौ[1] च बहुलम् । सूर्यो नो दिवस्पातु ।

५३. षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । वाचस्पतिं विश्वकर्माणम् । दिवस्पुत्राय सूर्याय । दिवस्पृष्ठं भन्दमानः । तमसस्पारमस्य । परिवीत इळस्पदे । दिवस्पयो दिधिषाणाः । रायस्पोषं यजमानेषु ।

५४. इडाया वा । इडायास्पुत्रः, इडायाः पुत्रः । इडायास्पदे, इडायाः पदे ।

५५. अपदान्तस्य मूर्धन्यः । इदं पदद्वयमधिक्रियत आ पादसमाप्तेः ।

५६. सहेः साडः सः । तुराषाट्, तुराषाड् । नेह :– तुरासाहौ ।

५७. इण्कोः । इदमप्यधिक्रियत आ पादसमाप्तेः ।

५८. नुम्विसर्जनीयशर्व्यवायेऽपि । इदमपि पूर्ववदधिक्रियते[2] । सर्पींषि । यजूंषि । सर्पिःषु । यजुःषु । सर्पिष्षु । यजुष्षु । प्रत्येकं व्यवाय एव । नेह :– निंस्से । निंस्स्व ।

५९. आदेशप्रत्यययोः[3] । अग्निषु । वायुषु । गीर्षु । धूर्षु । त्वक्षु । वाक्षु । सिषेव । सुष्वाप । रामेषु । हरिषु । कर्तृषु । नेह :– दास्यति । असौ ।

६०. शासिवसिघसीनां च । शिष्टः । अशिषत् । उषितः । जक्षतुः । इण्कोरित्येव । नेह :– शास्ति । वसति । जघास ।

६१. स्तौतिण्योरेव षण्यभ्यासात्[4] । तुष्टूषति । सुष्वापयिषति । सिषाधयिषति । सिषेवयिषति । नेह :– सिसिक्षति । तिष्ठासति ।

---

१. पञ्चम्या इत्येव । २. स्वतन्त्रविधित्वाभावादेव निंस्से निंस्स्वेत्यत्र पूर्वसकारस्य न षः । आदेशप्रत्ययावयवत्वाभावात् । ३. आदेशरूपस्य प्रत्ययावयवस्य च सस्येत्यर्थो व्याख्यानात् । ४. षत्वमापन्ने सनीत्यर्थः ।

६२. सः स्विदिस्वदिसहीनां च । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ।

६३. प्राक् सितादड्व्यवायेऽपि । अभिषुणोति, अभ्यषुणोत । परिषुणोति, पर्यषुणोत् । न्यषेधत् , न्यषेधीत् ।

६४. स्थादिष्वभ्यासेन चाभ्यासस्य । अभिषिषेणयिषति, परिषिषेणयिषति । निषिषेध । अभिषिषिक्षति, परिषिषिक्षति । अधितष्ठौ । स्थादिष्वेवेति नियमान्नेह :– अभिसुसूषति । अभिसिषासति ।

६५. उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । अभिषुणोति । अभिषुवति । अभिष्यति । अभिष्टौति । परिष्टोभते । अनुष्ठास्यति, परितष्ठौ । अभिषेणयति । अभिषेधति । अभिषिञ्चति । परिषजति । परिष्वजते । नेह :– दधि सिञ्चति ।

६६. सदिरप्रतेः । निषीदति । विषीदति । न्यषीदत् । निषसाद । नेह :– प्रतिसीदति ।

६७. स्तन्भेः । अभिष्टभ्नाति । परिष्टभ्नाति । अभ्यष्टभ्नात् । अभितष्टम्भ । प्रतेरपि । प्रतिष्टभ्नाति । प्रतिष्टम्भः ।

६८. अवाच्चालम्बनाविदूर्ययोः । अवष्टभ्यास्ते । अवष्टब्धा सेना ।

६९. वेश्च स्वनो भोजने । विष्वणति । व्यष्वणत् । विषष्वाण । अवष्वणति । अवषष्वाण । अवाष्वणत् ।

७०. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्[1][3] । परिषेवते निषेवते । विषेवते । पर्यषेवत । परिषिषेविषते । परिषितः । निषितः विषितः । परिषयः । निषयः । विषयः । परिषीव्यति । निषीव्यति । विषीव्यति । परिषहते । निषहते । विषहते । परिष्करोति । परिष्टौति । निष्टौति । विष्टौति । परिष्वजते । निष्वजते । विष्वजते ।

७१. सिवादीनां वाड्व्यवायेऽपि । पर्यषीव्यत् , पर्यसीव्यत् । न्यषीव्यत् , न्यसीव्यत् । व्यषीव्यत् , व्यसीव्यत् । पर्यषहत , पर्यसहत । न्यषहत, न्यसहत । व्यषहत, व्यसहत । पर्यष्कार्षीत् , पर्यस्कार्षीत् । पर्यष्टौत् , पर्यस्तौत् । पर्यष्वजत, पर्यस्वजत ।

---

१. सस्य सवचनं मूर्धन्यनिवृत्त्यर्थम् । २. सिञ् बन्धने क्तः । तत एव एरच् सयः । ३. पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम् ।

७२. अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु। अनुष्यन्दते, अनुस्यन्दते वा जलम्। विष्यन्दते, विस्यन्दते। परिष्यन्दते, परिस्यन्दते। अभिष्यन्दते, अभिस्यन्दते। निष्यन्दते, निस्यन्दते। नेह :– अनुस्यन्दते हस्ती। अप्राणिष्विति पर्युदासाश्रयणादिह स्यादेव :– मत्स्योदके अनुष्यन्देते, अनुस्यन्देते।

७३. वेः स्कन्देरनिष्ठायाम्[१]। विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। विष्कन्तव्यम्, विस्कन्तव्यम्। नेह :– विस्कन्नः।

७४. परेश्च। परिष्कन्ता, परिस्कन्ता। परिष्कन्तुम्, परिस्कन्तुम्। परिष्कण्णः[२], परिस्कन्नः।

७५. परिस्कन्दः[३] प्राच्यभरतेषु। परिस्कन्दः। अन्यत्र परिष्कन्दः, परिस्कन्दः।

७६. स्फुरतिस्फुलत्योर्निर्निविभ्यः। निष्ष्फुरति, निस्स्फुरति। निष्फुरति, निस्फुरति। विष्फुरति, विस्फुरति। निष्ष्फुलति, निस्स्फुलति। निष्फुलति, निस्फुलति। विष्फुलति, विस्फुलति।

७७. वेः स्कभ्नातेर्नित्यम्। विष्कभ्नाति। विष्कम्भिता।

७८. इणः षीध्वंलुङ्लिटां धोऽङ्गात्। च्योषीढ्वम्। प्लोषीढ्वम्। अच्योढ्वम्। अप्लोढ्वम्। एधांचकृढ्वे।

७९. विभाषेटः। लविषीढ्वम्, लविषीध्वम्। अयिषीढ्वम्, अयिषीध्वम्। आयिढ्वम्, आयिध्वम्। लुलुविढ्वे, लुलुविध्वे।

८०. समासेऽङ्गुलेः सङ्गः। अङ्गुलिषङ्गः। नेह :– अङ्गुलेः सङ्गः।

८१. भीरोः स्थानम्। भीरुष्ठानम्। नेह :– भीरोः स्थानम्।

८२. अग्नेः स्तुत्स्तोमसोमाः। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ।

८३. ज्योतिरायुषः स्तोमः। ज्योतिष्टोमः। आयुष्टोमः। समास इत्येव नेह :– ज्योतिः स्तोमं दर्शयति।

८४. मातृपितृभ्यां स्वसा। मातृष्वसा। पितृष्वसा।

८५. मातुःपितुर्भ्यामन्यतरस्याम्। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। समास इत्येव नेह :– मातुः स्वसा।

---

१. अनिष्ठायामिति पर्युदासात्कृत्येवेदम्। २. इहानिष्ठायामिति न सम्बध्यते पृथग्योगारम्भसामर्थ्यात्। ३. अचि निपातनम्।

८६. अभिनिसस्तनः शब्दसंज्ञायाम्। अभिनिष्टानो वर्णः। अभिनिस्तानः। नेह :— अभिनिस्तनति मृदङ्गः।

८७. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। अभिषन्ति। निषन्ति। प्रादुःषन्ति। अभिष्यात्। निष्यात्। प्रादुःष्यात्। नेह :— निस्तः। विस्तः।

८८. सुविनिर्दुर्भ्यः सुपिसूतिसमाः। सुषुप्तः। सुषुपतुः। विषुप्तः। निःषुप्तः। दुःषुप्तः। सुषूतिः। विषूतिः। निःषूतिः। दुःषूतिः। सुषमम्। विषमम्। निःषमम्। दुःषमम्।

८९. निनदीभ्यां स्नातेः कौशले। निष्णातः। नदीष्णः[1]। नेह :— निस्नातः। नदीस्नातः।

९०. सूत्रं प्रतिस्नातम्। प्रतिष्णातं सूत्रम्[2]। अन्यत्र प्रतिस्नातम्।

९१. कपिष्ठलो गोत्रे। कपिष्ठलो नाम यस्य सः। कापिष्ठलिः पुत्रः।

९२. प्रष्ठोऽग्रगामिनि। प्रष्ठो गौः। नेह :— प्रस्थो व्रीहीणाम्।

९३. वृक्षासनयोर्विष्टरः। विष्टरो वृक्ष आसनं च। अन्यत्र विस्तरः।

९४. छन्दोनाम्नि च। विष्टारपङ्क्तिश्छन्दः[3]। नेह :— पटस्य विस्तारः।

९५. गवियुधिभ्यां स्थिरः। गविष्ठिरः[4]। युधिष्ठिरः[5]।

९६. विकुशमिपरिभ्यः स्थलम्। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्।

९७. अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः। अम्बष्ठः। आम्बष्ठः। गोष्ठः। भूमिष्ठः। सव्येष्ठः। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः।

९८. सुषामादिषु च। सुषामा ब्राह्मणः। सुषन्धिः।

९९. एति संज्ञायामगात्। हरिषेणः। वारिषेणः। नेह :— हरिसक्थम्। पृथुसेनः। विष्वक्सेनः[6]। इण्कोरित्येव। नेह :— सर्वसेनः।

---

१. सुपीति योगविभागात्कः। कुशल इत्यर्थः। २. शुद्धमित्यर्थः। ३. छन्दोनाम्नि च (३।३।३४) इति घञ्। ४. अत एव वचनात्सप्तम्या अलुक्। ५. हलदन्तादित्यलुक्। ६. चर्त्वस्यासिद्धत्वाद् गकारात्परोऽयम्।

१००. नक्षत्राद्वा। रोहिणीषेणः, रोहिणीसेनः। अगादित्येव। नेह :– शतभिषक्सेनः।

१०१. ह्रस्वात्तादौ तद्धिते। सर्पिष्टरम्। सर्पिष्टमम्। चतुष्टये ब्राह्मणानां निकेताः। निष्ट्यश्चाण्डालादिः। आविष्ट्यः। नेह :– गीस्तरा। सर्पिस्तरति। * तिङन्तस्य प्रतिषेधः * भिन्द्युस्तराम्। छिन्द्युस्तमाम्।

१०२. निसस्तपतावनासेवने। निष्टपति[1] सुवर्णम्। निष्टप्तं रक्षो निष्टप्ता अरातयः। नेह :– निस्तपति[2] सुवर्णं सुवर्णकारः।

१०३. युष्मत्तत्ततक्षुःष्वन्तःपादम्। त्रिभिष्ट्वं देव सवितः। तेभिष्ट्वा। आभिष्टे। अप्स्वग्ने सधिष्टव। अग्निष्टद्विश्वम्। द्यावापृथिवी निष्टतक्षुः। नेह :– तदग्निस्तदर्यमा[3]।

१०४. यजुष्येकेषाम्। अर्चिर्भिष्ट्वम्, अर्चिर्भिस्त्वम्। अग्निष्टे अग्रम्, अग्निस्ते अग्रम्। अग्निष्टत्, अग्निस्तत्। अर्चिर्भिष्टतक्षुः, अर्चिर्भिस्ततक्षुः।

१०५. स्तुतस्तोमयोश्छन्दसि। नृभिष्टुतस्य, नृभिस्तुतस्य। गोष्टोमम्, गोस्तोमम्।

१०६. पूर्वपदात्। द्विषन्धिः, द्विसन्धिः। मधुष्ठानम्, मधुस्थानम्। युवं हि स्थः स्वर्पती।

१०७. सुञः। ऊर्ध्व ऊ षु[4] णः। अभी षु णः।

१०८. सनोतेरनः। गोषा इन्द्रो नृषा असि। नेह :– गोसनिः।

१०९. सहेः पृतनर्ताभ्यां च। पृतनाषाहम्। ऋताषाहम्।

११०. न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्। विस्रंसिकायाः काण्डं जुहोति। विस्रब्धः कथयति। उस्रो[5] रश्मिः। उस्रा गौः। पुरा क्रूरस्य विसृपः। वाचो विसर्जनात्। दिविस्पृशम्। निस्पृहं कथयति। अनुसवनम्। गोसनिम्। अश्वसनिम्[6]।

---

१. सकृदग्निं स्पर्शयतीत्यर्थः। २. पुनः पुनस्तपतीत्यर्थः। ३. अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः। ४. इकः सुञीति दीर्घः। नश्च धातुस्थेति णत्वम्। ५. शासिवसीति प्राप्तमप्यनेन वार्यत इति मतेनेदमुदाहरणद्वयम्। पूर्वपदादिति प्राप्ते प्रतिषेध इति काशिका तु भूयोऽभिप्रायेति। ६. सवनादावश्वसनिग्रहणं ज्ञापकम् अनिणोऽपि षत्वमस्तीति। तेन जलाषाहमश्वषाहम्।

१११. सात्पदाद्योः । अग्निसात् । दधिसात् । दधि सिञ्चति । मधु सिञ्चति ।

११२. सिचो यङि । सेसिच्यते । निसेसिच्यते ।

११३. सेधतेर्गतौ । गङ्गां विसेधति । अभिसेधयति गाः । अन्यत्र निषेधति ।

११४. प्रतिस्तब्धनिस्तब्धौ च । प्रतिस्तब्धः । निस्तब्धः ।

११५. सोढः । परिसोढा । परिसोढुम् । परिसोढव्यम् । अन्यत्र परिषहते ।

११६. स्तम्भुसिवुसहां चङि । पर्यतस्तम्भत् । अभ्यतस्तम्भत् । पर्यसीषिवत्[१] । न्यसीषिवत् । पर्यसीषहत् । व्यसीषहत् ।

११७. सुनोतेः स्यसनोः । परिसोष्यति । अभिसोष्यति । अभिष्टुः[२] ।

११८. सदेः परस्य लिटि । अभिषसाद । निषसाद । परिषसाद । * स्वञ्जेरुपसंख्यानम् * परिषस्वजे । अभिषस्वजे ।

११९. निव्यभिभ्योऽड्व्यवाये वा छन्दसि । न्यषीदत्, न्यसीदत् । व्यषीदत्, व्यसीदत् । अभ्यषीदत्, अभ्यसीदत् । अभ्यष्टौत्[३], अभ्यस्तौत् ।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
अष्टमाध्यायस्य तृतीयपादः समाप्तः ।



१. स्तम्भेरिति परिनिविभ्य इति च प्राप्तं प्रतिषिध्यते । अभ्यासात्परस्य तु षत्वं भवत्येव । २. अभिष्टुसुषतेः क्विपि रूपमिदम् । ननु ष्टुसुषति अभिष्टुसुषत इत्यादि किन्नोदाहृतमिति चेन्न स्तौतिण्योरिति स्थादिष्विति नियमाभ्यामेव तयोर्वारणसम्भवात् । ३. सामान्येनैतद्वचनमिति स्तुधातुरप्युदाहृतः ।

# अथाष्टमाध्यायस्य चतुर्थपादः ।



१. रषाभ्यां नो णः समानपदे । आस्तीर्णम् । विस्तीर्णम् । कुष्णाति । पुष्णाति । यूष्णः । यूष्णा । * ऋवर्णाच्चेति वक्तव्यम् * चतसृणाम् । मातृणाम् । पितृणाम् ।

२. अट्कुप्वाङ्नुम्व्यवायेऽपि[1] । करणम् । अर्केण । मूर्खेण । दर्पेण । रामेण । पर्याणद्धम्[2] । बृंहणम् । नुम्-ग्रहणमनुस्वारोपलक्षणार्थम्[3] । तृंहणम् । तृम्फणम् । नेह :– प्रेन्वनम् ।

३. पूर्वपदात्संज्ञायामगः । द्रुणसः । खरणसः । शूर्पणखा । नेह :– चर्मनासिकः । ऋगयनम् ।

४. वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । अग्रेवणम् । नेह :– कुवेरवनम् । शतधारवनम् ।

५. प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि । प्रवणम् । निर्वणम् । अन्तर्वणम् । शरवणम् । इक्षुवणम् । प्लक्षवणम् । आम्रवणम् । कार्ष्यवणम् । खदिरवणम् । पीयूक्षावणम् ।

६. विभाषौषधिवनस्पतिभ्यः । दूर्वावणम् , दूर्वावनम् । शिरीषवणम् , शिरीषवनम् । * द्व्यच्त्र्यच्भ्यामेव * नेह :– देवदारुवनम् । * इरिकादिभ्यः प्रतिषेधो वक्तव्यः * इरिकावनम् । मिरिकावनम् ।

७. अह्नोऽदन्तात् । पूर्वाह्णः । अपराह्णः । नेह :– निरह्नः । दुरह्नः ।

८. वाहनमाहितात्[4] । इक्षुवाहणम् । शरवाहणम् । नेह :– इन्द्रवाहनम्[5] ।

---

१. व्यस्तैः समस्तैश्च यथासम्भवं व्यवाय इत्यर्थः । २. अड्व्यवाय इत्येव सिद्धे आङ्ग्रहणं पदव्यवाय इत्यस्य प्रतिषेधस्य बाधनार्थम् । ३. तच्चाकर्तुं शक्यम् । अयोगवाहानामट्सूपदेशनात् । ४. आरोप्य यदुह्यते तदाहितम् । ५. इन्द्रस्वामिकमित्यर्थः ।

९. पानं देशे । क्षीरपाणा[1] उशीनराः । सुरापाणाः प्राच्याः । नेह :—दाक्षिपानम् ।

१०. वा भावकरणयोः । क्षीरपाणम्, क्षीरपानम् । क्षीरपाणः, क्षीरपानः कंसः[2] । * गिरिनद्यादीनां वा * गिरिणदी, गिरिनदी । चक्रणितम्बा, चक्रनितम्बा ।

११. प्रातिपदिकान्तनुम्विभक्तिषु[3] च । माषवापिणौ, माषवापिनौ । व्रीहिवापाणि, व्रीहिवापानि । माषवापेण, माषवापेन । * युवादेर्न * रम्ययूना । परिपक्वानि ।

१२. एकाजुत्तरपदे णः[4] । वृत्रहणौ, वृत्रहणः । हरिमाणी[5] । क्षीरपाणि, क्षीरपेण । रम्यविणा ।

१३. कुमति च । हरिकामिणौ । हरिकामाणि । हरिकामेण । स्वर्गकामिणः । स्वर्गगामिणः ।

१४. उपसर्गादसमासेऽपि[6] णोपदेशस्य । प्रणदति । प्रणमति । प्रणायकः ।

१५. हिनुमीना । प्रहिणोति, प्रहिणुतः । प्रमीणाति, प्रमीणीतः ।

१६. आनि लोट् । प्रभवाणि । प्रयाणि । परिवपाणि । नेह :—प्रवपानि मांसानि ।

१७. नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । प्रणिगदति, परिणिगदति । प्रणिनदति । प्रणिपतति । प्रणिपद्यते । प्रणिददाति । प्रणिदधाति । प्रणिमिमीते । प्रणिमयते । प्रणिष्यति । प्रणिहन्ति । प्रणियाति । प्रणिवाति । प्रणिद्राति । प्रणिप्साति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि । प्रण्यगदत् ।

१८. शेषे विभाषाऽकखादावषान्त उपदेशे । प्रणिभवति, प्रनिभवति । प्रणिपचति, प्रनिपचति । नेह :— प्रनिकरोति । प्रनिखादति । प्रनिपिनष्टि । प्रनिचकार ।

---

१. पीयत इति पानं कर्मणि ल्युट् । २. कंसोऽस्त्री पानभाजनम् । ३. पूर्वपदादित्यधिकारादुत्तरपदस्येति लभ्यते । तेनेह न :— गर्गाणां भगिनी, गर्गभगिनी । ४. पुनर्णग्रहणान्नित्यम् । ५. हरिं मानयतीति मनेर्ण्यन्तात्क्विप् ततो ङीप् । ६. असमासग्रहणमुत्तरपदाधिकारात्समास एवेत्यर्थनिवृत्त्यर्थम् ।

१९. अनितेः । प्राणिति । पराणिति ।

२०. अन्तः । हे प्राण् । हे पराण् ।

२१. उभौ साभ्यासस्य[1] । प्राणिणिषति । प्राणिणत् । पराणिणत् ।

२२. हन्तेरत्पूर्वस्य । प्रहण्यते । प्रहणनम् । परिहण्यते । परिहणनम् नेह :– प्रघ्नन्ति । प्राघानि ।

२३. वमोर्वा । प्रहण्वः, प्रहन्वः । परिहण्वः, परिहन्वः । प्रहण्मः प्रहन्मः ।

२४. अन्तरदेशे । अन्तर्हण्यते । अन्तर्हणनम् । नेह :– अन्तर्हननो देशः अत्पूर्वस्येत्येव । नेह :– अन्तर्घ्नन्ति । अन्तरघानि ।

२५. अयनं च । अन्तरयणम् । अदेश एव । नेह :– अन्तरयनो देशः ।

२६. छन्दस्यृदवग्रहात्[2] । नृमणाः । पितृयाणम् ।

२७. नश्च धातुस्थोरुषुभ्यः । अग्ने रक्षा णः[3] । शिक्षा णो अस्मिन् उरु णस्कृधि । अभी षु णः सखीनाम् ।

२८. उपसर्गाद्बहुलम्[4] । प्रणः शूद्रः । प्रणसः, प्रणो राजा । बहुलग्रहणा भाषायामपि । प्रणसं[5] मुखम् ।

२९. कृत्यचः । प्रयाणम् । प्रमाणम् । प्रयाणीयम् । अप्रयाणिः । प्रया यिणौ । प्रहीणः । नेह :– प्रमग्नः । प्रभुग्नः । * निर्विण्णस्योपसंख्यानम् । निर्विण्णोऽस्मि[6] खलसङ्गेन । शकारव्यवधानान्नेह :– प्रख्यानम्[7] । प्रख्यानीयम् ।

३०. णेर्विभाषा । प्रयापणम्, प्रयापनम् । प्रयापणीयम्, प्रयापनीयम् प्रयाप्यमाणं[8] पश्य ।

---

१. इदमेव ज्ञापकं पूर्वत्रासिद्धीयमद्वित्व इत्यस्यानित्यत्वे । तेन औजढदिि सिद्धम् । २. ऋकारान्तादवग्रहात्पूर्वपदादुत्तरस्य णकार इत्यर्थः । अपदान्ते चावग्रह नास्ति । ३. अस्मदादेशोऽयं नः । द्व्यचोऽतस्तिङ इति दीर्घः । ४. नसो नकार स्येत्यर्थः । ५. उपसर्गाच्चेति नासिकाया नसादेशः । ६. अच उत्तरत्वाभावाद्व नम् । परस्य णत्वं पूर्वस्य ष्टुत्वम् । ७. चक्षिङः ख्याञ् । ख्शादिरयमादेशः ख्शाञः शस्य यो वा । इदं णत्वोपरीति यादेशस्यासिद्धत्वादिति भावः । ८. णेर्वि हिते कृतीत्यर्थाश्रयणादिति भावः ।

३१. हलश्चेजुपधात्[1] । प्रकोपणम् , प्रकोपनम् । प्रकोपणीयम् , प्रकोपनीयम् । नेह :– प्रोहणम्[2] । प्रोहणीयम् । प्रवपणम् । प्रवपणीयम् ।

३२. इजादेः[3] सनुमः । प्रेङ्खणम् । प्रेङ्खणीयम् । प्रेङ्गणम् । प्रोम्भणम् । नेह :– प्रमङ्गनम् । प्रमङ्गनीयम् । प्रेन्वनम्[4] । प्रेन्वनीयम् ।

३३. वा निंस[5]निक्षनिन्दाम् । प्रणिंसनम् , प्रनिंसनम् । प्रणिंसितव्यम् , प्रनिंसितव्यम् । प्रणिक्षणम् , प्रनिक्षणम् । प्रणिन्दनम् , प्रनिन्दनम् ।

३४. न[6] भाभूपूकमिगमिप्यायिवेपाम् । प्रभानम् । प्रभानीयम् । प्रभवनम् । प्रभवनीयम् । प्रपवनम् । प्रपवनीयम् । * पूञ एव ग्रहणमिष्यते * पूङस्तु प्रपवणम् । प्रपवणीयः सोमः । प्रकमनम् । प्रकमनीयम् । प्रगमनम् । प्रप्यायनम् । प्रवेपनम् । * ण्यन्तभादीनामुपसंख्यानम् * प्रभापनम् । प्रभापनीयम् ।

३५. षात्पदान्तात् । निष्पानम् । दुष्पानम् । सर्पिष्पानम् । नेह :– कुष्णाति । पुष्णाति ।

३६. नशेः षान्तस्य । प्रनष्टः । प्रनंष्टा । प्रनंक्ष्यति[7] । नेह :– प्रणश्यति ।

३७. पदान्तस्य । रामान् । हरीन् ।

३८. पद[8]व्यवायेऽपि । माषकुम्भवापेन । चतुरङ्गयोगेन । * अतद्धित इति वाच्यम् * आर्द्रगोमयेण । शुष्कगोमयेण ।

३९. क्षुभ्नादिषु च । क्षुभ्नाति । क्षुभ्नीतः । नृनमनम्[9] । हरिनन्दनः । रामनगरम् । नरीनृत्यते । तृप्नोति । * आचार्यादणत्वं च * आचार्यानी ।

४०. स्तोः[10] श्चुना श्चुः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ।

---

१. इह हल्ग्रहणं हलादेरित्यर्थम् । २. इह कृत्यच इति नित्यं णत्वम् । ३. हल इति वर्तते । सामर्थ्यात्तदन्तविधिः । सनुमश्चेत्कृति तर्हि इजादेर्हलन्ताद्विहित एवेति नियमार्थं सूत्रम् । ४. नुम्-ग्रहणस्यानुस्वारोपलक्षणार्थत्वान्नेह । ५. णोपदेशत्वान्नित्यणत्वे प्राप्ते विकल्पः । ६. कृत्यच इति प्राप्तं नेत्यर्थः । ७. अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थमितीहापि निषेधः । ८. निमित्तनिमित्तिनोः पदेन व्यवधान इत्यर्थः । ९. पूर्वपदात्संज्ञायामिति प्राप्तिः । क्षुभ्नादिराकृतिगणः । १०. इह स्थानिनिमित्तयोर्न यथासंख्यम् । शादिति ज्ञापकात् । स्थान्यादेशयोस्तु यथासंख्यमन्वयः ।

४१. ष्टुना ष्टुः[1]। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।

४२. न पदान्ताट्टोरनाम्। षट्सन्तः। षट्ते। नेह :– ईट्टे। सर्पिष्टमम्। * अनाम्नवतिनगरीणामिति वाच्यम् * षण्णाम्। षण्णवतिः। षण्णगर्यः।

४३. तोः षि। सन्षष्ठः। महान्षण्डः।

४४. शात्[2]। विश्नः। प्रश्नः।

४५. यरोऽनुनासिकेऽनुनासिको वा[3]। वाङ्नयति। वाग्नयति। एतन्मुरारिः। एतद्मुरारिः। नेह :– चतुर्मुखः[4]। * प्रत्यये भाषायां नित्यम् * तन्मात्रम्। चिन्मयम्। ककुद्मन्त इत्यत्र तु यवादिगणे निपातनाद्दकारः।

४६. अचो रहाभ्यां द्वे[5]। अर्क्कः, अर्कः। ब्रह्म्मा, ब्रह्मा। गौर्य्यौ, गौर्यौ। ह्र्य्यनुभवः, ह्र्यनुभवः। नह्य्यस्ति, नह्यस्ति। नेह :– ह्नुते।

४७. अनचि च[6]। सुद्ध्युपास्यः, सुध्युपास्यः। मद्ध्वरिः, मध्वरिः। वाक्क्, वाक्। नेह :– स्मितम्। * यणो मयो[7] द्वे वाच्ये * उल्क्का, उल्का। वल्म्मीकः, वल्मीकः। सुध्य्युपास्यः, सुध्युपास्यः। मध्व्वरिः, मध्वरिः। * शरः[8] खयः * स्त्थाली, स्थाली। स्त्थाता, स्थाता। सँस्क्कर्त्ता, संस्क्कर्त्ता। सँस्कर्त्ता, संस्कर्त्ता। वत्स्सरः[9], वत्सरः। अप्स्सराः, अप्सराः।

४८. नादिन्याक्रोशे पुत्रस्य। पुत्रादिनी त्वमसि पापे। नेह :– पुत्त्रादिनी शिशुमारी व्याघ्री। * तत्परे च * पुत्रपुत्रादिनी त्वमसि पापे। * वा हतजग्धयोः * पुत्त्रहती, पुत्रहती। पुत्त्रजग्धी, पुत्रजग्धी। * चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् * वथ्सरः, वत्सरः। अफ्सराः, अप्सराः। प्राङ्ख्षष्ठः, प्राङ्क्षष्ठः। सुगण्ठ्षष्ठः, सुगण्ट्षष्ठः।

४९. शरोऽचि। कर्षति। वर्षति। चतुर्षु। नेह :–दर्श्यते।

---

१. इहापि पूर्ववद्यथासंख्यम्। २. नेति तोरिति च वर्त्तते। ३. पदान्तग्रहणमनुवर्त्तते। ४. स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्त्तत इति हेतोः। ५. यर इति वर्त्तते। ६. इह यर इति अच इति च वर्त्तेते। ७. यण इति पञ्चमी मय इति षष्ठी। अथवा मय इति पञ्चमी यण इति षष्ठी। ८. इहापि पूर्ववद्व्याख्यानद्वयम्। ९. इदं खयः शर इति व्याख्यानस्य फलम्।

५०. त्रिप्रभृतिषु शाकटायनस्य । इन्द्रः, इन्न्द्रः । राष्ट्रम्, राष्ष्ट्रम् ।

५१. सर्वत्र शाकल्यस्य[1] । अर्कः । ब्रह्मा ।

५२. दीर्घादाचार्याणाम् । दात्रम् । पात्रम् । सूत्रम् । मूत्रम् ।

५३. झलां जश् झशि । लब्धा । दोग्धा । बोद्धा । छुद्ध्युपास्यः । नेह :–दत्तः ।

५४. अभ्यासे चर्च[2] । चिच्छेद । तिष्ठासति । बुभूषति । बभूव । जघान । डुढौके । ददौ । डिड्ये ।

५५. खरि च[3] । भेत्ता । भेत्स्यति । तच्छिवः । योत्स्यते । आरिप्सते ।

५६. वाऽवसाने । वाक्, वाग् । रामात्, रामाद् । लिट्, लिड् । नेह :– वागीशः ।

५७. अणोऽप्रगृह्यस्यानुनासिकः । दधिँ, दधि । मधुँ, मधु । नेह :– कर्त्तृ । अग्नी ।

५८. अनुस्वारस्य ययि परसवर्णः । अङ्कितः । अञ्चितः । कुण्ठितः । शान्तः । गुम्फितः । कुर्वन्ति[4] । नेह :– आक्रंस्यते ।

५९. वा पदान्तस्य । त्वङ्करोषि, त्वं करोषि । सय्ँयन्ता, संयन्ता । सव्ँवत्सरः, संवत्सरः । यल्ँलोकम्, यं लोकम् । तङ्कथञ्चित्रपक्षण्डयमानन्नभःस्थम्पुरुषोऽवधीत् ?, तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत् ?

६०. तोर्लि । तल्लयः । विद्वाल्ँलिखति ।

६१. उदः स्थास्तम्भोः पूर्वस्य । उत्थानम्[5] । उत्तम्भनम् । उत्थाता । ऊत्तम्भिता ।

६२. झयो होऽन्यतरस्याम् । वाग्घरिः, वाग्हरिः । लिड्ढसति, लिड्हसति । तद्धविः, तद्हविः । त्रिष्टुब्भसति. त्रिष्टुब्हसति ।

---

१. शाकल्यग्रहणं पूजार्थं न विकल्पार्थम् । सामर्थ्यादेव तत्सिद्धेः । २. चाज्जश् च । झशां जशः खयां चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतचर इति विवेक आन्तरतम्यात् । ३. झलामिति वर्तते । ४. णत्वस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम् । ५. अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थः । तस्य झरो झरीति वा लोपः । तदभावपक्षे उत्थ्थानम् । उत्थ्तम्भनम् । न तु थस्य चर्त्वेन तकारः । चर्त्वं प्रति तस्यासिद्धत्वात् ।

६३. शश्छोऽटि। तच्छिवः, तच्शिवः। * छत्वममीति वाच्यम् * तच्छ्लोकेन, तच्श्लोकेन।

६४. हलो यमां यमि लोपः। शय्या। शय्य्या। आदित्यो देवतास्य, आदित्यं हविः। आदित्य्यम्। नेह :– अन्नम्।

६५. झरो झरि सवर्णे। प्रत्तम्, प्रत्त्तम्। अवत्तम्, अवत्त्तम्। नेह :– तर्प्ता।

६६. उदात्तादनुदात्तस्य स्वरितः। गार्ग्यः। वात्स्यः। पचति।

६७. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्। प्रय आहुः। वोश्वाः। क्वा३भीशवः। गार्ग्यादिमते तु स्यादेव।

६८. अ अ[1]। वृक्षः। प्लक्षः।

इत्यार्षे श्रीमत्पाणिनीयव्याकरणे हरिशङ्करशर्मसंकलिते
अष्टमाध्यायस्य चतुर्थपादः समाप्तः।



लक्ष्यलक्षणविज्ञानं पूर्णं व्याकरणं स्मृतम्।
तदेवेदं मयादर्शि नूत्नरूपं प्रयत्नतः ॥१॥
पाणिनीयमिदं शास्त्रं हरिशङ्करशर्मणा।
शर्मणे शिष्यवर्गाणां सङ्कलय्य प्रकाशितम् ॥२॥



१. प्रक्रियायां विवृतोऽकारः परिनिष्ठितावस्थायां संवृतः सम्पद्यत इत्यर्थः सम्पन्नः।

# अथोणादयः ।



कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १ ॥ करोतीति कारुः शिल्पी कारकश्च । आतो युक् । वातीति वायुः । पायुर्गुदम् । जयत्यभिभवति रोगान् जायुरौषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । आशुर्व्रीहिः पाटलः स्यात् । छन्दसीणः ॥ २ ॥ मान आयौ । दृसनिजनिचरिचटिभ्यो ञुण् ॥ ३ ॥ दीर्यत इति दारु । स्नुः प्रस्थः सानुरस्त्रियाम् । जानु । जानुनी । इह जनिवध्योश्चेति न निषेधः । अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि । किञ्जरयोः श्रिणः ॥ ४ ॥ किं शृणोतीति किंशारुः सस्यशूकं बाणश्च । जरामेति जरायुर्गर्भाशयः । गर्भाशयो जरायुः स्यात् । त्रो रश्च लः ॥ ५ ॥ तरन्त्यनेन वर्णा इति तालुः । कृके वचः कश्च ॥ ६ ॥ कृकेण गलेन वक्तीति कृकवाकुः । कृकवाकुर्मयूरे च सरटे चरणायुधे इति विश्वः । भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ॥ ७ ॥ भरति बिभर्ति वा भरुः स्वामी हरश्च । म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः । शेते शयुरजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् । स्त्रियां मूर्तिस्तनुस्तनूः । धनुः शस्त्रविशेषः । धनुषा च धनुं विदुः । धनुरिवाजनि वक्र इति श्रीहर्षः । मयुः किन्नरः । मद्गुः पानीयकाकिकेति रभसः । न्यङ्क्वादित्वात्कुत्वम् । जश्त्वेन सस्य दः । अणश्च ॥ ८ ॥ लवलेशकणाणवः । चात्कटिवटिभ्याम् । कटुः । वटुः । धान्ये नित् ॥ ९ ॥ धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित् । नित्वादाद्युदात्तः । प्रियङ्गवश्च मेऽणवश्च मे । व्रीहिभेदस्त्वणुः पुमान् । नित्ग्रहणं फलिपाटीत्यादि सूत्रमभिव्याप्य संबध्यते । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥ १० ॥ शृणातीति शरुः । शरुरायुधकोपयोः । स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । पुंसि भूम्न्यसवः प्राणाः । वसुर्हृदेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् बिदि अवयवे । बिन्दुः । स्यन्देः संप्रसारणं धश्च ॥ ११ ॥ देशे नदविशे-

षेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः । उन्देरिच्चादेः ॥ १२ ॥ उनत्ति इन्दुः । ईषेः किच्च ॥ १३ ॥ ईषेरुः स्यात्स च किद् आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । इषुर्द्वयोः । स्कन्देः सलोपश्च ॥ १४ ॥ कन्दुः । सृजेरसुम् च ॥ १५ ॥ चात्सलोप उप्रत्ययश्च । रज्जुः । कृतेराद्यन्तविपर्ययश्च ॥ १६ ॥ ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् । नावञ्चेः ॥ १७ ॥ न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः । फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ॥ १८ ॥ फलेर्गुक् । फल्गुः । पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु । वलेर्गुक्च ॥ १९ ॥ वल संवरणे । वल्गुः । शः कित्सन्वच्च ॥२०॥ श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः । यो द्वे च ॥ २१ ॥ ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् । कुर्भ्रश्च ॥ २२ ॥ बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ । स्यादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः । पृभिदिव्यधिगृधिधृषिभ्यः ॥ २३ ॥ कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । ग्रहिज्येति संप्रसारणम् । विरहिणं विध्यति विधुः । विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे । गृधुः कामः । धृषुर्दक्षः । कृग्रोरुच्च ॥ २४ ॥ करोतीति कुरुः । गृणाति गुरुः । अपदुःसुषु स्थः ॥ २५ ॥ सुषामादिषु चेति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु । रपेरिच्चोपधायाः ॥ २६ ॥ अनिष्टं रपतीति रिपुः । अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च ॥ २७ ॥ अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः । अन्धुः कूपः । पांसुर्ना न द्वयो रजः । तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः । बाधते इति बाहुः । बाहुः स्त्रीपुंसयोर्भुजः । प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ॥ २८ ॥ त्रयाणां कुः संप्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः । लङ्घिबंह्योर्नलोपश्च ॥ २९ ॥ लघुः । वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते ॥ ३० ॥ रघुर्नृपभेदः । बहुः । ऊर्णोतेर्नुलोपश्च ॥ ३१ ॥ ऊरु सक्थि । महति ह्रस्वश्च ॥ ३२ ॥ उरु महत् । श्लिषेः कश्च ॥ ३३ ॥ श्लिष्यतीति श्लिकुर्भृत्यः । उग्रतो ज्योतिश्च । आङ्परयोः खनिशृभ्यां डिच्च ॥ ३४ ॥ आखनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि । हरिमितयोर्द्रुवः ॥३५॥ द्रु गतौ अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः ।

मितं द्रवति मितद्रुः समुद्रः । शते च ॥ ३६ ॥ शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च । तद्वान् द्रुमः । खरुशङ्कुपीयुनीलङ्गुलिगु ॥ ३७ ॥ पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खः अश्वश्च । शङ्कुर्ना कीलशल्ययोः । पिबतेरित्वं युगागमश्च ॥ ३८ ॥ पीयुर्वायसः कालः सुवर्णं च । निपूर्वाल्लगि गतावस्मात्कुत्वं नेर्दीर्घश्च । नीलङ्गुः क्रिमिविशेषः श्रृगालश्च । नीलाङ्गुरिति पाठान्तरं तत्र धातोरपि दीर्घः । लगे सङ्गे अस्य अत इत्वं च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः । मृगय्वादयश्च ॥ ३९ ॥ एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥ ४० ॥ मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि । व्यथेः संप्रसारणं किच्च ॥ ४१ ॥ विथुरश्चोररक्षसोः । मुकुरदर्दुरौ ॥ ४२ ॥ मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । दॄ विदारणे धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च । दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद् ग्रामजाले च दर्दुरमिति विश्वः । मद्गुरादयश्च ॥ ४३ ॥ उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः । कबृ वर्णे । रुगागमः । कर्बुरः श्वेतरक्षसोः । बध्नातेः खर्जूरादित्वादूरोऽपि । बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु इति रन्तिदेवः । कोकतेर्वा कुक् ॥ ४४ ॥ कुक्कुरः । कुकुरः । असेरुरन् ॥ ४५ ॥ असुरः । प्रज्ञाद्यण् । आसुरः । मसेश्च ॥ ४६ ॥ पञ्चमे पादे मसेरूरन्निति वक्ष्यते । मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति । मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पादरोगे स्यादुपधाने पुनः पुमान् । मसूरमसुरौ च द्वाविति विश्वः । शावशेरासौ ॥ ४७ ॥ शु इति आश्वर्थे । श्वशुरः । पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोरित्यमरः । अविमह्योष्टिषच् ॥ ४८ ॥ अविषः । महिषः । अमेर्दीर्घश्च ॥ ४९ ॥ आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि । रुहेर्वृद्धिश्च ॥ ५० ॥ रङ्कुशम्बररौहिषाः । रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतमिति संसारावर्तः । तवेर्णिद्वा ॥ ५१ ॥ तवेति सौत्रो धातुः । तविषताविषावब्धौ स्वर्गे च । स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च । तविषी बलमिति वेदभाष्यम् । नञि व्यथेः । ॥ ५२ ॥ अव्यथिषोऽब्धिसूर्ययोः । अव्यथिषी धरा-

राश्योः । क्लिशेर्बुक् च ॥ ५३ ॥ किल्बिषम् । इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ॥ ५४ ॥ इषिरोऽग्निः । मदिरा सुरा । मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । छिदिरोऽसिकुठारयोः । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । मन्दिरं मन्दिरापि स्यादिति विश्वः । चन्दिरौ चन्द्रहस्तिनौ । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । मुहिरः काम्यसभ्ययोः । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । शुष शोषणे शुषिरं छिद्रम् । शुष्कमित्यन्ये । अशेर्णित् ॥५५॥ आशिरो वह्निरक्षसोः । अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥ ५६ ॥ अजेर्वीभावाभावः । अजिरमङ्गणम् । शशेरुपधाया इत्वम् । शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् । श्रथ मोचने उपधाया इत्वं रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्थास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वं च । स्थविरः । खदिरः । बाहुलकात् शीङो बुक् ह्रस्वत्वं च । शिबिरम् । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ॥ ५७ ॥ सलति गच्छति निम्नमिति सलिलम् । कलिलः । अनिलः । महिला । पृषोदरादित्वान्महेलापि । भड इति सौत्रो धातुः । भडिलौ शूरसेवकौ । भण्डिलो दूतः कल्याणं च । शण्डिलो मुनिः । पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः । भविलो भव्यः । बाहुलकात्कुटिलः । कमेः पश्च ॥५८॥ कपिलः । गुपादिभ्यः कित् ॥५९॥ गुपिलो राजा । तिजिलो निशाकरः । गुहिलं वनम् । मिथिलादयश्च ॥६०॥ मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः पथिकः । पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥ ६१ ॥ पतेरः पक्षी गन्ता च । कठेरः कृच्छ्रजीवी । कुठेरः पर्णाशः । बाहुलकान्नुम् । गडेरो मेघः । गुडेरो गुडकः । दंशेरो हिंस्रः । कुम्बेर्नलोपश्च ॥ ६२ ॥ कुबेरः । शदेस्त च ॥ ६३ ॥ शतेरः शत्रुः । मूलेरादयः ॥ ६४ ॥ एरगन्ता निपात्यन्ते । मूलेरो जटा । गुपेरो गोप्ता । गुहेरो लोहघातकः । मुहेरो मूर्खः । कबेरोतच् पश्च ॥ ६५ ॥ कपोतः पक्षी । भातेर्डवतुः ॥ ६६ ॥ भातीति भवान् कठिचकिभ्यामोरन् ॥ ६७ ॥ कठोरः । चकोरः । किशोरादयश्च ॥ ६८ ॥ किंपूर्वस्य श्रृणातेष्टिलोपः किमोऽन्त्यलोपः । किशोरोऽश्वशावः । सहोरः साधुः । कपिगडिगण्डिकटिपटिभ्य ओलच् ॥ ६९ ॥ कपीति निर्देशान्नलोपः । कपोलः गडोलगण्डोलौ गुडकपर्यायौ । कटोलः कटुः । पटोलः । मीनातेरूरन् ॥ ७० ॥

मयूरः । स्यन्देः संप्रसारणं च ॥ ७१ ॥ सिन्दूरम् । शितानिगामिमासिच्यावि-धाञ्क्रुशिभ्यस्तुन् ॥ ७२ ॥ सिनोतीति सेतुः । तितुत्रेति नेट् । तन्तुः । गन्तुः । मस्तुः दधिमण्डम् । सच्यत इति सक्तुः । अर्धर्चादिः । ज्वरत्वरेत्यूठ् । तत्र क्विङतीत्यनुवर्तत इति मते तु बाहुलकात् । ओतुर्बिडालः । धातुः क्रोष्टा । पः किच्च ॥ ७३ ॥ पिबतीति पितुर्वह्नौ दिवाकरे । अर्तेश्च तुः ॥ ७४ ॥ अर्तेस्तुः स्यात्स च कित् । ऋतुः स्त्रीपुष्पकालयोः । कमिमनिजनिगाभायाहि-भ्यश्च ॥ ७५ ॥ एभ्यस्तुः स्यात् । कन्तुः कन्दर्पचित्तयोः । मन्तुरपराधः । जन्तुः प्राणी । गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च । भानुरादित्यः । यातुरध्वगकालयोः । रक्षसि क्लीबम् । हेतुः कारणम् । चायः किः ॥ ७६ ॥ केतुर्ग्रहपताकयोः । आप्नोतेर्ह्रस्वश्च ॥ ७७ ॥ अप्तुः शरीरम् । वसेस्तुन् ॥ ७८ ॥ वस्तु । अगारे णिच्च ॥ ७९ ॥ वेश्मभूर्वास्तुरस्त्रियाम् । कृञः क्तुः ॥ ८० ॥ क्रतुर्यज्ञः । एधिवह्योश्च तुः ॥ ८१ ॥ एधतुः पुरुषः । वहतुरनड्वान् । जीवेरातुः ॥ ८२ ॥ जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे । आतृकन् वृद्धिश्च ॥ ८३ ॥ जीवेरित्येव । जैवातृकस्त्विन्दु-भिषगायुष्मत्सु कृषीवले । कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥ ८४ ॥ कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता । चमूः । तनूः । धनूः शस्त्रम् । सर्ज सर्जने । सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा । मृजेर्गुणश्च ॥८५॥ मर्जूः शुद्धिकृत् । वहो धश्च ॥ ८६ ॥ वधूर्जायास्नुषास्त्रीषु । कषेश्छश्च ॥८७॥ कच्छूः पामा । णित्कसिपद्यर्तेः ॥८८॥ कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः । अणो डश्च ॥ ८९ ॥ आडूर्जलप्लवद्रव्यम् । नञि लम्बेर्नलोपश्च ॥ ९० ॥ तुम्ब्यलाबूरुभे समे इत्यमरः । के श्र एरङ् चास्य ॥ ९१ ॥ कशब्दे उपपदे शृणातेरूः स्यादेरङ् आदेशः । कशेरूस्तृणकन्दे स्त्री । बाहुलकादुप्रत्यये कशेरुः क्लीबे पुंसि च । त्रो दुट् च ॥ ९२ ॥ तरतेरूः स्यात्तस्य दुट् । तर्दूः स्याद्दा-रुहस्तकः । दरिद्रातेर्यालोपश्च ॥ ९३ ॥ इश्च आश्च यौ तयोर्लोपः । दर्द्रूः कुष्ठप्रभेदः । नृतिशृध्योः कूः ॥ ९४ ॥ नृतूर्नर्तकः । शृधूरपानम् । ऋतेरम् च ॥ ९५ ॥ ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक् च । अन्दूदृम्भू-जम्बूकफेलूकर्कन्धूदिधिषूः ॥ ९६ ॥ एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्ब-न्धनम् । दृभी ग्रन्थे । निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके ।

